BENARES SANSKRIT SERIES;
A
COLLECTION OF SANSKRIT WORKS
EDITED BY THE
PANDITS OF THE BENARES SANSKRIT COLLEGE.
*No. 155.*

—:o:—

# वैशेषिकदर्शनम् ।

श्रीमदुदयनाचार्यविरचितकिरणावलीटीकासंवलित-
प्रशस्तपादप्रणीतभाष्यसहितम् ।

# THE APHORISMS OF THE VAISESHIKA PHILOSOPHY BY KANÂDA,

WITH THE COMMENTARY OF PRASASTAPÂDA,
AND THE GLOSS OF UDAYANÂCHÂRYA.

Edited by
MAHÂMAHOPÂDHYÂYA
VINDHYESVARÎ PRASÂDA DVIVEDÎ,
LIBRARIAN, GOVT. SANSKRIT COLLEGE, BENARES;
and Nyáyopádhyáya Kávyatírtha Dhundhiráj Sástri.

*Fasciculus III.*

*BENARES:*
PUBLISHED BY BRAJ BHUSHAN* DAS & CO.,
C. K. 40/5, Thatheri-Bazar, Near the Chauk.
*Printed by Krishna Das Gupta, Proprietor, at the Benares Printing Press and by Jai Krishna Das Gupta at the Vidya Vilas Press, Benares.*

1917.



* Formerly the publisher's name was put down in the abstract form "BRAJ B. DAS & CO.," but now the full name is given i. e. "BRAJ BHUSHAN DAS & CO.," so the customers are requested not to take it as another firm altogether.




॥ श्रीः ॥

# सभाष्यवैशेषिकदर्शनस्य

## विज्ञापनम् ।

विश्वनाथन्यायपञ्चाननाः "प्राणादिस्तु महावायुपर्यन्तो विषयो मत" इति कारिकां "यद्यप्यनित्यो वायुश्चतुर्विधस्तस्य चतुर्थी विधा प्राणादिरित्युक्तमाकरे" इति सिद्धान्तमुक्तावलीग्रन्थे व्याख्यातवन्तः । अत्र महादेवभट्टैर्मुक्तावलीप्रकाशे "आकरे प्रशस्तपादभाष्यादौ" (१) इत्यभिहितमित्युपलब्धवता प्रशस्तपादभाष्यमन्विष्यता तत्कस्य दर्शनस्य भाष्यमिति जिज्ञासुना मया श्रुतं खलु पण्डितवरश्रीजयनारायणतर्कपञ्चाननैर्यैः शङ्करमिश्रकृतवैशेषिकसूत्रोपस्कारस्वकृतकणादसूत्रविवृतिभ्यां सहितं वैशेषिकदर्शनं(२) एशियाटिक्सोसाइटीसभासमादेशपूर्वकं मुद्रितं तैरेव वैशेषिकदर्शनस्य प्रशस्तपादभाष्यं मुद्रणार्थमन्विष्यद्भिरेकमशुद्धं तद्भाष्यपुस्तकं सम्पादितं ततः परि-

(१) "तत्र कार्यलक्षणश्चतुर्विधः शरीरमिन्द्रियं विषयः प्राण इती"ति प्रशस्तपादभाष्ये वायुनिरूपणे ॥

(२) सर्वदर्शनसङ्ग्रहे माधवाचार्याः ॥

"द्वित्वे च पाकजोत्पत्तौ विभागे च विभागजे ।
यस्य न स्खलिता बुद्धिस्तं वै वैशेषिकं विदु"रिति ॥

यद्वा "विशेष एव वैशेषिकः" इति स्वकीयगणरत्नमहोदधिवृत्तौ वर्द्धमानसूरिः * ॥

* अयं वर्द्धमानसूरिः किरणावलीप्रकाशादिकर्तुर्वर्द्धमानोपाध्यायादन्य इवाभातीत्यग्रे वक्ष्यते ॥

शुद्धपुस्तकप्राप्तिमिच्छद्भिरेवाचिरेण परलोके गतं ततस्तत्सम्पादितपुस्तकावलोकनार्थं मया बहवो यत्नाः कृताः परन्तु तन्नासादितम् ॥

ततः परं चिरेण वाराणस्यामेवैकं कणादसूत्रपुस्तकं खण्डितप्रशस्तपादभाष्यपुस्तकानुगतं मया प्राप्तं ततश्च श्रीमद्गुरुचरणेभ्यः श्रुतमुदयनाचार्यकृता किरणावली प्रशस्तपादभाष्यस्यैव व्याख्येतीति तस्या अप्यन्वेषणे कृते किरणावली तद्व्याख्यानं वर्द्धमानोपाध्यायकृतं किरणावलीप्रकाशाख्यं (१) प्रकाशव्या-

---

(१) ग्रन्थोऽयं श्लोकसार्द्धषट्सहस्र्यात्मको * भागद्वये विभक्तस्तत्र प्रथमे भागे प्रारम्भवाक्यम् ॥

"मिलन्मन्दाकिनीमल्लीदामा मूर्ध्नि पुरद्विषः ।
विश्वबीजाङ्कुरप्रख्या वैधवी तां कलां नुमः ॥

कर्तव्यविघ्नविघातकं रविनमस्कारं निबध्नाति । विद्येति । यदिति सामान्यतोऽपि कर्तृनिर्देशे विद्याविद्ययोः सन्ध्यारजनीभ्यां निरूपणाद्रविरुद्देना लभ्यते" इत्यादि ॥

परिसमाप्तिवाक्यम् ॥

"समुच्चयभ्रमं निराकरोति । क्वचिदिति । सुषुप्त्यनन्तरं केवलादृष्टजन्या मनःक्रियेत्यर्थः । आशुभं चास्त्वित्यत्रेतिशब्दस्यार्थमाह । इतिशब्द इति । अत्र वर्तत इति शेषः ॥

यस्तर्कतन्त्रशतपत्त्रसहस्ररश्मि-
र्गङ्गेश्वरः सुकविकैरवकाननेन्दुः ।
तस्यात्मजोऽतिगहनां किरणावलीं तां
प्राकाशयत् कृतिमुदे बुधवर्द्धमानः ॥"

द्वितीयभागे प्रारम्भवाक्यम् ॥

---

* अत्र सर्वेषां ग्रन्थानां पत्त्रैकस्य पत्त्रद्वयस्य वा श्लोकपरिगणनया तत्तत्संपूर्णग्रन्थस्य श्लोकसंख्याऽनुमितास्ति सूक्ष्मपरिगणनायां किञ्चिन्न्यूनाधिकत्वमपि सम्भाव्यते ॥

ख्यानं च भगीरथठक्कुरकृतं द्रव्यप्रकाशिकाख्य(१)मपरं तार्कि-

"एकत्र सन्निपतितासितकण्ठबिम्ब-
मन्यत्र चन्द्रकिरणाहितशुभ्रभावम् ।
सन्ध्याजलाञ्जलिमनङ्गरिपोर्नमामि
हस्तप्रविष्टमिव पुण्यतमं प्रयागम् ॥

नतिवन्नुतेरपि प्रारिप्सितविघ्नविघातकत्वात् तामादौ कृतां निबध्नाति । तुष्टेरिति" ॥

परिसमाप्तौ ॥

"कारणभावादिति । कारणत्वं कार्यनिरूप्यमिति कार्यस्य प्राक्सत्त्वं सिद्ध-मित्यर्थः" । "यस्तर्कतन्त्रशतपत्रसहस्ररश्मि"रिति श्लोको ऽपि पूर्ववत् ॥

(१) ग्रन्थोऽयं श्लोकसार्द्धपञ्चसहस्रयात्मकः प्रकाशग्रन्थस्य पूर्वभागस्यैव व्याख्यारूपः द्वितीयभागस्य तु नोपलब्धः । तत्र प्रारम्भवाक्यम् ।

* कैशोरं कलयन्तं मायाकायं पुरातनं पुरुषम् ।
नन्दालिन्दनिकेतं निगमरहस्यं नमस्यामि ।
यः कैशोरे विश्वविख्यातकर्मा धर्माचार्यः श्रीमहादेवशर्मा ।
तत्सोदर्यो वर्द्धमानस्य सूक्तौ भावं मेघः सम्यगाविष्करोति ॥

मूर्ध्नि पुरद्विष इति पूर्वान्वयि । तेनान्यदपि बीजं जलसम्बन्धेनाङ्कुरतीति ध्वनिर्लभ्यते । विद्याविद्ययोरिति । नन्वत्र व्याख्याने विपरीतो रूप्यरूपकभाव इति चेदत्र विभक्तिविपरिणामेन तथैवान्वय इति मिश्राः ॥

परिसमाप्तिवाक्यम् ।

"यद्यपि यत्र तृतीयक्षण एव द्रव्यनाशस्तत्र न परत्वापरत्वोत्पत्तिर्द्वितीयक्षणे कालादिसंयोगस्यासमवायिकारणस्योत्पत्तेस्तृतीयक्षणे च द्रव्यस्यैव नाशादिति व्यभिचारो भवत्येव तथापि स्वरूपयोग्यतामात्रमिह साध्यम् । तत्सिद्धौ च नि-त्यत्वसमानाधिकरणायास्तस्याः फलोपधानव्याप्यतया परत्वादिसिद्धिरिति भा-वः । शेषं सुबोधम् ॥

विंशाब्दे जयदेवपण्डितकवेस्तर्काब्धिपारं गतः
श्रीमानेष भगीरथः समजनि श्रीचन्द्रपत्यात्मजः ।
श्रीधीरातनयेन तेन रचिता श्रीमन्महेशाग्रज-
श्रीदामोदरपूर्वजेन जयतादाचन्द्रमेषा कृतिः ॥
हंहो गिरीश करुणामयमानसोऽसि

कणिरोमणिरघुनाथभट्टाचार्यकृतं गुणप्रकाशविवृत्याख्यं गुणदीधितिरिति प्रसिद्धं (१) विवृतेरपि व्याख्यानं मथुरानाथतर्कवागीशकृतं गुणप्रकाशविवृतिरहस्याख्यं गुणदीधितिमाथुरीति प्रसिद्ध(२)मपरं रुद्रभट्टाचार्यकृतं गुणप्रकाशविवृतिभावप्रकाशिकाख्यं गुणप्रकाशविवृतिपरीक्षेति प्रसिद्धं (३) तृतीयं राम-

---

किं म[illegible]तु क्षिपसि दुःखमये शरीरे ।
[illegible]कर्म तादृगिति चेन्ननु चन्द्रचूड
तत्कर्म कारयसि किं हतचेतसं माम् ॥"

(१) ग्रन्थोऽयं श्लोकसार्द्धसहस्रात्मकः प्रकाशग्रन्थस्य द्वितीयभागस्य गुणग्रन्थात्मकस्यातिसंक्षिप्तव्याख्यानरूपः प्रथमभागस्य तु नोपलब्धः । तत्रान्ते खण्डितत्वात् परिसमाप्तिवाक्यं नावगतम् । प्रारम्भवाक्यं तु ॥

"ओं नमः सर्वभूतानि विष्टभ्य परितिष्ठते ।
अखण्डानन्दबोधाय पूर्णाय परमात्मने ॥

विनापि धर्मिनिरूपणं धर्मनिरूपणं भवत्येव, तद्धर्मत्वेन निरूपणं तन्निरूपणाधीनमिति चेत्, तद्धर्मितयापि निरूपणं तन्निरूपणाधीनमेव, निरूपितानि च गुणतद्विशेषवत्तया द्रव्याणीत्यत आह । यद्वेति ।" इत्यादि ॥

(२) ग्रन्थोऽयं श्लोकदशसहस्रात्मकः । तत्र प्रारम्भवाक्यम् ।

"कुञ्चिताधरपुटेन पूरयन् वंशिकां प्रचलदङ्गुलिपङ्क्तिः ।
मोहयन्नखिलवामलोचनाः पातु कोपि नवनीरदच्छविः ॥
श्रीमता मथुरानाथतर्कवागीशधीमता ।
गुणप्रकाशविवृतेर्भावो व्याख्यायते स्फुटम् ॥

निर्विघ्नं प्रारिप्सितग्रन्थपरिसमाप्तिकामनया कृतं भगवन्नमस्काररूपं मङ्गलं शिष्यशिक्षायै आदौ निबध्नाति । ओं नम इति । अनुमानदीधितिरहस्ये प्रपञ्चिततत्त्वमेतत्" ॥

अन्ते खण्डितत्वात् परिसमाप्तिवाक्यं नोपलब्धम् ॥

मथुरानाथेन गुणकिरणावलीग्रन्थस्तत्प्रकाशग्रन्थोपि व्याख्यातः स च स च तत्तद्रहस्याख्यया प्रसिद्धः ॥

(३) ग्रन्थोऽयं श्लोकचतुःसहस्रात्मकः । तत्र प्रारम्भवाक्यम् ।

"भवजलनिधौ भीमावर्ते जनस्य निमज्जतो

**कृष्णकृतं (१) चतुर्थं जयरामभट्टाचार्यकृतं (२) ततश्च किरणा-**

निरूपमकरालम्बो लम्बोदरप्रणयोत्सुकः ।
परमकरुणासिन्धुर्बन्धुर्नरस्य नतिप्रियो
हरतु दुरितं प्रारब्धे ऽस्मिन् प्रतीपमुमापतिः ॥
अभ्यामृशन् मृदुमृणाललताभ्रमेण
हस्तेन बाहुलतिकां बहुशः शिवायाः ।
आलोलकण्ठगतषण्मुखदत्तताला
बालो विभावयतु भावुकमेकदन्तः ॥
विद्यानिवासपुत्रस्य न्यायवाचस्पतेरियम् ।
कृतिः कृतधियां भूरि परितोषाय जायताम् ॥
गुणप्रकाशविवृतेरियं भावप्रकाशिका ।
इतः स्यादपि मन्दानां सफलो ऽत्र परिश्रमः ॥




तुष्ट्यतुष्ट्योः सुखदुःखयोरीश्वरे ऽसम्भवादाह प्रकाशे तुष्टिरनुक्तिरिति" ।

परिसमाप्तिवाक्यम् ।

"तस्मात् समवायिकारणमात्रवृत्तिरेव विभागस्तथा । न च साक्षात्परम्परासाधारणसमवायित्वं प्रयोजकं तस्य दुर्वचत्वाद् गुरुत्वाच्च । इति श्रीमहामहोपाध्यायश्रीविद्यानिवासभट्टाचार्यात्मजश्रीरुद्रभट्टाचार्यविरचिता गुणप्रकाशविवृतिपरीक्षा समाप्ता" ॥

(१) पुस्तकमिदमन्ते खण्डितमिति समाप्तिवाक्यं श्लोकपरिमाणं च नोपलब्धम् । प्रारम्भवाक्यं तु ।

"वाणि प्रसीद करुणामयि ते नतोऽस्मि
त्वं येन देवि सुतवत्यसि पुत्रिणीषु ।
येनोदधारि कुनिबन्धतमोऽन्धकूपे
मग्नाक्षपादकणभक्षमतं निरीक्ष्य ॥
यन्मूलमेव सुकृतानि तयोः कृतानि
व्यासादयः सदसि नित्यमुदाहरन्ति ॥
तस्याशयं गुणविवेचनमाकलय्य
ब्रूते शिरोमणिगुरोरिह रामकृष्णः ॥
निरूपणं शाब्दबोधानुकूलव्यापार" इत्यादि ।

(२) इदमप्यन्ते खण्डितमिति श्लोकसंख्या परिसमाप्तिवाक्यं च नावगतम् ।

वल्या द्वितीयं व्याख्यानं किरणावलीभास्करनामकं बलभद्र-मिश्रात्मजपद्मनाभविरचितं (१) च बहुयत्नेन बहुकालेन वाराणसीस्थसंस्कृतपाठशालीयपुस्तकालयाद्यनेकस्थानेभ्यः प्राप्तम् ॥

एतेषां प्राप्त्या परमप्रमुदितमनसा शास्त्रानुरागिणामुक्तग्रन्थानां पठनपाठनादिसौलभ्यमिच्छता मुद्राद्वारा प्रकाशनार्थं शोधनार्थं यतमानेन सर्वेषां तेषां पुस्तकत्रयस्य पुस्तकचतुष्टयस्य वा प्राप्तिसमीहावता मया भाष्यस्य पञ्च पुस्तकानि सम्पादि-

---

प्रारम्भवाक्यं तु ।

"निराकारं नराकारं जगदाकारमद्वयम् ।
गोपीदृगञ्जनं वन्दे निरञ्जनमहो महः ॥
धीरः श्रीजयरामोऽसौ युक्तिमुक्ताभिवन्दिताम् ।
गुणदीधितिगूढार्थां विवृणोति सरस्वतीम् ॥

प्रकाशे एकत्र अञ्जलिमूलस्थे अन्यत्र तदग्रस्थे हस्तारुण्येन स्वाभाविकजलशुक्लताभिभवा" दित्यादि ॥

(१) ग्रन्थोऽयं श्लोकत्रिसहस्र्यात्मकः ॥

प्रारम्भवाक्यम् ।

"उपदिष्टा गुरुचरणैरस्पृष्टा वर्द्धमानेन ।
किरणावल्यामर्थास्तन्यन्ते पद्मनाभेन ॥
विलसद्वर्द्धमानापि तिरोहितदिवाकरा ।
सकलार्थप्रकाशाय न क्षमा किरणावली ॥
बलभद्रमुखाम्भोजवचनादुदयाचलात् ।
उदितो भास्करस्तस्मादादरेण निषेव्यताम् ॥

विघ्नध्वंसकामनया कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति विधेति" ॥

परिसमाप्तिवाक्यम् ।

"यस्तर्कदुस्तरतरार्णवकर्णधारो
वेदान्तवर्त्मनिरताध्वगसार्थवाहः ।
श्रीपद्मनाभरचितेन दिवाकरेण
तुष्टोऽमुनास्तु सुकृती बलभद्रमिश्रः" ॥

तानि परन्तु सर्वाणि तानि विकलान्यत्यन्ताशुद्धानि प्रकरणं पत्रं पृष्ठं वा दूरे स्थीयतां यदेका पङ्क्तिरपि परिष्कृता तेषु नोपलब्धेत्यत्यन्तसमादरणीयस्य भाष्यस्य पठनपाठनादिप्रचारस्तु दूरे गतो यत् खलु परिशुद्धं सम्पूर्णमेकमपि पुस्तकं नोपलभ्यत इत्यत्यन्तखेदकरं विचारयता मया महता यत्नेन सर्वेषां तेषां संयोगेनैकं पुस्तकं समाकलय्य याथातथ्येन परिशोध्य सम्पादितम्। इदृशीं दशां गतस्य भाष्यस्य दर्शनेन तत्र सूत्राणामवतरणप्रतीकाद्यदर्शनेन चेदमेव प्रशस्तपादभाष्यमिति पूर्वं निश्चयो न जातः पश्चाच्चोदयनाचार्यवर्द्धमानोपाध्यायप्रभृतिभिः कन्दलीकारप्रभृतिभिश्च पूज्यैर्महापण्डितैः साक्षात् परम्परया वा व्याख्यातत्वदर्शनाद् विपुलसमादरस्तत्र जात इति॥

अस्य ग्रन्थस्य मुद्रणसमये भाष्ये सूत्राणां प्रतीकाद्यनुपलब्ध्या प्रत्येकसूत्रेण सह भाष्यस्य संयोजनमसुकरं विचारयता शास्त्रमूलस्य सूत्रपाठस्यामुद्रणमयुक्तं विभावयता मया किरणावल्यामुदयनाचार्येण च सूत्रैः सह भाष्यस्य यथासम्भवं संयोजने कृते तत्करणे सिद्धसाधनभिया च प्रथमं केवलः सूत्रपाठो (१) मु-

---

(१) सूत्रलक्षणं पराशरपुराणे १८ अध्याये।

"अल्पाक्षरमसन्दिग्धं सारवद् विश्वतो मुखम्।

अस्तोभमनवद्यं तत् सूत्रं सूत्रविदो विदु"रिति॥

भामत्यां प्रथमाध्याये प्रथमपादे वाचस्पतिमिश्रा अपि "सूत्रं च बह्वर्थसूचनाद्भवति। यथाहुः॥

लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च।

सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः" इति॥

मीमांसावार्तिके भट्टकुमारिला अपि। "लक्षणार्थानि सूत्राणीति प्रचक्षते" "सूचनात् सूत्रम्" इत्यपि च॥

द्रितः । तच्छोधनार्थं चत्वार्यादर्शपुस्तकानि सम्पादितानि । तत्र प्रथममेसियाटिक्सोसाइटीसभानिदेशेन मुद्रितं तत्सूत्रपाठस्यानेकदर्शनपरिशीलनेनावगलिताशेषतत्त्वस्याविच्छिन्नबुद्धिवैभवस्योपस्कारकृतः शङ्करमिश्रस्य तथैव कणादसूत्रविवृतिकृतः श्रीजयनारायणतर्कपञ्चाननस्य सम्मतत्वात् तत्पाठो मया मूले स्थापितः । द्वितीयं भाष्यानुगतं वङ्गाक्षरलिखितं तृतीयं मूलमात्रम् । अनयोः पाठभेदाष्टिप्पण्यामधः स्थापिताः (१) । चतुर्थं च श्रीगङ्गाधरकविरत्नकविराजकृतभारद्वाजवृत्तिभाष्यसहितं वङ्गाक्षरमुद्रितमिदं पुस्तकं यत्र कुत्रचित् पाठभेदे विकल्पनिरासार्थं दर्शनमर्हतीति ॥

भाष्यस्य (२) च प्रसन्नगम्भीरार्थत्वाद् व्याख्यानसापेक्षत्वात् किरणावल्याद्यासाधारणव्युत्पत्तिसम्पादकत्वाद्यनेकगुणविशिष्टत्वात् तत्सहितभाष्यस्य मुद्रणं सुयुक्तं विचार्य (३) तथैव मुद्र-

---

(१) अस्मिन् ग्रन्थे पाठभेदबाहुल्ये सूत्राणां न्यूनाधिकत्वे च कारणान्यग्रे वक्ष्यन्ते ॥

(२) भाष्यलक्षणं पराशरपुराणे १८ अध्याये ॥

"सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः" ॥

प्रसङ्गाद्वार्तिकलक्षणमपि तत्रैव ॥

"उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते ।
तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः" ॥

(३) भट्टश्रीधराचार्यकृतं न्यायकन्दल्याख्यं जगदीशभट्टाचार्यकृतं भाष्यसूक्त्याख्यं व्याख्यानं च मुद्रणारम्भात् पश्चादुपलब्धमिति न ताभ्यामुपयोगः सम्पादितः । भिक्षुवार्तिकं तु भाष्यव्याख्यानमद्यावधि न प्राप्तम् । केचिदाहुस्तद्वार्तिकं पञ्चशिखाचार्यविरचितं "भिक्षोः पञ्चशिखस्याहं शिष्यः परमसम्मत" इत्युक्तेः । तस्मिन्ननुपलब्धे तदपि भाष्यस्यार्षत्वबोधकं प्रमाणं भवितुमर्हतीति ।

यितुमारब्धम् । किरणावलीप्रकाशादिग्रन्थानां मुद्रणं तु ग्रन्थबाहुल्यादनल्पपरिश्रमचिरकालसाध्यत्वादिदानीमुपेक्ष्य तेभ्यो विषमपदटिप्पणी सङ्कलिता मुद्रयितुमारब्धा च । भाष्ये ऽप्याचार्यसम्मतः पाठः प्रायो मूले स्थापितो ऽन्ये पाठभेदाष्टिप्पण्याम् ॥

भाष्यस्यापि पञ्चादर्शपुस्तकानि । तत्र प्रथमं गुणग्रन्थात्मकं (१) सम्पूर्णम् । द्वितीयमाद्यन्तहीनमत्यन्ताशुद्धं नवीनम् । तृतीयं प्राचीनं द्रव्यग्रन्थात्मकं सम्पूर्णम् । चतुर्थं जीर्णं विलुप्ताक्षरं द्रव्यग्रन्थात्मकं सम्पूर्णम् । पञ्चमं चाद्यन्तविहीनं नवीनं वङ्गाक्षरलिखितम् ॥

किरणावल्या अष्टावादर्शपुस्तकानि । तत्र प्रथममाद्यन्तरहितं द्रव्यग्रन्थात्मकं प्राचीनं शुद्धप्रायम् । द्वितीयं द्रव्यग्रन्थात्मकमन्तहीनं प्राचीनं परिशुद्धम् । तृतीयं मध्ये किञ्चित् खण्डितं जीर्णं शुद्धप्रायं द्रव्यग्रन्थात्मकम् । चतुर्थं ताडपत्त्रस्थं मैथिलाक्षरलिखितं प्राचीनं द्रव्यग्रन्थात्मकं सम्पूर्णम् । पञ्चमं गुणग्रन्थात्मकं प्रायः शुद्धं नवीनं सम्पूर्णम् । षष्ठमाद्यन्तहीनं गुणग्रन्थात्मकं प्राचीनं शुद्धप्रायम् । सप्तमं सम्पूर्णं गुणग्रन्थात्मकं मैथिलाक्षरलिखितं ताडपत्त्रस्थम् । अष्टमं वङ्गाक्षरलिखितं द्रव्यग्रन्थात्मकं खण्डितम् । अत्रापि प्रकाशकारसम्मतः पाठः प्रायो मूले स्थापितो ऽन्ये पाठभेदाष्टिप्पण्यामिति ॥

---

मया चैवमनुमीयते तद्वार्तिकं विज्ञानभिक्षुकृतमिति ॥

(१) भाष्यादयः सर्वे ग्रन्था ग्रन्थकारैर्भागद्वये विभाजिताः सन्ति आरम्भतः आत्मनिरूपणान्ताः द्रव्यग्रन्थात्मकास्ततः परं गुणग्रन्थात्मका इति सर्वेषु पुस्तकेषु दृश्यते एवमध्यायादिक्रमश्च नास्ति ॥

अपि च ग्रन्थान्तरे प्रमाणभूतानामतिप्राचीनानामुक्तग्रन्थानां दुरूहानां यत्र कुत्रचित् स्थलविशेषे व्याख्याकारैरप्यव्याख्याते ऽर्थानवबोधे ऽशुद्धिसम्भवे ऽपि बहुपुस्तकसम्मतः पाठो मूले स्थापितः न तु स्वबुद्ध्या परिवर्तितः पाठ इति ॥

---

यद्यपि शिष्यप्रशिष्यैर्नानारूपेण निरूपणाद्वा मतवादिभिराग्रहेण कैश्चिदपि साहसिकैर्निर्मूलकिंवदन्तीश्रवणादिना हेत्वाभासैर्भ्रमात्मकानुमानप्रमाणपूर्वकं लेखनाद्वा बहूनां पुरुषाणामेकनाम्ना प्रसिद्ध्या वानिर्वचनीयेन येन केनापि कारणेन वार्वाचीनानामपि निबन्धकाराणां याथार्थ्येन इयत्तया निर्विवादं जीवनवृत्तान्तादिः प्रायो न ज्ञायते किं पुनश्चिरन्तनानां कणादगौतमप्रभृतीनां महर्षीणामन्येषामपि ऋषिकल्पानां तथापि यथोपलभ्यमानमत्र निरूप्यते ॥

तत्र तावद्भगवतः सूत्रकारस्य महर्षेः कणादस्य (१) कस्मिन्

---

(१) पद्मपुराण उत्तरखण्डे २०७ अध्याये * पार्वतीं प्रति शिववाक्यम् ॥

"प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम् ।
मच्छक्त्यावेशितैर्विप्रैः संप्रोक्तानि ततः परम् ॥
कणादेन च संप्रोक्तं शास्त्रं वैशेषिकं महत् ।
गौतमेन तथा न्यायं सांख्यं तु कपिलेन वै ॥" इत्यादि ॥

प्रशस्तपादभाष्ये ऽपि समाप्तौ ॥

"योगाचारविभूत्या यस्तोषयित्वा महेश्वरम् ।
चक्रे वैशेषिकं शास्त्रं तस्मै कणभुजे नमः ॥" इति ॥

"प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः ।
पदार्थधर्मसङ्ग्रहः प्रवक्ष्यते महोदयः ॥"

---

* पुस्तकानुसारेण २०७ तमे ऽध्याये परिगणनया २०१ तमे ऽध्याये । एतेन लेखकप्रमादात् पुस्तकवैकल्यं सम्भाव्यते ॥

देशे कस्मिन् काले वाविर्भावो जात इतीदानीं सम्यङ् निश्चेतुं न शक्यते परन्तु श्रूयत इयं किंवदन्ती महर्षेः कश्यपस्य कुले जातो (१) मिथिलादेशे तस्य निवासस्थानमद्यावधि वर्तते च ॥

ये तु सूत्रपाठपुस्तकेषु बहवः पाठभेदाः सूत्रभेदाश्चोपलभ्यन्ते ते लेखकशोधकप्रमादादिनेत्यनुमीयते । भगवान् प्रशस्तपादश्च सर्वाणि सूत्राण्येकदैव मनसि निधाय तानि व्याचिख्यासुरवतरणप्रतीकादिधारणं विनैव सूत्राणां छायारूपं तदुक्तपदार्थप्रतिपादकं भाष्यं (२) प्रणीतवानिति नास्ति तद्द्वारा

इति भाष्यव्याख्यानावसरे "स्मर्यते हि यत् कणादो मुनिर्महेश्वरनियोगप्रसादावधिगम्य शास्त्रं प्रणीतवानि"त्युदयनाचार्याश्च ॥

(१) "कणादः काश्यपः समौ" इति त्रिकाण्डशेषः ॥

अन्योऽपि मथुरानाथतर्कवागीशान्तेवासी रघुदेवनामा वङ्गदेशीयः कणाद इति प्रसिद्धः, यश्चावयवग्रन्थं व्याख्यातवान् ॥

यथा तत्कृतभाषारत्ने ऽपि प्रारम्भे ।

"चूडामणिपदाम्भोजभ्रमरीकृतमौलिना ।
संक्षिप्य श्रीकणादेन भाषारत्नं वितन्यते ॥"

समाप्तौ "इति श्रीकणादतर्कवागीशभट्टाचार्यविरचितं भाषारत्नं समाप्तम्" ॥

अत एव ॥

"याभ्यां वैशेषिके तन्त्रे सम्यग् व्युत्पादितो ऽस्म्यहम् ।
कणादभवनाथाभ्यां ताभ्यां मम नमः सदा" ॥

इति शङ्करमिश्रोक्तिः सङ्गच्छते ॥

(२) पराशरपुराणे १८ अध्याये ॥

"पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना ।
आक्षेपेषु समाधानं व्याख्यानं पञ्चलक्षणम् ॥"

पदच्छेदादिः प्रत्येकमपि लक्षणमन्यथा पदपाठादौ रावणभाष्यत्वव्यवहारानुपपत्तेः । यत्तु "सूत्रेषु वैशद्याभावाद्भाष्यस्य च विस्तरत्वा"दिति किरणावलीग्रन्थव्याख्यानावसरे पद्मनाभेन किरणावलीभास्करे "ग्रन्थान्तरेणान्यथासिद्धिम-

सूत्राणां पाठभेदादिनिर्णयावकाशः । भारद्वाजवृत्ते (१) विलुप्तप्रायतया तयापि तथैव । विद्वद्वरशङ्करमिश्रकृतवैशेषिकसूत्रोपस्कारेणैवेदानीं सूत्राणां पठनपाठनादिप्रचारस्तदभावे सूत्राणां योजनासम्भवो भवेदिति ॥

भाष्यकारस्य च भगवतः प्रशस्तपादस्याविर्भावे देशकालनिर्णयाभावेपि केचिद्विद्वांसो वात्स्यायनादेरिव परमर्षित्वं (२) गर्गाचार्यकपिलाचार्यपञ्चशिखाचार्यादेरिवाचार्यतामपि विहायार्वाचीनाचार्याणामिवाचार्यतां निश्चिन्वन्ति तत्र विचार्यते । भाष्यपुस्तकेषु सर्वेष्वपि जीर्णप्राचीननवीनेषु "इति प्रश-

पाकरोति सूत्र इति । भाष्यस्य रावणप्रणीतस्य" । इति व्याख्यातं तच्चिन्त्यम् ॥

(१) तस्य पूर्वं सत्त्वे शङ्करमिश्रोक्तिः प्रमाणम् । वैशेषिकसूत्रोपस्कारे प्रथमाध्याये यतो ऽभ्युदयनिःश्रेयससिद्धिः स धर्म इति सूत्रव्याख्याने "वृत्तिकृतस्तु अभ्युदयः सुखं निःश्रेयसमेककालीनसकलात्मविशेषगुणध्वंसः प्रमाणं च धर्मे देवदत्तशरीरादिकं भोक्तृविशेषगुणप्रेरितभूतपूर्वकं कार्यत्वे सति तद्भोगसाधनत्वात् तन्निर्मितस्रग्वदित्याहु"रिति ॥

श्रीगङ्गाधरकविरत्नकविराजकृतभारद्वाजवृत्तिभाष्यसहितवैशेषिकदर्शनपुस्तके मुद्राप्रमादाद्वान्यकारणाद्वृत्तेर्भाष्यस्य च पार्थक्यं नोपलभ्यते तत्र शङ्करमिश्रसम्मतसूत्रपाठाद् भाष्यानुगतपुस्तकसूत्रपाठाच्च सूत्रपाठभेदस्तु वर्तत एव क्वचिदध्यायाह्निकादिक्रमभेदो ऽप्युपलभ्यते ॥

(२) ऋषिलक्षणमार्यविद्यासुधाकरे ॥

अथैषामृषीणां चातुर्विध्यमुक्तं पूर्वाचार्यैः ॥

"ऋषीणामृषिपुत्राणामृषिकाणां स्वयंभुवाम् ।
तथा नामाभिजानीयाद्यथैषां मन्त्रदृष्टयः ॥
प्रवरैर्ये समाख्याता ऋषयस्त इति श्रुतिः ।
तत्पुत्रपौत्रनप्तार ऋषिपुत्रा इति स्मृताः ॥
राजन्यवैश्या ऋषिकाः स्त्रियस्तास्तिर्यग्योनयः ।
देवाऽदेवाप्सरो नद्यो गन्धर्वास्ते स्वयम्भुवः ॥" इति ॥

एषामुदाहरणान्यपि तत्रैवोक्तानि विस्तरभयान्नोक्तमत्रास्माभिरिति ॥

स्तपाद(१)विरचितं द्रव्यादिषट्पदार्थभाष्यं समाप्त”मित्येवोपलभ्यते न तु प्रशस्तपादाचार्यविरचितमिति । भाष्यव्याख्याकारैरप्युदयनाचार्यभट्टश्रीधराचार्यप्रभृतिभिः कृताप्यर्वाचीनाचार्यत्वेन न तस्योल्लेखः कृतः । किन्तु गौतमसूत्रवृत्त्याद्यनेकनिबन्धकारैर्विश्वनाथन्यायपञ्चाननैः “प्राणादिरित्युक्तमाकरे” इत्युक्तत्वाद्वात्स्यायनादेरिव परमर्षित्वमवगम्यते । अयमेव निबन्धकाराणां सम्प्रदायो यदार्षग्रन्थानेवाकरत्वेन प्रमाणयन्ति (२) ॥

(१) एकस्मिन् नवीनपुस्तके “प्रशस्तकरीय*भाष्ये द्रव्यपदार्थः समाप्त” इति लिखितमस्ति तस्य सर्वेभ्यो ऽपि वैलक्षण्यात्तत्र मूलं मृग्यम् । आरम्भे पदार्थधर्मसंग्रहो ऽन्ते तु पदार्थप्रवेशः पदार्थोद्देश इत्यपि क्वचित् । क्वचित् कृतिरियं प्रशस्तचरणपादानां क्वचिच्च कृतिरियं प्रशस्तपादपादानामित्यपि दृश्यते ॥

(२) तार्किकशिरोमणिः रघुनाथभट्टाचार्यो ऽनुमानदीधितौ हेत्वाभासप्रकरणे ॥

“अप्रामाण्यशङ्काद्यन्वयानुविधानं तु भ्रमत्वज्ञानशून्याविरोधिज्ञानस्य प्रतिबन्धकतया तदपसारणप्रयुक्तमित्यस्याकरे व्यक्तत्वात्” । “आकरे न्यायदर्शनवात्स्यायनभाष्ये” इति तद्व्याख्यातारः ॥

प्रौढमनोरमायां भट्टोजिदीक्षितैरप्युक्तम् । “यत्तु तत्पौत्रेण व्याख्यातं तिङ्कृत्तद्धितसमासैरिति परिगणनादधिनाभिहिते ऽपि सप्तमी । तन्न । परिगणनस्याकरे प्रत्याख्यातत्वात् ।” अत्र लघुशब्दरत्ने हरिदीक्षितैरुक्तम् । “आकरे अनभिहितसूत्रे भाष्ये” ॥

अपि च । “क्वौ विधिं प्रति न स्थानिवदित्यस्यैव सार्वत्रिकत्वादिति स्पष्टमाकरे” इति प्रौढमनोरमायाम् । “आकर इति दीर्घाद्वेवीटामिति सूत्रे नः पदान्तसूत्रे च भाष्यकैयटयोरित्यर्थः ।” इति शब्दरत्ने ऽनेनाकरत्वेन पाणिनीयसूत्रपातञ्जलभाष्यग्रहणं सम्भवति कैयटग्रहणं तु तदर्थदृढत्वबोधकं अन्यथाकरत्वेन प्रमाणोपन्यासे कृते प्रकरणान्तरे तन्मतखण्डनानुपपत्तेरिति ॥

केचित्त्वाकरपदेन पाणिनिप्रणीतसूत्रपाठस्यैव ग्रहणं भाष्यकैयटयोस्तु तदर्थ

* केचित्तु चरित्रसिंहगणिविरचितषड्दर्शनवृत्तिव्याख्याने हरिभद्रसूरिकृतषड्दर्शनसमुच्चये प्रशस्तकर इत्यभिहितमित्याहुः ॥

अपरं च । "पृथिव्यादीनां पञ्चानामपि भूतत्वेन्द्रियप्रकृतित्ववाह्यै(१)कैकेन्द्रियग्राह्यविशेषगुणवत्त्वानि" इति भाष्यव्याख्यानावसरे उदयनाचार्यैरुक्तम् "इन्द्रियप्रकृतित्वमिन्द्रियोपादानत्वं तच्च नभसो ऽवच्छिन्नानवच्छिन्नभेदकल्पनयोपपादनीयम् । अन्यथा भूतेभ्य (२) इति पञ्चमी समानतन्त्रे स्वतन्त्रे(३) च मनस एतद्वैधर्म्यं न स्यादिति" एतेन महर्षिणा गौतमेन समानतन्त्रत्वमायातम् ॥

अन्यच्च । "गुणाः रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाश्चेति कण्ठोक्ताः सप्तदश चशब्दसमुच्चिताश्च गुरुत्वद्रवत्वस्नेहसंस्कारादृ-

---

प्रतिपादकत्वेनोपचारतया यत "इति भाष्यं" "इति कैयट" इति पृथङ् निर्देशोऽपि ग्रन्थकारैः कृतो यथा ॥

"यत्तु प्राचीनप्रक्रियायां व्याचक्षाणा आहुः । नञ्विशिष्टेनोत्तरपदेन सादृश्यादयो लक्ष्यन्त इत्यादि । तत् स्वकीयग्रन्थसन्दर्भविरुद्धमाकरविरुद्धं च । यदपि विचारचिन्तामणावुक्तम् ।

समासे तूत्तरपदप्राधान्यं मासजातवत् ।
नञर्थमिलितं तच्च सदृशादीनि लक्षयेदिति ॥

तदप्युक्तरीत्या भाष्यविरुद्धमिति स्पष्टमेवे"त्याहुस्तच्चिन्त्यम् ॥

अन्येत्वार्षग्रन्थान् खण्डयन्ति मनुष्यग्रन्थान् वा प्रमाणयन्तीत्यन्यदेतत् ॥

(१) यद्यपि वह्धातोः इस्प्रत्यये कृते वहिष्शब्दे सिद्धे ततश्च यञ्प्रत्यये "वहिषष्टिलोपो यञ्चे"ति टिलोपे च कृते वाह्यशब्दो वकारादिः सम्भवति तथापि सर्वेषु प्राचीनपुस्तकेषु बकारादिदर्शनादत्रापि तथैव लिखितः ॥

(२) घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्य इति गौतमसूत्रम् ॥

(३) अत्र प्रशस्तपादभाष्यमालम्ब्यैव स्वतन्त्रत्वं निर्वहते "भूयस्त्वाद् गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः । तथापो ज्योतिर्वायुश्च रसरूपस्पर्शाविशेषाद्रसनचक्षुस्त्वगिन्द्रियाणा"मिति काणादसूत्रे पृथिव्यादीनां चतुर्णामेवेन्द्रियप्रकृतित्वस्योक्तत्वात् ॥

ष्टशब्दाः सप्तैवेत्येवं चतुर्विंशतिर्गुणाः" इति भाष्यं "रूपादयः सप्तदश कण्ठोक्ताः सूत्रकारेण । अभ्युपगमसिद्धान्तन्यायेनान्येऽपि सप्त सिद्धगुणभावास्तत्रतत्र तेषां व्युत्पादना"दित्युदयनाचार्यैर्व्याख्यातम् । अस्य व्याख्यानावसरे महापण्डितैर्वर्द्धमानोपाध्यायैरुक्तम् । "अभ्युपगमेति । साक्षादसूचितत्वे ऽपि समानतन्त्राभिहितत्वेनाभ्युपगम्यमानत्वात् ।" एतेन सूत्रकारेण महर्षिणा कणादेन समानतन्त्रत्वं भाष्यकारस्य स्फुटतया व्युत्पादितम्(१) । श्रुतं च मया नैयायिकवृद्धेभ्यो "नैयायिको ऽक्षपादः प्रशस्तपादः प्रशस्तचरणो ऽक्षचरण इति महर्षेर्गौतमस्यैव नामभेदा" इति ॥

अपि च । भट्टश्रीश्रीधरेण न्यायकन्दलीग्रन्थे(२)

(१) अत्र समानतन्त्रत्वेन गौतमसूत्रग्रहणं नैव सम्भवति तेषु गुरुत्वद्रवत्वस्नेहादृष्टानां नामान्येव न सन्ति । शब्दसंस्कारयोरदृष्टपदेन धर्माधर्मयोरुपादानं तु यत्र कुत्रचिद्वर्त्तत इति ॥

(२) ग्रन्थो ऽयं श्लोकषट्सहस्र्यात्मकस्तत्र प्रारम्भवाक्यम् ।

"अनादिनिधनं देवं जगत्कारणमीश्वरम् ।
प्रपद्ये सत्यसङ्कल्पं नित्यविज्ञानविग्रहम् ॥
ध्यानैकतानमनसो विगतप्रचाराः
पश्यन्ति यं कमपि निर्मलमद्वितीयम् ।
ज्ञानात्मने विघटिताखिलबन्धनाय
तस्मै नमो भगवते पुरुषोत्तमाय ॥

ग्रन्थारम्भे ऽभिमतदेवतां शास्त्रस्य च प्रणेतारं गुरुं श्लोकस्य पूर्वार्द्धेन नमस्यति । प्रणम्येति । कर्मारम्भे हि देवता गुरवश्च नमस्क्रियन्त इति शिष्टाचारो ऽयम् ॥"

परिसमाप्तिवाक्यम् ॥

"परस्परोपसंश्लेषो भिन्नानां यत्कृतो भवेत् ।
समवायः स विज्ञेयः स्वातन्त्र्यप्रतिरोधकः ॥

इति समवायपदार्थः ॥

सुवर्णमयसंस्थानरम्या सर्वोत्तरास्थितिः ।
सुमेरोः शृङ्गवीथीव टीकेयं न्यायकन्दली ॥
अक्षीणनिजपक्षेषु ख्यापयन्ती गुणानसौ ।
परप्रसिद्धसिद्धान्तान् दलति न्यायकन्दली ॥
आसीद्दाक्षिणराढायां द्विजानां भूरिकर्मणाम् ।
भूरिसृष्टिरिति ग्रामो भूरिसृष्टिजनाश्रयः ॥
अम्भोराशेरिवैतस्माद्बभूव क्षितिचन्द्रमाः ।
जगदानन्दनाद्वन्द्यो बृहस्पतिरिव द्विजः ॥
तस्माद्विशुद्धगुणरत्नमहासमुद्रो
विद्यालतासमवलम्बनभूरुहोऽभूत् ।
स्वच्छाशयो विविधकीर्तिनदीप्रवाह-
स्वान्त—सम्पद्बहुलो ? बलदेवनामा ॥
तस्याभूद् भूरियशसो विशुद्धकुलसम्भवा ।
अव्वोकेत्यर्चितगुणा गुणिनो गृहमेधिनी ॥
सच्छायः स्थूलफलदो बहुशाखो द्विजाश्रयः ।
तस्याः श्रीधर इत्युच्चैरर्थिकल्पद्रुमादभूत् ॥
असौ विद्याविदग्धानामसूत श्रवणोचिताम् ।
षट्पदार्थहितामेतां रुचिरां न्यायकन्दलीम् ॥
त्र्यधिकदशोत्तरनवशतशाकाब्दे ९१३ न्यायकन्दली रचिता ।
श्रीपाण्डुदासयाचितभट्टश्रीश्रीधरेणेयम् * ॥

---

* माधवाचार्येण सर्वदर्शनसङ्ग्रहे "श्रीधराचार्या" इत्यभिहितम् । अयं च भट्टत्वाद्दाक्षिणात्य इति न भ्रमितव्यं किन्तु गौडदेशापरपर्यायवङ्गदेशान्तर्गते गङ्गायाः पश्चिमे तटे राढदेशे भूरिश्रेष्ठिक इति प्रसिद्धे भूरिसृष्टिग्रामे पूर्वपुरुषपरम्परया निवासित्वाद् भट्टाचार्यत्वाच्च वङ्गदेशीयः । तथोक्तम् ॥

वङ्गदेशं समारभ्य भुवनेशान्तगं शिवे ।
गौडदेशः समाख्यातः सर्वविद्याविशारदः ॥

इति शक्तिसङ्गमे ॥

तथा च प्रबोधचन्द्रोदयनाटके प्रथमाङ्के ॥

गौडं राष्ट्रमनुत्तमं निरूपमा तत्रापि राढापुरी

"प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः ।
पदार्थधर्मसङ्ग्रहः प्रवक्ष्यते महोदयः ॥"

इति भाष्यव्याख्यानावसरे "ग्रन्थारम्भेऽभिमतदेवतां शास्त्रस्य च प्रणेतारं गुरुं श्लोकस्य पूर्वार्द्धेन नमस्यति । प्रणम्येति । कर्मारम्भे हि देवता गुरवश्च नमस्क्रियन्त इति शिष्टाचारोऽयम् ।" एतेन महर्षेः कणादस्य शिष्यत्वात् तत्समानका-

---

समाप्तेयं प्रशस्तभाष्यन्यायकन्दलीटीका ॥"

श्रीयुतबुलरसाहबमहाशयावलोकितपुस्तके च लेखकनिमितश्लोकत्रयमधिकं वर्तते ॥

"कणादकृतमूलदृब्धप्रशस्तभाष्यद्रुमावबद्धा च ।
श्रीधरहृदयोपवने विलसन्ती न्यायकन्दली रम्या ॥" इत्यादि ॥

---

भूरिश्रेष्ठिकनाम धाम परमं तत्रोत्तमो नः पिता ।
तत्पुत्राश्च महाकुला न विदिताः कस्यात्र तेषामपि
प्रज्ञाशीलविवेकधैर्यविनयाचारैरहं चोत्तमः ॥

एवमन्येपि पूर्वपुरुषपरम्परया राढाप्रदेशनिवासिनो वङ्गदेशीया एव यथा च नैषधचरितादिटीकाकारश्रीप्रेमचन्द्रतर्कवागीशा अपि ॥

"यस्याभवज्जननभूः किल शाकराढा
राढासु गाढगरिमा गुणिनां निवासात् ।
ग्रामो निकामसुखवर्द्धनवर्द्धमान-
राष्ट्रान्तरालमिलितः सरितः प्रतीच्याम् ॥" इत्यादि ॥

एवमन्ये ऽपि भट्टकुमारिलवाणभट्टप्रभाकरभट्टादयो मैथिलसारस्वतकान्यकुब्जा एव भट्टकुमारिलस्तु मिथिलादेशान्तर्गत "भटपुरा" ग्रामनिवासी मैथिलः । अत एव न्यायकणिकायां "अथाहुरत्र भवन्तो वार्तिककारमिश्राः ॥

यावदज्ञातसन्दिग्धं नेयं तावत् प्रमित्स्यते ? ।
प्रमिते तु प्रमातृणां प्रमीत्सुक्यं विहन्यते ॥" इति ॥

एवमन्यत्रापि तस्मिन्नेव ग्रन्थे ।

"कार्ये ज्ञाते ऽधिकारः स्यादि" त्यादिवाचस्पतिमिश्रोक्तिः सङ्गच्छते । एवं तत्तद्ग्रन्थेषु स्पष्टमुपलभ्यते विस्तरभयान्नात्र प्रपञ्चितम् ॥

लिकत्वं सम्भवति । श्रीधरेणैव ग्रन्थोपसंहारे "प्रशस्तभाष्ये" त्याद्युक्तम् । तथात्वे ऽपि प्रशस्तस्य ऋषित्वं बहुषु गोत्रप्रवरनिर्णयग्रन्थेषू(१)पलभ्यते । एतदभिप्रायेणैव पद्मनाभेन किरणावलीभास्करे सृष्टिसंहारविधिव्याख्याने "वृत्तिलब्धा" इति भाष्यस्य व्याख्या "लब्धवृत्तय" इति किरणावली "पूर्वप्रयोगानुरोधेनाह । लब्धवृत्तय इति । भाष्यं त्वार्षमिति भावः" इति व्याख्याता । कुत्रचित् प्रशस्तपादः क्वचित् प्रशस्तचरणो ऽन्यत्र प्रशस्तकरस्तथा प्रशस्तदेवश्चेत्यादिदर्शनेन प्रशस्त इति मुख्यं नाम देवादिशब्दस्त्वौपचारिक इत्यपि सम्भाव्यते ॥

अपि च पुराणादिषु ज्योतिःशास्त्रे च संहिताप्रणेतुर्महर्षेर्गर्गस्याचार्यत्ववत् (२) सांख्यदर्शनकर्तुर्महर्षेर्भगवतः

---

(१) "प्रवरैर्ये समाख्याता ऋषयस्त इति श्रुतिः तत्पुत्रपौत्रनप्तार" इत्याद्युक्तमधस्तात् । बौधायनसूत्रे प्रवराध्याये आङ्गिरसगणान्तःपातिशरद्वन्तगणे पठितः "प्रशस्ता" इति ॥

विद्वद्वरलक्ष्मणेन तु प्रवररत्नग्रन्थे आङ्गिरसगणे गौतमवर्गे पठितो यथा । "अथाङ्गिरसः । ते त्रिविधाः । गौतमाः भरद्वाजाः केवलाङ्गिरसश्चेति । आद्या गौतमानां सप्त वंशाः । आयास्याः । शरद्वन्तः । कौमण्डाः । दीर्घतमसः । कारेणुपालयः । वामदेवाः । औशनसः । इति सप्तेति बौधायनकात्यायनौ" । ततश्च "अथौशनसः । दिश्यः । प्रशस्तः । स्वरूपाक्षः । महोदरः । विजघनः । यशामितः । निष्कथः । सुबुद्धिः । निहतः । गुहः । इति बौधायनकात्यायनौ । एते त्रिप्रवराः । आङ्गिरसौशनसगौतमा इति" । एतेषां नामानि पुस्तकानुसारेण लिखितानि आर्षत्वान्न स्वबुद्ध्या परिशोधितानि ॥

(२) गर्गसंहितायां विज्ञानखण्डे १० अध्याये ।

"गर्गाचार्येण कथिता सैवेयं गर्गसंहिता ।
सर्वदोषहरा पुण्या चतुर्वर्गफलप्रदा ॥ २३ ॥
इत्युक्त्वा तान् मुनीन् सर्वान् गर्गाचार्यो महामुनिः ।
अनुज्ञाप्य प्रसन्नात्मा गन्तुमभ्युदितो ऽभवत् ॥ ३९ ॥" इति ॥

कपिलस्य (१) तन्त्राग्रन्थकर्तुर्महर्षेः पञ्चशिखस्य चाचार्यत्ववत् (२) प्रशस्तपादस्याप्याचार्यत्वं चेत् तर्हीष्टापत्तिरेव ॥

यत्तु शङ्करमिश्राः प्रथमाध्याये "सदनित्य"मित्यादिसूत्रव्या-

---

(१) "सांख्यं तु कपिलेन वै" इति पाद्मं वचनमुक्तमधस्तात् ।

"सनकश्च सनन्दनश्च तृतीयश्च सनातनः ।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ॥
इत्येते ब्रह्मणः पुत्राः सप्त प्रोक्ता महर्षयः ॥"

इति पौराणिकं वचनं गौडपादाचार्यैः सांख्यकारिकाभाष्ये प्रमाणत्वेनोपन्यस्तम् ॥

श्रीमद्भागवते तृतीयस्कन्धे कापिलेयोपाख्याने तु गङ्गासागरसङ्क्रान्तिके बिन्दुसरोवरे कर्दमस्य महर्षेः पुत्रो देवहूत्यां जातो भगवतो विष्णोरवतारः सांख्याचार्याणामपि पूज्य इति लिखितम् । अग्नेरवतार इत्यपि क्वचित् ॥

तस्य चाचार्यत्वे महाभारते ऽनुशासनपर्वणि ।

"महर्षिकपिलाचार्यः कृतज्ञो मेदिनीपति"रिति ।

यत्तु कात्यायनेन स्नानसूत्रपरिशिष्टे "ततो निवीतीति मनुष्यान् सनकं च सनन्दनं तृतीयं च सनातनं कपिलमासुरिं वोढुं पञ्चशिखं तथे"त्युक्तं तत्तु दैवतमनुष्याभिप्रायं यथाहुस्तद्भाष्यकाराः "मनुष्यान् दिव्यान्" "दैवतमनुष्यान् सनकादीन्" इत्यादि । तथैव मात्स्ये १०१ अध्याये ऽप्युक्तम् ॥

(२) "समाससूत्रमालम्ब्य व्याख्यां पञ्चशिखस्य च ।
भावागणेशः कुरुते तत्त्वयाथार्थ्यदीपनम् ॥"

तस्य महर्षित्वे तूक्तमधस्तात् ॥

योगवार्तिके प्रथमपादे विज्ञानभिक्षुः "तत्र निरतिशयं सर्वज्ञबीजमिति" सूत्रस्य भाष्यस्य व्याख्याने "स्वप्रयोजनाभावे ऽपि विदुषां प्रवृत्तौ पञ्चशिखाचार्यवाक्यं सांख्यस्थं प्रमाणयति तथा चोक्तमिति" ॥ इत्यादि ॥

आश्वलायनस्मृतौ प्रथमाध्याये च ।

"आश्वलायनमाचार्यं नत्वापृच्छन् मुनीश्वराः ।
द्विजधर्मान् वदास्माकं स्वर्गप्राप्तिकरान् मुने ॥
इति तद्वचनं श्रुत्वा स धर्मान्मुनिरब्रवीत् ॥
लोकस्य च हितार्थाय ब्राह्ममार्गरताय च ॥" इति एवमन्यत्रापि ॥

स्थाने "उपलक्षणं चैतत् । स्वसमयार्थशब्दाभिधेयत्वमपि त्रया-णां साधर्म्यं द्रष्टव्यम् । यदि तु कार्यत्वानित्यत्वे कारणवतामेव । कारणत्वं चान्यत्र पारिमाण्डल्यादिभ्य इति प्रशस्तदेवाचार्यव्यवस्थितं साधर्म्यमुच्यते" इत्यादि ॥

एवमुदयनाचार्या अपि पृथिवीनिरूपणे "यथात्रैव रूपरसगन्धानां पाकजत्वमनुक्त्वा सौरभाद्युक्तम् । शरीरेन्द्रिययोर्द्व्यणुकादिप्रक्रमसुपेत्य योनिजत्वाद्युक्तमित्याचार्यशैलीय"मित्युक्तवन्तः ॥

तत्तु यथा गौडपादाचार्याः सांख्यकारिकाभाष्ये प्रतिविषयाध्यवसाय इति कारिकाव्याख्यानावसरे "आप्ता आचार्या ब्रह्मादयः" । एवं वाचस्पतिमिश्रा अपि न्यायकणिकायामुत्तरकणिकायां "अत एव चित्तवृत्तिं तामिमामाचक्षते विकल्परूपामाचार्याः "शब्दज्ञानानुपातीवस्तुशून्यो विकल्प" इति वदन्तः ।" अत्राचार्यत्वेन शब्दज्ञानानुपातीवस्तुशून्यो विकल्प इति(१)सूत्रकृतः शास्त्रत्रयप्रणेतु(२)र्महर्षेः पतञ्जलेर्ग्रहणमित्यादिवद्बोध्यम् ॥

यत्तु चित्सुखेन स्वकीयग्रन्थे "न च प्रशस्तपादभाष्यं मनुवचनं येन निर्गुणता गुणानां प्रामाणिकी स्या"दित्युक्तं न तेन तस्य ऋषित्वे व्याकोपः यतो वेदभाष्यकारादीनामपि माननी-

(१) पातञ्जलयोगसूत्रे १ पादे ९ सू० ॥

(२) शान्तिपाठे क्वचिन्महाभाष्यप्रदीपे ऽपि कैयटः ॥

"योगेन चित्तस्य पदेन वाचा
मलं शरीरस्य च वैद्यकेन ।
योऽपाकरोत् तं प्रवरं मुनीनां
पतञ्जलिं प्राञ्जलिरानतो ऽस्मि ॥"

यस्योदयनाचार्यस्य श्रीधराचार्यस्य च न्यायलीलावतीकारादेरपि मतानि तु तेन खण्डितान्येव "द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षण"मित्यादीनि महर्षेः कणादस्य सूत्राण्यपि खण्डितानीति । वयं त्वेवं ब्रूमो न हि चित्सुखवचनं मनुवचनं येन सर्वेषां मतखण्डनं प्रामाणिकं स्यादिति । अधिकं तु विस्तरभयान्न प्रपञ्चितमस्माभिरिति ॥

"सञ्ज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम्" २, १, १८ । "आर्षं सिद्धदर्शनं च धर्मेभ्यः" ९, २, १३ । "अस्मद्बुद्धिभ्यो लिङ्गमृषेस्तद्वचनादाम्नायप्रामाण्यम्" १०, २, ९ । इत्यादिभिः काणादसूत्रैरिव "आश्रयग्राहकैरिन्द्रियैर्ग्रहणमित्येतदस्मदादीनां प्रत्यक्षम् । अस्मद्विशिष्टानां तु योगिनां युक्तानां योगजधर्मानुगृहीतेन मनसा" इत्यादिभाष्यस्थवाक्यैरपि प्रशस्तपादस्य महर्षित्वमनर्षित्वं वा प्रतिपादितं भवतीति सर्वपुस्तकेषु पाठसाम्याभावाद् व्याख्याकाराणामपि सर्वेषामिदानीमभिप्रायानवबोधात्तदुपसंहारे निवेदयिष्यामस्तदास्तां तावत् ॥

भाष्यव्याख्याकार उदयनाचार्यो ऽपि कस्मिन् देशे कस्मिन् काले चाविरासीदिति निश्चयो न भवति तत्र च बहवो विकल्पाः सन्ति ॥

तत्र देशविकल्पे मिथिलादेशे आर्षग्रन्थानां मैथिलग्रन्थानां वा पठनपाठनप्रचारस्य व्याख्यादिनिर्माणसम्प्रदायस्य वा तस्मिन् काले सद्भावेन वर्द्धमानोपाध्यायाश्चाचार्यग्रन्थान् नियमतो व्याख्यातवन्त इति स मैथिलः । वाचस्पतिमिश्रादयस्तु शाङ्करभाष्यादिग्रन्थान् व्याख्यातवन्तस्तत्कर्तृषु केचिदवताराः केचिच्चातिप्राचीनत्वान्महाजनैः परिगृहीतवाक्यत्वादृषिकल्पा

इति केचित् । तद्वंशजानां वङ्गदेशे वारेन्द्रश्रेण्या(१)मद्यापि विद्यमानत्वाद्वङ्गदेशीय इत्यपरे । उदयनाचार्याणामुदयकर(२) नाम्ना प्रसिद्ध्या प्रवादेन च दाक्षिणात्य इत्यन्ये ॥

कालविकल्पे तु "इदमुदयकरेण न्यायलोकागमानां व्यतिहतिमवधूय व्यञ्जितं वर्त्म मुक्ते"रित्याचार्येणात्मतत्त्वविवेके उक्तत्वादुदयकर उद्योतकरो भारद्वाजगोत्रज उदयनाचार्यश्चैक एव पुरुषः(३) एवं सति सुबन्धुकविकृतवासवदत्ताख्यायिका-

---

(१) वङ्गदेशीया ब्राह्मणाः श्रेणित्रये स्थिता वैदिकश्रेण्यां राढीयश्रेण्यां वारेन्द्रश्रेण्यां चेति । एतेषामितिहासश्च विस्तरभयान्नोक्तो ऽत्रास्माभिरिति ॥

(२) ये त्वीश्वरप्रत्यभिज्ञासूत्रकाराः श्रीसोमानन्दनाथशिष्या उत्पलदेवाः ॥

"जनस्यायत्नसिद्ध्यर्थमुदयाकरसूनुना ।
ईश्वरप्रत्यभिज्ञेयमुत्पलेनोपपादिता ॥" इत्युक्तवन्तः

अपि चेश्वरप्रत्यभिज्ञाविमर्शिन्यामुत्पलदेवप्रशिष्या लक्ष्मणगुप्तशिष्याः ४११५ तमे कलिवर्षे वर्तमाना अभिनवगुप्ताचार्याः ॥

"श्रीत्रैयम्बकसद्वंशमध्यमुक्तामयस्थितेः ।
श्रीसोमानन्दनाथस्य विज्ञानप्रतिबिम्बकम् ॥
अनुत्तरानन्यसाक्षिपुमर्थोपायमभ्यधात् ।
ईश्वरप्रत्यभिज्ञाख्यं यः शास्त्रं यत् सुनिर्मलम् ॥
तत्प्रशिष्यः करोम्येतां तत्सूत्रविवृतिं लघुम् ।
बुद्ध्वाऽभिनवगुप्तोऽहं श्रीमल्लक्ष्मणगुप्ततः ॥"

इत्युक्तवन्तस्ते तु परात्रिंशिकातत्त्वविवरणतन्त्रालोकविवेकादिग्रन्थेभ्यः काश्मीरदेशीया इत्यवगम्यन्ते ॥

(३) उदयनाचार्यास्तु किरणावल्यां "दुःखसन्ततिरत्यन्तमुच्छिद्यते सन्ततित्वात् प्रदीपसन्ततिवदित्याचार्याः" । "तथा चाचार्याः समानासमानजातीयव्यवच्छेदो लक्षणार्थ" इत्यादीन्युद्योतकराणां वचनानि न्यायवार्तिकस्थानि लिखितानीति सोऽन्यः । यदि च महर्षिणा वेदव्यासेन ब्रह्मसूत्रे "इति बादरायणः" वात्स्यायनीयकामसूत्रे च १ अधिकरणे २ अध्याये "इति वात्स्यायन" इत्यायुक्तमिव इदमपीति चेदत्र तादृशसङ्कतेरभावान्न तथोपपत्तिरिति ॥

यां "न्यायस्थितिमिवोद्योतकरस्वरूपा"मिति लेखनाद् वर्षाणां द्वादशशत्याः पूर्वं तदाविर्भावो जातः । न्यायनिबन्धग्रन्थापरपर्यायो न्यायवार्तिकतात्पर्यपरिशुद्धिग्रन्थस्तु तेनैव कृत इत्येके । कश्चिदभिनवोदयनाचार्यो दक्षिणदेशे वङ्गदेशे वा जातस्तेन कृत इत्यपरे ॥

अन्ये तु शङ्कराचार्यादर्वाचीनो माधवाचार्याच्च प्राचीन उदयनाचार्यः । यतो ब्रह्मसूत्रशाङ्करभाष्यभामतीव्याख्याकर्तुर्न्यायवार्तिकतात्पर्यटीकाप्रणेतुर्वाचस्पतिमिश्रान्न्यायवार्तिकतात्पर्यपरिशुद्धिकृत उदयनाचार्यस्यार्वाचीनत्वं ततश्च सर्वदर्शनसंग्रहकर्तुर्माधवाचार्यस्यार्वाचीनत्वमित्याहुः ॥

अस्माभिस्त्वेवमनुमीयते । तत्र भगवान् रुद्रावतारः (१) शङ्कराचार्यो विक्रमादित्यराज्याभिषेकसमयादतीते पञ्चचत्वा-

---

शङ्करमिश्रास्तु न्यायत्रिसूत्र्युपस्कारे "अकारि महतस्तस्य भारद्वाजेन वार्तिक"मिति वचनादुद्द्योतकरश्च परमर्षिभारद्वाज इत्याहुः । भरद्वाजगोत्रज उद्द्योतकराचार्य इत्यपि केचित् । विस्तरस्तु उद्द्योतकरप्रणीतन्यायसूत्रवार्तिकस्य भूमिकायां वक्ष्यते ॥

(१) शङ्कराचार्यश्च रुद्रावतार इति आनन्दगिरिकृते माधवीये च शङ्करविजयग्रन्थे लिखितमस्ति तथोक्तं कूर्मपुराणे त्रिंशत्तमे ऽध्याये ॥

"कलौ रुद्रो महादेवो लोकानामीश्वरः परः ।
तदेव साधयेन्नॄणां देवतानां च दैवतम् ॥ ३२ ॥
करिष्यत्यवतारं स्वं शङ्करो नीललोहितः ।
श्रौतस्मार्तप्रतिष्ठार्थं भक्तानां हितकाम्यया ॥ ३३ ॥
उपदेक्ष्यति तज्ज्ञानं शिष्याणां ब्रह्मसञ्ज्ञितम् ।
सर्ववेदान्तसारं हि धर्मान् वेदनिदर्शनात् ॥ ३४ ॥
ये तं प्रीता निषेवन्ते येन केनोपचारतः ।
विजित्य कलिजान् दोषान् यान्ति ते परमं पदम् ॥ ३५ ॥" इति ॥

त्रिंशदधिकाष्टशतीमिते ८४५ वर्षे (१) केरलदेशे कालपीग्रामे आविरभूत् । ततस्तच्छिष्यः प्रशिष्यो वा शाङ्करब्रह्मसूत्रभाष्य-भामतीव्याख्याप्रणेता षड्दर्शनटीकाकृद् वाचस्पतिमिश्रः (२)

(१) "निधिनागेभवन्ह्यब्दे विभवे मासि माधवे ।
शुक्ले तिथौ दशम्यां तु शङ्करार्योदयः स्मृतः ॥"

इति सम्प्रदायविद आहुः ॥

निधिनागेभवन्ह्यब्दे ३८८९ नवाशीत्युत्तराष्टशत्यधिकत्रिसहस्रीमिते वर्षे कलियुगस्येति शेषः ॥

तथैव शङ्करमन्दारसौरभे नीलकण्ठभट्टा अपि ॥

"प्रासूत तिष्यशरदामभियातवत्या-
मेकादशाधिकशतोनचतुःसहस्र्याम् ॥" इति ॥

तिष्यशरदां कलियुगवर्षाणामित्यर्थः । एवमन्यान्यपि प्रमाणान्युपलभ्यन्ते ॥

(२) वाचस्पतिमिश्रः * पूर्वजन्मनि भाष्यकारप्रधानशिष्यः पद्मपादाचार्योऽपरस्मिंस्तु जन्मनि वाचस्पतिरिति शङ्करविजये १३ सर्गे माधवाचार्याः । मार्तण्डतिलकस्वामिनः शिष्य इत्येके ॥

"मार्तण्डतिलकस्वामिमहागणपतीन् वयम् ।
विश्ववन्द्यान् नमस्यामः सर्वसिद्धिविधायिनः ॥"

इति भामतीस्थं पद्यं तु

"आदित्यस्य सदा पूजां तिलकस्वामिनस्तथा ।
महागणपतेश्चैव कुर्वन् सिद्धिमवाप्नुयात् ॥"

इति स्मृतिमूलकमिति तद्व्याख्यातारः ॥

बृहस्पतेरवतार इत्यन्ये ॥

* विवादरत्नाकरे ठक्कुरश्रीचण्डेश्वरः ॥

"कल्पद्रुमे चाप्यथ पारिजाते हलायुधे वाप्यथ वा प्रकाशे ।
यत् सारमस्मादधिकं च यत्तद् दधाति रत्नाकर एक एव ॥
श्रीकृत्यदानव्यवहारशुद्धिपूजाविवादेषु तथा गृहस्थे ।
रत्नाकरा धर्मभुवो निबन्धाः कृतास्तुलापूरुषदेन सप्त ॥
रसगुणभुजचन्द्रैः १२३६ सम्मिते शाकवर्षे
सहसि धवलपक्षे वाग्वतीसिन्धुतीरे ।

ततश्चोदयनाचार्यः(१) । एवं सति श्रीधराचार्येण न्यायकन्दली-ग्रन्थस्त्र्यधिकद्व्योत्तरनवशतशाकाब्दे ९१३ [विक्रमाब्दे १०४८] रचितः स च ग्रन्थः किरणावलीमवलम्ब्यैव रचित इति ८४५ विक्रमीयवर्षादुत्तरं १०४८ वर्षात्पूर्वं न्यायाचार्यत्वेन प्रसिद्धानां श्रीमदुदयनाचार्याणां मिथिलादेशे वङ्गदेशे वा स्थितिरासी-दिति ॥

अत एव भगवता शङ्कराचार्येण नास्तिककण्टकारण्ये समु-च्छिन्ने पुनश्चाङ्कुरिते तस्मिन्नुदयनाचार्येणैव सर्वतोभावेन मू-लोच्छेदः कृत इति वृद्धोक्ता किंवदन्ती सङ्गच्छते । जैनग्रन्थेषु च दृश्यते उदयनाचार्यैः सह जैनानां विवादसूचनम् ॥

न्यायाचार्योदयनप्रणीतं ग्रन्थपञ्चकं मिथिलादेशे प्रसिद्धं त-द्यथा । किरणावली । न्यायकुसुमाञ्जलिः । आत्मतत्त्वविवेकी

(१) "वाक्चेतसोर्मम तथा भव सावधाना
वाचस्पतेर्वचसि न स्खलतो यथैते ॥
इति न्यायाचार्यश्रीमदुदयनविरचितन्यायवार्तिकतात्पर्यपरिशुद्धौ प्रथमाध्याये त्रिसूत्री समाप्ता" इत्युदयनाचार्याः ॥

---

अदित तुलितमुच्चैरात्मना स्वर्णराशिं
निधिरखिलगुणानामुत्तमः सोमनाथः ॥"
दण्डविवेके वर्द्धमानश्च ॥
"श्रीविल्वपञ्चान्वयसम्भवेन श्रीमद्भवेशस्य तनूद्भवेन ।
श्रीवर्द्धमानेन विदेहभर्तुः कृते कृतो दण्डविधौ विवेकः ॥
कल्पतरुकामधेनू हलायुधं चापि धर्मकोशं च ।
स्मृतिसारकृत्यसागररत्नाकरपारिजातांश्च ॥" इत्यादि ॥
धर्मशास्त्रनिबन्धकृद्वाचस्पतिमिश्राश्च स्वकीयग्रन्थे द्वैतनिर्णयादावुक्तवर्द्धमा-नकृतग्रन्थानुदाहरन्तीति सो ऽन्यो वाचस्पतिमिश्रः सो ऽन्यो वर्द्धमानश्चेति प्रतीयते ॥

बौद्धाधिकारो वा । न्यायपरिशिष्टम् । न्यायवार्तिकतात्पर्यपरिशुद्धिश्च ॥

अपि च भगीरथेन(१)नैषधचरितटीकायां "श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्रीहीरः सुषुवे" इति श्लोकव्याख्याने श्रीहर्षपित्रा श्रीहीरेणोदयनाचार्यस्य विवादो जात इति सूचितम् । श्रीहर्षश्च खण्डनग्रन्थे आचार्यग्रन्थखण्डनमपि कृतवान् (२)वर्द्धमानोपाध्यायपित्रा श्रीगङ्गेशोपाध्यायेन च तत्त्वचिन्तामणावनुमानखण्डे "व्याघातो यदि शङ्कास्ती"तिकारिकामुद्भाव्य "इति खण्डनकारमतमप्यपास्त"मित्यभिहितमिति गङ्गेशात् पूर्वः श्रीहर्षः(३)तत्पूर्वः श्रीहर्षपितृसमा-

---

(१) अयं भगीरथः "श्रीकूर्माचलेन्द्रश्रीरुद्रचन्द्रगोत्रापत्यकल्पद्रुमसदृशराजर्षिवर्यश्रीमदुद्द्योतचन्द्रात्मजश्रीज्ञानचन्द्राश्रितपुरोहितसोमयाजिपण्डितवल्लभद्रगोत्रापत्यश्रीहर्षदेवात्मजावसथ्यिभगीरथविरचितायां नैषधटीकाया" मिति लेखनात् पूर्वोक्तभगीरथठक्कुराद्भिन्नः ॥

(२) "शङ्का चेदनुमास्त्येव न चेच्छङ्का ततस्तराम् ।
व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ॥"

इति कुसुमाञ्जलौ तृतीयस्तवक उदयनाचार्यः ॥

"तस्मादस्माभिरप्यस्मिन्नर्थे न खलु दुष्पठा ।
त्वद्गाथैवान्यथाकारमक्षराणि कियन्त्यपि ॥
व्याघातो यदि शङ्कास्ति न चेच्छङ्का ततस्तराम् ।
व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुतः ॥"

इति खण्डनग्रन्थे प्रथमपरिच्छेदे श्रीहर्षः । एवमन्यत्रापि ॥

(३) अयं श्रीहर्षश्च काव्यप्रकाशकारस्य मम्मटभट्टस्य शिष्यः सम्बन्धी वेति किंवदन्ती वृद्धेभ्यः श्रूयते । मम्मटभट्टश्च १०१५ तमशाकवर्षात् पूर्वमासीत् । तथाहि "विक्रमार्कसमयात् ११५० पञ्चाशदधिकैकादशशतीमिते संवत्सरे गुर्जरधराधिपो जयसिंहनामा बभूव । तदानीं श्रीपत्तनेऽधिवसतो देवसूरिनामकजैनाचार्यस्य शिष्यो माणिक्यनामा कश्चित् पण्डित आसीदिति मेरुतुङ्गाचार्यकृ-

नकालिक उदयनाचार्य इत्यवगम्यते । गङ्गेशश्च वाचस्पतिमिश्रादर्वाचीनो(१) ऽनुमीयते वर्षाणां सप्तशत्याः पूर्वमासीत्(२) ॥

तप्रबन्धचिन्तामणिग्रन्थाल्लभ्यते । स च माणिक्यपण्डितः स्वकृतायां काव्यप्रकाशग्रन्थस्य सङ्केताभिधटीकाया"मित्यादि यज्ञेश्वरभट्टैः प्रतिपादितमिति टीकाकारसमयात् पूर्वं मूलकारस्य स्थितिरवश्यं स्वीकार्या । एवं सति काश्मीराधिपतेर्यशस्करदेवस्य समये मम्मटभट्ट आसीत् स च नृपतिः ४०६८ तमे कलिवर्षे (८८९ तमे शाकवर्षे) आसीदिति काश्मीरेतिहासं समालोचयतां बाबूहरिश्चन्द्राणामुक्तिः सङ्गच्छते । तथाहि अभिनवगुप्ताचार्यस्य भ्राता मनोरथगुप्तनामा तस्य नृपतेर्मन्त्री आसीत् ॥

"श्रीमान् यशस्करनृपः सचिवं समस्त-
धर्मस्थितिष्वकृत पूर्णमनोरथाख्यम् ।"

इति तन्त्रालोकविवेके जयरथः ।

"भ्राता ममैव शिवशासनरूढचित्तः
प्रेप्सुः परात्मनि मनोरथगुप्तनामा" ।

इति परात्रिंशिकातत्त्वविवरणे ऽभिनवगुप्ताचार्याः ॥

अपि च ।

"इति नवतितमे ऽस्मिन् वत्सरेऽन्त्ये युगांशे
तिथिशशिजलधिस्थे मार्गशीर्षावसाने ।"

इतीश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यां तैरेवोक्तम् । युगांशे तिथिशशिजलधिस्थ इति ४११५ तमे कलिवर्षे इत्याशयः ॥

(१) "अत एव प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः न हि करिणि दृष्टे चीत्कारेण तमनुमिमते ऽनुमातार इति वाचस्पति*वचनयोरविरोध" इति तत्त्वचिन्तामणावनुमानखण्डे पक्षताग्रन्थे गङ्गेशोपाध्यायाः ॥

"सुप्त्वा व्यादत्त इति व्यत्ययात् प्रयोग इति प्रेत्यभावपरीक्षायां वाचस्पतिमिश्राः" इति । "वाचस्पतिमिश्रास्तु तिलस्य विकारस्तैलमिति योगे बाधाभावा"दिति च द्रव्यकिरणावलीप्रकाशे वर्द्धमानोपाध्यायाः ॥

(२) यथा दक्षिणदेशे वीरबुक्कभूपालो यथा च पूर्वदेशे हेमाद्रिः वैदिकमार्गप्रवर्तकस्तथैव वङ्गदेशे लक्ष्मणसेननृपतिर्बभूव यस्य सभापण्डितो हलायुधभट्ट

* तत्त्वचिन्तामणिप्रकाशकारो ऽन्यो वाचस्पतिमिश्र इति वक्ष्यते ॥

उदयनाचार्यास्तु द्रव्यकिरणावल्यां चतुर्णां महाभूतानां सृष्टिसंहारविधिव्याख्याने "तथा च कार्यत्वादेव हीयेतेति संक्षेपः । विस्तरस्तु न्यायकुसुमाञ्जलावात्मतत्त्वविवेके चाध्यवसेय" इति, वाचस्पतिमिश्रोक्तां "लब्धरूप"मित्यादिकारिकामपि तत्रैवोक्तवन्तः । आत्मतत्त्वविवेके च "अत एवेति विशेषात्ताहग्रस्य स्वत एवेति तात्पर्याचार्याः" अत्र तात्पर्याचार्या वाचस्पतिमिश्राः (१) ॥

---

आसीत् तस्य नृपतेः त्रिंशदधिकदशशतीमिते १०३० शालिवाहनवर्षे पञ्चदशाधिकपञ्चशतीमिते ५१५ सन् इति प्रसिद्धे महम्मदवर्षे संवत्सरप्रवृत्तिर्जातेति । तथोक्तं गणकैर्देशभाषया ॥

"शाके सो सन् जानव सोई । रहित वाणशशिवाण जो होई ॥
जासन जमा रहै सो देखहु । शरशशिवाण हीनकरि लेखहु ॥
वाकी रहै सो ल०सं० प्रमान । गुरुज्ञानीजन भाषाभान ॥
अरु चौषट्एकादश दीजे । ल०सं० सहित संवत् करिलीजे ॥"

अत्र लकारो लक्ष्मणसेनसूचकः संकारः संवत्सूचकः ॥

एवं सति पक्षधरापरपर्यायश्रीजयदेवमिश्रकृततत्त्वचिन्तामण्यालोकपुस्तकस्य एकोनषष्ट्यधिकशततम ल० सं० * लिखितस्योपलब्ध्या तत्पूर्वं तद्ग्रन्थकरणं सुव्यक्तं ततोऽपि प्राक् गङ्गेशवर्द्धमानयोः स्थितिरिति सम्भाव्यत एव । अपि च पक्षधरमिश्रो गौराङ्गदेवगुरूणां वासुदेवसार्वभौमाणां सहाध्यायी इति किंवदन्ती सङ्गच्छते । गौराङ्गदेवश्च शाके मुनिव्योमयुगेन्दुगण्ये जात इति वक्ष्यते ॥

(१) वाचस्पतिमिश्रकृतन्यायवार्तिकतात्पर्यटीकायामपि "इत्याचार्यश्रीमिश्रश्री-

---

* मिथिलादेशीयेषु वङ्गदेशीयेषु च प्राचीनपुस्तकेषु पुस्तकलेखनसमयपरिचायकत्वेन लक्ष्मणसेनीयसंवत्सरोऽप्युपलभ्यते यथा किरणावल्या उक्तचतुर्थपुस्तकान्ते ॥

रसवसुहरनेत्रे चैत्रिके शुक्लपक्षे
प्रतिपदि बुधवारे वत्सरे लाक्ष्मणे च ।
विबुधबुधविनोदं कारयन्ती सुपुस्ती-
मलिखदमलपाणिः श्रीद्विदः श्रीसमेताम् ॥

किन्तु वाचस्पतिमिश्रादर्वाचीनः प्राचीनो वेति विवादग्रस्तम्। तथाहि वाचस्पतिमिश्रास्तु शाङ्करब्रह्मसूत्रभाष्यव्याख्यायां भामत्याम्।

"यन्न्यायकणिकातत्त्वसमीक्षातत्त्वबिन्दुभिः।
यन्न्यायसांख्ययोगानां वेदान्तानां निबन्धनैः।
समचैषं महत्पुण्यं तत्फलं पुष्कलं मया।
समर्पितमथैतेन प्रीयतां परमेश्वरः।" इत्युक्तवन्तः॥

न्यायकणिकाग्रन्थे तु "अस्ति चेहापि शिशिरतरसम्भूतजडिमनम्यरतरकायकाण्डस्यानुमितवह्निभावनाभियोग इति न हेतुभेद इति प्रतिबन्धसिद्धि"रित्यादि ततश्च "इत्यवदातं परिशिष्टग्रन्थव्याख्यानसमये वक्ष्यामस्तदास्तां तावदि"त्युक्तवन्तः। अत्र परिशिष्टश्च उदयनाचार्यप्रणीत इत्येके। मीमांसापरिशिष्टमपि वर्तत इत्यन्ये। अस्यैव ग्रन्थस्य परिशिष्टांशस्य व्याख्यानसमय इत्यपरे।

पण्डितश्रीतारानाथतर्कवाचस्पतिभट्टाचार्यसङ्कलितसांख्यतत्त्वकौमुदीविज्ञापने निरूपितवाचस्पतिमिश्रकृतखण्डनोद्धारेण (१) वाचस्पतेः पूर्वः श्रीहर्षः। किन्तु "मुग्धायाः पुत्रप्रार्थनमिति वाचस्पतिरुपालम्भमवादी"दिति खण्डनग्रन्थे व्याप्तिखण्डनप्रकरणे उक्तत्वादपि च शङ्करमिश्रेण खण्डनग्रन्थस्था "अव्यय, लब्धरूपे क्वचित् किञ्चित्तादृगेव निषिध्यते" इति का-

वाचस्पतिविरचिताया"मित्यादि लिखितमस्ति तत्ताडपत्रपुस्तके लिपिकालः ल० सं० ४१७ इति लिखितः। एतदनुसारेण १४४७ शाकाब्दे लिखितं पुस्तकम्॥

(१) वाचस्पतिमिश्रविरचित एकः खण्डनोद्धारग्रन्थो मयाप्यवलोकितः स च तत्त्वचिन्तामणिप्रकाशकृद्वाचस्पतिमिश्रकृत इवाभाति॥

रिका(१) "अन्य इति । प्रमाणटीकायां वाचस्पतिमिश्र इत्यर्थः" इति व्याख्याता । एतस्मादपि श्रीहर्षात् पूर्वो वाचस्पतिः । उक्तनैषधटीकया श्रीहर्षपित्रा श्रीहीरेणोदयनाचार्यस्य समानकालिकत्वं खण्डनग्रन्थेन च श्रीहर्षात् पूर्वं उदयनाचार्यः । तात्पर्यपरिशुद्धिग्रन्थेनात्मतत्त्वविवेकेन चोदयनाचार्यात् पूर्वो वाचस्पतिमिश्रः । एवं सति तत्तद्ग्रन्थावलोकनेन च नास्त्यत्र वाचस्पतिमिश्रोदयनाचार्यश्रीहर्षाणां (२) द्वैविध्यकल्पनावकाश इति सर्वेषां समानसमयत्वेनैव प्राचीनार्वाचीनत्वव्यवस्थोपपत्तिरिति ॥

किरणावलीप्रकाशकारो न्यायाद्यनेकशास्त्रपारावारपारदृश्वा वर्द्धमानोपाध्यायस्तु मिथिलादेशे दरभङ्गामण्डलान्तर्गत-"करिजन"ग्रामे जातस्तत्त्वचिन्तामणिकृद्गङ्गेशोपाध्यायात्मजः (३) अनेन च गौतमसूत्रतत्त्वचिन्तामणिप्रभृतयो बहवो ग्रन्थाः

(१) विद्वद्वरपण्डितश्रीराममिश्रशास्त्रिभिः कारिकेयं तट्टीकायां प्रदर्शिता ॥

(२) यश्च रत्नावल्यां "श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी लोके हारि च वत्सराजचरित"मित्युक्त्या प्रतिपादितः स च श्रीहर्षो वत्सराजोदयनश्चान्य एव ॥

(३) न्यायाम्भोजपतङ्गाय मीमांसापारदर्शिने ।
गङ्गेश्वराय गुरवे पित्रेऽत्र भवते नमः ॥
इति कुसुमाञ्जलिप्रकाशे ॥

यस्तर्कतन्त्रशतपत्रसहस्ररश्मिरित्यादि किरणावलीप्रकाशे च वर्द्धमानोपाध्यायः । परन्तु तत्त्वचिन्तामणौ "गङ्गेशस्तनुते मितेन वचसे"त्यादि लिखितमस्ति ॥

अस्य गणरत्नमहोदधिकारस्य च तत्तद्ग्रन्थेषु वर्द्धमाननाम्नैव प्रसिद्धत्वापि समयैक्यासम्भवाद् गुरोर्नामभेदाच्च गणरत्नमहोदधिकारोऽन्यः स्वकीयग्रन्थे जैनेषु गौरवं प्रदर्शयन् जैन इति प्रतीयते स च वर्द्धमानसूरिर्गोविन्दसूरिशिष्य इति तद्वृत्तौ स्वयमेव लिखितवान् ॥ अपि च

"सप्तनवत्यधिकेष्वेकादशसु शतेष्वतीतेषु ।

व्याख्याताः किरणावल्याद्या उक्ता आचार्यग्रन्था अपि सर्वे व्याख्याता इति ॥

किरणावलीप्रकाशग्रन्थस्य प्रकाशिकाख्यव्याख्याकारी भगीरथठक्कुरो मेघठक्कुरापरनामधेयो (१) मैथिलः । अयं च पक्षधरमिश्राणां शिष्य इति किंवदन्ती "विंशाब्दे जयदेवपण्डितकवे"रित्याद्युक्तमधस्तात् (२) । अनेन च वर्द्धमानोपाध्यायनिर्मिताः सर्वे प्रकाशग्रन्था व्याख्याता इत्यनुमीयते । उपलभ्यन्ते च कुसुमाञ्जलिप्रकाशप्रकाशिका न्यायलीलावतीप्रकाशप्रकाशिका इत्यादयो ग्रन्थाः ॥

गुणप्रकाशविवृतिकारी रघुनाथशिरोमणि(३)र्वङ्गदेशे नवद्वीपग्रामे जातः वासुदेवसार्वभौमाणां शिष्यः वासुदेवसार्वभौमस्य पक्षधरमिश्राणां सहाध्यायी सार्वभौमे चाध्ययननिवृत्त्या स्वदेशं गते तच्छिष्ये रघुनाथशिरोमणावपि पक्षधरमिश्राद्वाध्येतुं समायाते कदाचित् सामान्यलक्षणायाः खण्डने कृते पक्षधरमिश्रः प्रोवाच ॥

"वक्षोजपानकृत् काण संशये जाग्रति स्फुटे ।
सामान्यलक्षणा कस्मादकस्मादपलप्यते ॥"

---

वर्षाणां विक्रमतो गणरत्नमहोदधिर्विहितः ॥" इति ॥

(१) भगीरथमहादेवौ सहोदरभ्रातरौ मेघठाकुरधेघठाकुर इति प्रसिद्धौ तत्तद्ग्रन्थेऽपि "भावं मेघः सम्यगाविष्करोतीत्यादि" लिखितवन्तौ । इदानीं गुणकिरणावलीप्रकाशस्यापि भगीरथकृता गुणप्रकाशिकाख्या व्याख्या प्राप्ता सा च श्लोकानां चतुःसहस्र्यात्मिका ॥

(२) अन्ये तु जयदेवपण्डितकवेर्विंशाब्दे जात इति व्याख्यातवन्तः ॥

(३) इदानीं तत्कृता द्रव्यप्रकाशविवृतिरप्युपलब्धा सा च श्लोकानां सप्तशत्यात्मिका विषमपदटिप्पणीस्वरूपास्ति ॥

वासुदेवसार्वभौमाणां चत्वारः शिष्याः । गौराङ्गदेवः । रघुनाथः । रघुनन्दनः । कृष्णानन्दश्च । तत्र गौराङ्गस्तु भगवतो विष्णोरवतार इति केचित् । संसारे विरक्तो भगवद्भक्त इति चान्ये वर्णयन्ति (१) । रघुनाथशिरोमणिर्नैयायिको रघुनन्दनभट्टा-

(१) शाके मुनिव्योमयुगेन्दुगण्ये
पुण्ये तिथौ फाल्गुनपौर्णमास्याम् ।
त्रैलोक्यभाग्योदयपुण्यकीर्ति-
र्देवः शचीनन्दन आविरासीत् ॥

गौराङ्गदेवस्य जन्माहादिविषये प्रमाणभूतमिदं पद्यं नवद्वीपस्थपण्डितशिरोमणिश्रीव्रजनाथविद्यारत्नमहाशयेभ्यः प्राप्तम् । अत्र युगशब्दो द्वित्वबोधकश्चतुष्टबोधको वेति निश्चयो न भवति । द्वित्वबोधकत्वे शककालः १२०७ चतुष्ट्वबोधकत्वे तु शककालः १४०७ सम्भवति । अनुमीयते द्वित्वबोधक एव तथाहि प्रगल्भमिश्रकृतखण्डनोद्धारस्यैकं पुस्तकं १५७१ तमे विक्रमीये वर्षे (१४३६ तमे शाकवर्षे) लिखितं वाराणस्यामुपलब्धमिति तत्पूर्वं प्रगल्भमिश्राणां "श्रीमच्छङ्करवर्द्धमानरचितोपायान् विलोक्यापि च" इत्युक्तवतां स्थितिरभ्युपेया तत्पूर्वं "कणादभवनाथाभ्या"*मित्युक्तवतां शङ्करमिश्राणां स्थितिस्तत्पूर्वमवयवग्रन्थव्याख्यातॄणां मथुरानाथान्तेवासिनां कणादानां स्थितिस्तत्पूर्वं दीधितिव्या-

* यदि चात्र सूत्रकारस्य महर्षेः कणादस्य ग्रहणं भवेत्तदेतन्नोपपद्यते परन्त्वत्र मूलं मृग्यम् । तदा चतुष्ट्वबोधकत्वेऽप्युपपत्तिर्भवितुमर्हति । तथाहि रघुनाथशिरोमणेर्गुरूणां वासुदेवसार्वभौमाणां सहाध्यायी पक्षधरमिश्र इत्युक्तमधस्तात् । "अधीत्य रुचिदत्तेन जयदेवाज्जगद्गुरो"रिति पक्षधरमिश्रस्य शिष्यो रुचिदत्तः यदि चोक्तं किरणावल्याश्चतुर्थं ताडपत्त्रपुस्तकमनेनैव लिखितं यदि चोक्तप्रगल्भमिश्राणामेव लक्षणानि रघुनाथशिरोमणिना दीधितौ व्यधिकरणधर्मावच्छिन्नाभावप्रकरणे प्रदर्शितानि यदि च खण्डनग्रन्थटीका दीधितिकारेणैव रघुनाथेन रचिता यस्यां शङ्करमिश्राणां मतोपन्यास इति । परन्तु आलोकग्रन्थस्य वर्षाणां षड्शत्याः पूर्वं लिखितस्योक्तपुस्तकस्य का गतिरिति रुचिदत्तप्रगल्भरघुनाथानां द्वैविध्यं कल्पनीयम् ॥

इदानीं शङ्करमिश्रकृतः कणादरहस्यग्रन्थोऽप्युपलब्धः स च ग्रन्थो भाष्याभिप्रायबोधको वार्तिकलक्षणाक्रान्तः ॥

चार्यस्तु धर्मशास्त्री कृष्णानन्दवागीशश्च मन्त्रशास्त्री जातः । एवं तत्तच्छास्त्रे निबन्धकाराश्च ते बभूवुरिति किंवदन्ती ॥

रघुनाथशिरोमणिश्च दीधितिकार इति प्रसिद्ध आत्मतत्त्वविवेकतत्त्वचिन्तामणिप्रभृतीन् बहून् ग्रन्थान् व्याख्यातवान् ॥

गुणप्रकाशविवृतिरहस्यकारी दिगन्तविश्रान्तकीर्तिर्मथुरानाथतर्कवागीशोऽपि वङ्गदेशीयो दीधितिकारस्य शिष्य इति किंवदन्ती । अनेन चात्मतत्त्वविवेकतत्त्वचिन्तामणिप्रभृतयो मूलग्रन्था रघुनाथशिरोमणिकृता अपि सर्वे ग्रन्था व्याख्याता इति ॥

गुणप्रकाशविवृतिभावप्रकाशिकाकारी रुद्रभट्टाचार्योऽपि (१) वङ्गदेशीय एव विद्यानिवासभट्टाचार्यात्मजः । अनुमीयते विश्वनाथन्यायपञ्चाननानां सहोदरः । अनेन च मथुरानाथवद् बहवो ग्रन्था व्याख्याता इति ॥

अतः परमुपलभ्यमाने विशेषवृत्तान्ते समाप्ते चास्य ग्रन्थस्य मुद्रणे ऽन्ते मुद्रणीयोपसंहारे तत् प्रदर्शयिष्यामि ॥

---

ख्याकाराणां मथुरानाथतर्कवागीशानां स्थितिस्तत्पूर्वं दीधितिकाराणां रघुनाथतार्किकशिरोमणीनां स्थितिः रघुनाथशिरोमणिश्च गौराङ्गदेवसमानकालिक इत्येतत्सर्वं द्वित्वबोधकत्व एवोपपद्यते । चतुष्टबोधकत्वे तु दीधितिकारतः खण्डनोद्धारपुस्तकान्तं २९ वर्षाभ्यन्तरे नैव सम्भवति । यत्तु प्रतिपादितमधस्तात् १२३६ तमशाकवर्षात् परं धर्मशास्त्रनिबन्धकर्तुर्वाचस्पतिमिश्रस्य स्थितिरासीदिति तत्कृतनिबन्धान् रघुनन्दनभट्टाचार्याः कथं स्वनिबन्धेषूदाहृतवन्त इति चेत्, तस्य समानकालिकत्वेऽप्युपपत्तिर्भवितुमर्हतीति ॥

(१) रामेश्वरभट्टाचार्यात्मजो रुद्रभट्टाचार्यश्चान्य एव यथोक्तं रौद्र्यां सिद्धान्तमुक्तावलीव्याख्यायाम् ॥

तातं श्रीरामधीरेशं धीरं श्रीमधुसूदनम् ।
नत्वा रुद्रेण सिद्धान्तमुक्तावली वितन्यते ? ॥

एवंरूपेण मुद्रणारम्भो जातः । अस्मिन् ग्रन्थे मुद्रादोषात् सीसकाक्षरदोषात् प्रमादादृष्टिदोषाद्वा सञ्जाताशुद्धयो महद्भिर्दयालुभिर्विद्वद्भिः संशोधनीयाः चन्तव्याः कृपया मह्यं प्रदर्शनीयाश्च यतः शुद्धिपत्ते तासां समावेशो भवेदिति प्रार्थय इति शम् ॥

| | |
|---|---|
| वाराणस्याम्<br>नं० १८३ गोवर्द्धनसरायाख्यग्रामे<br>संवत्सरे १८४१<br>श्रावणकृष्ण १ बुधवासरे | विन्ध्येश्वरीप्रसादशर्मा<br>द्विवेदोपाख्यः |

## साङ्केतिकचिह्नविवरणम् ।

कि० प्र० व०............किरणावलीप्रकाशे वर्द्धमानोपाध्यायाः ।

कि० प्र० व्या० भ०......किरणावलीप्रकाशव्याख्यायां प्रकाशिकायां भगीरथठक्कुरः ।

कि० प्र० वि० र०......किरणावलीप्रकाशविवृतौ रघुनाथशिरोमणिः ।

गु० प्र० वि० र० म०...गुणकिरणावलीप्रकाशविवृतिरहस्ये मथुरानाथः ।

गु० प्र० वि० भा० रु०...गुणकिरणावलीप्रकाशविवृतिभावप्रकाशिकायां रुद्रभट्टाचार्यः ।

कि० भा० प०............किरणावलीभास्करे पद्मनाभमिश्रः ।

पा० १ पु०............पाठः प्रथमपुस्तके ।

पा० १ । २ पु०........पाठः प्रथमद्वितीयपुस्तकयोः ।

पा० १ । २ । ३ । पु०...पाठः प्रथमद्वितीयतृतीयपुस्तकेषु ।

एवमन्यत्राप्यूह्यम् ।

# वैशेषिकदर्शनम् ।

श्रीगणेशाय नमः ।

अथातो धर्मं व्याख्यास्यामः ॥ १ ॥ यतो ऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ॥ २ ॥ तद्वचनादाम्नायस्य प्रामाण्यम् ॥ ३ ॥ धर्मविशेषप्रसूताद् (१) द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां (२) साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम् ॥ ४ ॥ पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि ॥ ५ ॥ रूपरसगन्धस्पर्शाः सङ्ख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः ॥ ६ ॥ उत्क्षेपणमवक्षेपण (३) माकुञ्चनं प्रसारणं गमनमिति कर्माणि ॥ ७ ॥ सदनित्यं द्रव्यवत् कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः ॥ ८ ॥ द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यम् ॥ ९ ॥ द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम् ॥ १० ॥ कर्म कर्मसाध्यं न विद्यते ॥ ११ ॥ न द्रव्यं कार्यं कारणं च बधति ॥१२॥ उभयथा गुणाः ॥१३॥ कार्य-

(१) धर्मविशेषसूताद्—पाठः ३ पुस्तके ।

(२) पदार्थानामिति नास्ति २ पु० ।

(३) मपक्षेपण—पा० २ पु० ।

विरोधि कर्म ॥ १४ ॥ क्रियागुणवत् समवायिकारणमिति द्रव्यलक्षणम् ॥ १५ ॥ द्रव्याश्रय्यगुणवान् संयोगविभागेष्व-कारण (१) मनपेक्ष इति गुणलक्षणम् ॥ १६ ॥ एकद्रव्यम-गुणं संयोगविभागे (२) ष्वनपेक्षकारणमिति कर्मलक्ष-णम् ॥ १७ ॥ द्रव्यगुणकर्मणां द्रव्यं कारणं (३) सामान्यम् ॥ १८ ॥ तथा (४) गुणः ॥ १९ ॥ संयोगविभागवेगानां कर्म समानम् ॥ २० ॥ न द्रव्याणां कर्म ॥ २१ ॥ व्यतिरेका-त् (५) ॥ २२ ॥ द्रव्याणां द्रव्यं कार्यं सामान्यम् ॥ २३ ॥ गुणवैधर्म्यान्न कर्मणां कर्म ॥ २४ ॥ द्वित्वप्रभृतयः सङ्ख्याः पृथक्त्वसंयोगविभागाश्च ॥ २५ ॥ असमवायात् सामान्य-कार्यं कर्म न विद्यते ॥ २६ ॥ संयोगानां द्रव्यम् ॥ २७ ॥ रूपाणां रूपम् ॥ २८ ॥ गुरुत्वप्रयत्नसंयोगानामुत्क्षेपणम् ॥ २९ ॥ संयोगविभागाश्च (६) कर्मणाम् ॥ ३० ॥ कारण-सामान्ये द्रव्यकर्मणां कर्माकारणमुक्तम् ॥ ३१ ॥ इति प्रथमाध्यायस्य प्रथममाह्निकम् ॥

---

(१) द्रव्याश्रयो ऽगुणवान् संयोगविभागयोर्न कारण—पा० २ पु० ।

(२) संयोगविभागयोः—पा० ३ पु० ।

(३) द्रव्ये कारणे—पा० २ पु० ।

(४) यथा—पा० २ पु० ।

(५) न द्रव्याणां कर्म ॥ २१ ॥ व्यतिरेकात् ॥ २२ ॥ इति सूत्रद्वयमेकत्रैव "न द्रव्याणां व्यतिरेकादि"त्याकारेण लिखितं २ पुस्तके ।

(६) संयोगविभागवेगाश्च—पा० २ पु० ।

कारणाभावात् (१) कार्याभावः ॥ १ ॥ न तु कार्याभावात् कारणाभावः ॥ २ ॥ सामान्यं विशेष इति बुद्ध्यपेक्षम् ॥ ३ ॥ भावो ऽनुवृत्तेरेव हेतुत्वात् सामान्यमेव ॥ ४ ॥ द्रव्यत्वं गुणत्वं कर्मत्वं च सामान्यानि विशेषाश्च ॥ ५ ॥ अन्यत्रान्त्येभ्यो विशेषेभ्यः ॥ ६ ॥ सदिति यतो द्रव्यगुणकर्मसु सा सत्ता ॥ ७ ॥ द्रव्यगुणकर्मभ्यो ऽर्थान्तरं सत्ता ॥ ८ ॥ गुणकर्मसु च (२) भावान्न कर्म न गुणः ॥ ९ ॥ सामान्यविशेषाभावेन च ॥ १० ॥ अनेकद्रव्यवत्त्वेन द्रव्यत्वमुक्तम् ॥ ११ ॥ सामान्यविशेषाभावेन च ॥ १२ ॥ तथा गुणेषु भावाद्गुणत्वमुक्तम् ॥ १३ ॥ सामान्यविशेषाभावेन च ॥ १४ ॥ कर्मसु भावात् कर्मत्वमुक्तम् ॥ १५ ॥ सामान्यविशेषाभावेन च ॥ १६ ॥ सदितिलिङ्गाविशेषाद् विशेषलिङ्गाभावाच्चैको भावः ॥ १७ ॥ इति प्रथमाध्यायस्य द्वितीयमाह्निकम् ॥

रूपरसगन्धस्पर्शवती पृथिवी ॥ १ ॥ रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाः (३) ॥ २ ॥ तेजो रूपस्पर्शवत् ॥ ३ ॥ स्पर्शवान् वायुः ॥ ४ ॥ त आकाशे न विद्यन्ते ॥ ५ ॥ सर्पिर्जतुमधूच्छिष्टानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम् ॥ ६ ॥

---

(१) च इत्यधिकम् २ पु० ।

(२) च इति नास्ति २ पु० ।

(३) च इत्यधिकम् २ पु० ।

त्रपुसीसलोहरजतसुवर्णानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम् ॥ ७ ॥ विषाणी ककुद्मान् प्रान्तेवालधिः सास्नावान् इति गोत्वे दृष्टं लिङ्गम् ॥ ८ ॥ स्पर्शश्च वायोः (१) ॥ ९ ॥ न च दृष्टानां स्पर्श इत्यदृष्टलिङ्गो वायुः ॥ १० ॥ अद्रव्यवत्त्वेन द्रव्यम् ॥ ११ ॥ क्रियावत्त्वाद् गुणवत्त्वाच्च ॥ १२ ॥ अद्रव्यत्वेन नित्यत्वमुक्तम् ॥ १३ ॥ वायोर्वायुसंमूर्च्छनं नानात्व(२)लिङ्गम् ॥ १४ ॥ वायुसन्निकर्षे प्रत्यक्षाभावाद्दृष्टं लिङ्गं न विद्यते ॥ १५ ॥ सामान्यतो दृष्टाच्चाविशेषः ॥ १६ ॥ तस्मादागमिकम् ॥ १७ ॥ सञ्ज्ञाकर्म त्वस्मद्विशिष्टानां (३) लिङ्गम् ॥ १८ ॥ प्रत्यक्षप्रवृत्तत्वात् सञ्ज्ञाकर्मणः ॥ १९ ॥ निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम् (४) ॥ २० ॥ तदलिङ्गमेकद्रव्यत्वात् कर्मणः ॥ २१ ॥ कारणान्तरानुक्लृप्तिवैधर्म्याच्च ॥ २२ ॥ संयोगादभावः कर्मणः ॥ २३ ॥ कारणगुणपूर्वकः कार्यगुणो दृष्टः ॥ २४ ॥ कार्यान्तराप्रादुर्भावाच्च (५) शब्दः स्पर्शवतामगुणः ॥ २५ ॥ परत्र समवायात् प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुणः ॥ २६ ॥ परिशेषाल्लिङ्गमाकाशस्य ॥ २७ ॥ द्रव्यत्वनित्यत्वे

(१) वायोरिति नास्ति २ पु० ।
(२) नानात्वे—पा० २ पु० ।
(३) विशेषाणां—पा० २ पु० ।
(४) आकाशलिङ्गम्—पा० २ पु० ।
(५) च इति नास्ति—२ पु० ।

वायुना (१) व्याख्याते ॥ २८ ॥ तत्त्वम्भावेन ॥ २९ ॥ शब्द लिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च (२) ॥ ३० ॥ तदनुविधानादेकपृथक्त्वं चेति ॥ ३१ ॥ इति द्वितीयाध्यायस्य प्रथममाह्निकम् ॥

पुष्पवस्त्रयोः सति सन्निकर्षे गुणान्तराप्रादुर्भावो (३) वस्त्रे गन्धाभावलिङ्गम् ॥ १ ॥ व्यवस्थितः पृथिव्यां गन्धः ॥ २ ॥ एतेनोष्णता व्याख्याता ॥ ३ ॥ तेजस (४) उष्णता ॥ ४ ॥ अप्सु शीतता ॥ ५ ॥ अपरस्मिन्नपरं युगपत् चिरं क्षिप्रमिति काललिङ्गानि ॥ ६ ॥ द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ७ ॥ तत्त्वम्भावेन ॥ ८ ॥ नित्येष्वभावादनित्येषु भावात् कारणे कालाख्येति ॥ ९ ॥ इत इदमिति यतस्तद्दिश्यं लिङ्गम् ॥ १० ॥ द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ११ ॥ तत्त्वम्भावेन ॥ १२ ॥ कार्यविशेषेण नानात्वम् ॥ १३ ॥ आदित्यसंयोगाद्भूतपूर्वाद्भविष्यतो भूताच्च प्राची ॥ १४ ॥ तथा दक्षिणा प्रतीची उदीची च (५) ॥ १५ ॥ एतेन दिगन्तरालानि व्याख्यातानि ॥ १६ ॥ सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च संशयः ॥ १७ ॥ दृष्टं च दृष्टवत्

(१) वायुर्व्याख्याते—पा० २ पु० ।
(२) ३० सूत्रं नास्ति २ पु० ।
(३) गन्धाप्रादुर्भावो—पा० २ पु० ।
(४) तेजसि—पा० २ पु० ।
(५) उदीचीति च—पा० ३ पु० ।

॥ १८ ॥ यथादृष्टमयथादृष्टत्वाच्च ॥ १९ ॥ विद्याऽविद्यातश्च संशयः ॥ २० ॥ श्रोत्रग्रहणो योऽर्थः स शब्दः ॥ २१ ॥ तुल्यजातीयेष्वर्थान्तर (१) भूतेषु विशेषस्य उभयथा दृष्टत्वात् ॥ २२ ॥ एकद्रव्यत्वान्न द्रव्यम् ॥ २३ ॥ नापिकर्माऽचाक्षुषत्वात् (२) ॥ २४ ॥ गुणस्य सतोऽपवर्गः कर्मभिः साधर्म्यम् ॥ २५ ॥ सतो लिङ्गाभावात् ॥ २६ ॥ नित्यवैधर्म्यात् ॥ २७ ॥ अनित्यश्चायं कारणतः ॥ २८ ॥ न चासिद्धं विकारात् ॥ २९ ॥ अभिव्यक्तौ दोषात् ॥ ३० ॥ संयोगाद्विभागाच्च शब्दाच्च (३) शब्दनिष्पत्तिः ॥ ३१ ॥ लिङ्गाच्चानित्यः शब्दः ॥ ३२ ॥ द्वयोस्तु प्रवृत्त्योरभावात् ॥ ३३ ॥ प्रथमाशब्दात् ॥ ३४ ॥ सम्प्रतिपत्तिभावाच्च ॥ ३५ ॥ सन्दिग्धाः सति बहुत्वे ॥ ३६ ॥ संख्याभावः सामान्यतः ॥ ३७ ॥ इति द्वितीयाध्यायस्य द्वितीयमाह्निकम् ॥

प्रसिद्धा इन्द्रियार्थाः ॥ १ ॥ इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः ॥ २ ॥ सोऽनपदेशः ॥ ३ ॥ कारणाज्ञानात् ॥ ४ ॥ कार्येषु ज्ञानात् ॥ ५ ॥ अज्ञानाच्च ॥ ६ ॥ अन्यदेव हेतुरित्यनपदेशः ॥ ७ ॥ अर्थान्तरं ह्यर्थान्तरस्याऽनपदेशः ॥ ८ ॥ संयोगिसमवाय्येकार्थसमवायिवि-

(१) ष्ववान्तर—पा० २ पु० ।
(२) प्रत्ययस्य इत्यधिकम् २ पु० ।
(३) संयोगाद्विभागाच्छब्दाच्च—पा० २ ।

रोधि च ॥ ९ ॥ कार्यं कार्यान्तरस्य ॥ १० ॥ विरोध्यभूतं भूतस्य ॥ ११ ॥ भूतमभूतस्य ॥ १२ ॥ भूतो भूतस्य ॥ १३ ॥ प्रसिद्धिपूर्वकत्वादपदेशस्य ॥ १४ ॥ अप्रसिद्धो ऽनपदेशो ऽसन् सन्दिग्धश्चानपदेशः ॥ १५ ॥ यस्माद्विषाणी तस्मादश्वः ॥ १६ ॥ यस्माद्विषाणी तस्माद्गौरिति चानैकान्तिकस्योदाहरणम् ॥ १७ ॥ आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत् ॥ १८ ॥ प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम् ॥ १९ ॥ इति तृतीयाध्यायस्य प्रथममाह्निकम् ॥

आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावो ऽभावश्च मनसो लिङ्गम् ॥ १ ॥ तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्यते ॥ २ ॥ प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम्(१) ॥ ३ ॥ प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि ॥ ४ ॥ तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ५ ॥ यज्ञदत्त इति सन्निकर्षे प्रत्यक्षाभावाद्दृष्टं लिङ्गं न विद्यते ॥ ६ ॥ सामान्यतो दृष्टाच्चाविशेषः ॥ ७ ॥ तस्मादागमिकः ॥ ८ ॥ अहमिति शब्दस्य व्यतिरेकान्नागमिकम् ॥ ९ ॥ यदि दृष्टमन्वक्षमहं (२)देवदत्तो ऽहं यज्ञदत्त इति ॥ १० ॥ दृष्टयात्मनि (३)लिङ्गे

---

(१) मन इत्यधिकम् २ पु० ।
(२) यद्दृष्टं प्रत्यक्षमहं—पा० २ पु० ।
(३) दृष्टे आत्मनि—पा० २ पु० ।

एक एव दृढत्वात् प्रत्यक्षवत् प्रत्ययः ॥ ११ ॥ देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युपचाराच्छरीरे प्रत्ययः ॥ १२ ॥ सन्दिग्धस्तूपचारः ॥ १३ ॥ अहमिति प्रत्यगात्मनि भावात् परत्राभावादर्थान्तरप्रत्यक्षः ॥ १४ ॥ देवदत्तो गच्छतीत्युपचारादभिमानात्तावच्छरीरप्रत्यक्षोऽहङ्कारः ॥ १५ ॥ सन्दिग्धस्तूपचारः ॥ १६ ॥ न तु शरीरविशेषाद् यज्ञदत्तविष्णुमित्रयोर्ज्ञानं(१) विषयः ॥ १७ ॥ अहमिति मुख्ययोग्याभ्यां शब्दवद्व्यतिरेकाव्यभिचाराद्विशेषसिद्धेर्नागमिकः ॥ १८ ॥ सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम् ॥ १९ ॥ व्यवस्थातो नाना ॥ २० ॥ शास्त्रसामर्थ्याच्च(२) ॥ २१ ॥ इति तृतीयाध्यायस्य द्वितीयमाह्निकम् ॥

सदकारणवन्नित्यम् ॥ १ ॥ तस्य कार्यं लिङ्गम् ॥ २ ॥ कारणभावात् कार्यभावः ॥ ३ ॥ अनित्य इति विशेषतः प्रतिषेधभावः ॥ ४ ॥ अविद्या ॥ ५ ॥ महत्यनेकद्रव्यवत्त्वात् रूपाच्चोपलब्धिः ॥ ६ ॥ सत्यपि द्रव्यत्वे महत्त्वे रूपसंस्काराभावाद्वायोरनुपलब्धिः ॥ ७ ॥ अनेकद्रव्यसमवायात् रूपविशेषाच्च रूपोपलब्धिः ॥ ८ ॥ तेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम् ॥ ९ ॥ तस्याभावादव्यभिचारः ॥ १० ॥ सङ्ख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे

(१) ज्ञापनं—पा० २ पु० ।

(२) सामान्याच्च—पा० २ पु० ।

कर्म च रूपिद्रव्यसमवायात् चाक्षुषाणि (१) ॥ ११ ॥ अरूपिष्वचाक्षुषाणि ॥ १२ ॥ एतेन गुणत्वे भावे च सर्वेन्द्रियं ज्ञानं (२) व्याख्यातम् ॥ १३ ॥ इति चतुर्थाध्यायस्य प्रथममाह्निकम् ॥

तत्पुनः पृथिव्यादिकार्यद्रव्यं त्रिविधं शरीरेन्द्रियविषयसञ्ज्ञकम् ॥ १ ॥ प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात् पञ्चात्मकं न विद्यते ॥ २ ॥ गुणान्तराप्रादुर्भावाच्च न त्र्यात्मकम् ॥ ३ ॥ अणुसंयोगस्त्वप्रतिषिद्धः ॥ ४ ॥ तत्र शरीरं द्विविधं योनिजमयोनिजं च ॥ ५ ॥ अनियतदिग्देशपूर्वकत्वात् ॥ ६ ॥ धर्मविशेषाच्च ॥ ७ ॥ समाख्याभावाच्च ॥ ८ ॥ सञ्ज्ञाया आदित्वात् ॥ ९ ॥ सन्त्ययोनिजाः ॥ १० ॥ वेदलिङ्गाच्च ॥ ११ ॥ इति चतुर्थाध्यायस्य द्वितीयमाह्निकम् ॥

आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म ॥ १ ॥ तथा हस्तसंयोगाच्च मुषले कर्म ॥ २ ॥ अभिघातजे मुषलादौ कर्मणि व्यतिरेकादकारणं हस्तसंयोगः ॥ ३ ॥ तथात्मसंयोगो हस्तकर्मणि ॥ ४ ॥ अभिघातान्मुषलसंयोगाद्धस्ते कर्म ॥ ५ ॥ आत्मकर्म हस्तसंयोगाच्च ॥ ६ ॥ संयोगाभावे गुरुत्वात् पतनम् ॥ ७ ॥ नोदनविशेषाभावान्नोर्द्ध्वं न तिर्य्यग्गमनम् ॥ ८ ॥ प्रयत्न(३)विशेषान्नोदनविशेषः ॥ ९ ॥

(१) प्रत्यक्षाणीत्यधिकं २ पु० ।
(२) सर्वेन्द्रियज्ञं—पा० २ पु० ।
(३) यत्न—पा० २ पु० ।

नोदनविशेषादुदसन(१)विशेषः ॥ १० ॥ हस्तकर्मणा दारककर्म (२) व्याख्यातम् ॥ ११ ॥ तथा दग्धस्य विस्फोटने ॥ १२ ॥ यत्नाभावे (३) प्रसुप्तस्य चलनम् ॥ १३ ॥ तृणे कर्म वायुसंयोगात् ॥ १४ ॥ मणिगमनं सूच्यभिसर्पणमदृष्ट(४)कारणम् ॥ १५ ॥ इषावयुगपत् संयोगविशेषाः कर्मान्यत्वे हेतुः ॥ १६ ॥ नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरं च ॥ १७ ॥ संस्काराभावे गुरुत्वात् पतनम् ॥ १८ ॥ इति पञ्चमाध्यायस्य प्रथममाह्निकम् ॥

नोदनाभिघातात्(५) संयुक्तसंयोगाच्च पृथिव्यां कर्म ॥ १ ॥ तद्विशेषेणादृष्टकारितम् (६) ॥ २ ॥ अपां संयोगाभावे गुरुत्वात् पतनम् ॥ ३ ॥ द्रवत्वात् स्यन्दनम् ॥ ४ ॥ नाड्यो वायुसंयोगा(७) दारोहणम् ॥ ५ ॥ नोदनापीडनात् संयुक्तसंयोगाच्च ॥ ६ ॥ वृक्षाभिसर्पणमित्यदृष्टकारितम् ॥ ७ ॥ अपां संघातो विलयनं (८) च तेजः(९)संयोगात् ॥ ८ ॥

---

(१) पतन—पा० २ पु० ।
(२) बालककर्म—पा० २ पु० ।
(३) प्रयत्नाभावे—पा० २ पु० ।
(४) सूच्यभिसर्पणमित्यदृष्ट—पा० २ पु० ।
(५) नोदनादभिघातात्—पा० २ पु० ।
(६) दृष्टकारि—पा० २ पु० ।
(७) नाड्यवायुसंयोगा—पा० ३ पु० ।
(८) विलयं—पा० २ पु० ।
(९) तेजसः—पा० २ पु०

तत्र विस्फूर्जथु(१)र्लिङ्गम् ॥ ९ ॥ वैदिकं च ॥ १० ॥ अपां संयोगाद्विभागाच्च (२) स्तनयित्नोः ॥ ११ ॥ पृथिवीकर्मणा तेजःकर्म वायुकर्म च व्याख्यातम् ॥ १२ ॥ अग्नेरूर्द्ध्वज्वलनं वायोस्तिर्यक्पवन(३)मणूनां मनसश्चाद्यं कर्मादृष्टकारितम् ॥ १३ ॥ हस्तकर्मणा मनसः कर्म व्याख्यातम् ॥ १४ ॥ आत्मेन्द्रियमनोऽर्थसन्निकर्षात् सुखदुःखे ॥ १५ ॥ तदनारम्भ आत्मस्थे मनसि शरीरस्य दुःखाभावः (४) स योगः ॥ १६ ॥ (५) अपसर्पणमुपसर्पणमशितपीतसंयोगाः कार्यान्तरसंयोगाश्चेत्यदृष्टकारितानि ॥ १७ ॥ तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्षः ॥ १८ ॥ द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादभावस्तमः ॥ १९ ॥ तेजसो द्रव्यान्तरेणावरणाच्च ॥ २० ॥ दिक्कालावाकाशं च क्रियावद्वैधर्म्यान्निष्क्रियाणि ॥ २१ ॥ एतेन कर्माणि गुणाश्च व्याख्याताः ॥ २२ ॥ निष्क्रियाणां समवायः कर्मभ्यो निषिद्धः ॥ २३ ॥ कारणं त्वसमवायिनो गुणाः ॥ २४ ॥ गुणै(६)र्दिग् व्याख्याता ॥ २५ ॥ कारणेन कालः ॥ २६ ॥

इति पञ्चमाध्यायस्य द्वितीयमाह्निकम् ॥

---

(१) तत्राविस्फुर्जथु—पा० ३ पु० ।
(२) संयोगविभागाच्च—पा० २ पु० ।
(३) तिर्यग्गमन—पा० ३ पु० ।
(४) सुखदुःखाभावः—पा० २ पु० ।
(५) कार्यकर्मणात्मकर्म व्याख्यातमित्यधिकम् २ पु० ।
(६) गुणेन—पा० २ पु० ।

बुद्धिपूर्वा वाक्यकृतिर्वेदे ॥ १ ॥ ब्राह्मणे संज्ञाकर्म सिद्धिलिङ्गम् ॥ २ ॥ बुद्धिपूर्वो ददातिः ॥ ३ ॥ तथा प्रतिग्रहः ॥ ४ ॥ आत्मान्तरगुणानामात्मान्तरे(१) ऽकारणत्वात् ॥ ५ ॥ तद्दुष्टभोजने न विद्यते ॥ ६ ॥ दुष्टं हिंसायाम् ॥ ७ ॥ तस्य समभिव्याहारतो दोषः ॥ ८ ॥ तददुष्टे न विद्यते ॥ ९ ॥ पुनर्विशिष्टे प्रवृत्तिः ॥ १० ॥ समे हीने वा प्रवृत्तिः ॥ ११ ॥ एतेन हीनसमविशिष्टधार्मिकेभ्यः परस्वादानं व्याख्यातम् ॥ १२ ॥ तथा विरुद्धानां त्यागः ॥ १३ ॥ हीने परे त्यागः ॥ १४ ॥ समे आत्मत्यागः परत्यागो वा ॥ १५ ॥ विशिष्टे आत्मत्याग इति ॥ १६ ॥ इति षष्ठाध्यायस्य प्रथममाह्निकम् ॥

दृष्टादृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युदयाय ॥ १ ॥ अभिषेचनोपवासब्रह्मचर्यगुरुकुलवासवानप्रस्थयज्ञदानप्रोक्षणदिङ्नक्षत्रमन्त्रकालनियमाश्चादृष्टाय(२) ॥ २ ॥ चातुराश्रम्यमुपधा अनुपधाश्च ॥ ३ ॥ भावदोष उपधाऽदोषोऽनुपधा ॥ ४ ॥ यदिष्टरूपरसगन्धस्पर्शं प्रोक्षितमभ्युक्षितं च तच्छुचि ॥ ५ ॥ अशुचीति शुचिप्रतिषेधः ॥ ६ ॥ अर्थान्तरं च ॥ ७ ॥ अयतस्य शुचिभोजनादभ्युदयो न विद्यते नियमाभावाद् विद्यते वा(३)ऽर्थान्तरत्वाद् य-

(१) आत्मान्तरेष्वकारण—पा० २ पु० ।

(२) अदृष्टार्थं—पा० २ पु० ।

(३) चा—पा० २ पु० ।

मस्य ॥ ८ ॥ असति चाभावात् ॥ ९ ॥ सुखाद्रागः ॥ १० ॥ तन्मयत्वाच्च ॥ ११ ॥ अदृष्टाच्च ॥ १२ ॥ जातिविशेषाच्च ॥ १३ ॥ इच्छाद्वेषपूर्विका धर्माधर्म(१)प्रवृत्तिः ॥ १४ ॥ तत्संयोगोविभागः ॥ १५ ॥ आत्मकर्मसु मोक्षो व्याख्यातः ॥ १६ ॥

इति षष्ठाध्यायस्य द्वितीयमाह्निकम् ॥

उक्ता गुणाः ॥ १ ॥ पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याश्च ॥ २ ॥ एतेन नित्येषु नित्यत्वमुक्तम् ॥ ३ ॥ अप्सु तेजसि वायौ च नित्या द्रव्यनित्यत्वात् ॥ ४ ॥ अनित्येष्वनित्या द्रव्यानित्यत्वात् ॥ ५ ॥ कारणगुणपूर्वकाः पृथिव्यां पाकजाः ॥ ६ ॥ एकद्रव्यत्वात् ॥ ७ ॥ अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते ॥ ८ ॥ कारणबहुत्वाच्च ॥ ९ ॥ अतो विपरीतमणु ॥ १० ॥ अणु महदिति तस्मिन् विशेषभावात् विशेषाभावाच्च ॥ ११ ॥ एककालत्वात् ॥ १२ ॥ दृष्टान्ताच्च ॥ १३ ॥ अणुत्वमहत्त्वयोरणुत्वमहत्त्वाभावः कर्मगुणैर्व्याख्यातः ॥ १४ ॥ कर्मभिः कर्माणि गुणैश्च(२) गुणा व्याख्याताः ॥ १५ ॥ अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च व्याख्याताः ॥ १६ ॥ एतेन दीर्घत्वह्रस्वत्वे व्याख्याते ॥ १७ ॥ अनित्येऽनित्यम् ॥ १८ ॥ नित्ये नित्यम् ॥ १९ ॥ नित्यं परिमण्डलम् ॥ २० ॥ अविद्या च(३) विद्यालिङ्गम्

(१) धर्माधर्मयोः—पा० २ पु० ।
(२) चेति नास्ति २ पु० ।
(३) चेति नास्ति २ पु० ।

॥ २१ ॥ विभवा(१)न्महानाकाशस्तथा चात्मा ॥ २२ ॥ तदभावादणु मनः ॥ २३॥ गुणैर्दिग् व्याख्याता ॥ २४ ॥ कारणे कालः ॥ २५ ॥ इति सप्तमाध्यायस्य प्रथममाह्निकम् ॥

रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरमेकत्वम् ॥ १ ॥ तथा पृथक्त्वम् ॥ २ ॥ एकत्वैकपृथक्त्वयोरेकत्वैकपृथक्त्वाभावो ऽणुत्वमहत्त्वाभ्यां(२) व्याख्यातः ॥ ३ ॥ निःसंख्यत्वात् कर्मगुणानां सर्वैकत्वं न विद्यते ॥ ४ ॥ भ्रान्तं तत् ॥ ५ ॥ एकत्वाभावाद्भक्तिस्तु न विद्यते ॥ ६ ॥ कार्यकारणयोरेकत्वैकपृथक्त्वाभावादेकत्वैकपृथक्त्वं न विद्यते ॥ ७ ॥ एतदनित्ययोर्व्याख्यातम् ॥ ८ ॥ अन्यतरकर्मज उभयकर्मजः(३) संयोगजश्च संयोगः ॥ ९ ॥ एतेन विभागो व्याख्यातः ॥ १० ॥ संयोगविभागयोः संयोगविभागाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥ ११ ॥ कर्मभिः कर्माणि गुणैर्गुणा अणुत्वमहत्त्वाभ्यामिति ॥ १२ ॥ युतसिद्ध्यभावात् कार्यकारणयोः संयोगविभागौ न विद्येते ॥ १३ ॥ गुणत्वात् ॥ १४ ॥ गुणोऽपि विभाव्यते ॥ १५ ॥ निष्क्रियत्वात् ॥ १६ ॥ असति(४) नास्तीति च प्रयोगा-

(१) विभुत्वा—पा० २ पु० ।

(२) एकत्वैकपृथक्त्वयोर्नैकत्वैकपृथक्त्वभावो ऽणुत्वमहत्त्वाभ्यां—पा० ३ पु० ।

(३) उभयकर्मजन्यः—पा० २ पु० ।

(४) अस्मिन्—पा० २ पु० ।

न ॥ १७ ॥ शब्दार्थावसम्बन्धौ(१) ॥ १८ ॥ संयोगिनो दण्डात् समवायिनो विशेषाच्च ॥ १९ ॥ सामयिकः शब्दादर्थप्रत्ययः ॥ २० ॥ एकदिक्काभ्यामेककालाभ्यां(२) सन्निकृष्टविप्रकृष्टाभ्यां परमपरं च ॥ २१ ॥ कारणपरत्वात् कारणापरत्वाच्च (३) ॥ २२ ॥ परत्वापरत्वयोः परत्वापरत्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥ २३ ॥ कर्मभिः कर्माणि ॥ २४ ॥ गुणैर्गुणाः (४) ॥ २५ ॥ इहेदमिति यतः कार्यकारणयोः स समवायः ॥ २६ ॥ द्रव्यत्वगुणत्वप्रतिषेधो भावेन व्याख्यातः ॥ २७ ॥ तत्त्वम्भावेन ॥ २८ ॥ इति सप्तमाध्यायस्य द्वितीयमाह्निकम् ॥

द्रव्येषु ज्ञानं व्याख्यातम् ॥ १ ॥ तत्रात्मा मनश्चाप्रत्यक्षे ॥ ॥ २ ॥ ज्ञाननिर्देशे ज्ञाननिष्पत्तिविधिरुक्तः ॥ ३ ॥ गुणकर्मसु सन्निकृष्टेषु ज्ञाननिष्पत्तेर्द्रव्यं कारणम् ॥ ४ ॥ सामान्यविशेषेषु सामान्यविशेषाभावात्तत एव ज्ञानम् ॥ ॥ ५ ॥ सामान्यविशेषापेक्षं द्रव्यगुणकर्मसु ॥ ६ ॥ द्रव्ये द्रव्यगुणकर्मापेक्षम् ॥ ७ ॥ गुणकर्मसु गुणकर्माभावाद्गुणकर्मापेक्षं न विद्यते ॥ ८ ॥ समवायिनः श्वैत्याच्छ्वैत्यबुद्धेश्च श्वेते बुद्धिस्ते एते कार्यकारणभूते ॥ ९ ॥ द्रव्येष्व-

(१) शब्दार्थावसम्बद्धौ—पा० २ पु० ।

(२) एकदिक्कालाभ्यां—पा० २ । ३ पु० ।

(३) परत्वापरत्वे इत्यधिकम् २ पु० ।

(४) कर्मभिः कर्माणि ॥ २४ ॥ गुणैर्गुणाः ॥ २५ ॥ इति सूत्रद्वयं नास्ति २ पु० ।

नितरेतरकारणाः ॥ १० ॥ कारणायौगपद्यात् कारणक्रमाच्च घटपटादिबुद्धीनां क्रमो न हेतुफलभावात् ॥ ११ ॥
इत्यष्टमाध्यायस्य प्रथममाह्निकम् ॥

अयमेष त्वया कृतं भोजयैनमिति बुद्ध्यपेक्षम् ॥ १ ॥ दृष्टेषु भावाददृष्टेष्वभावात् ॥ २ ॥ अर्थ इति द्रव्यगुणकर्मसु ॥ ३ ॥ द्रव्येषु पञ्चात्मकत्वं प्रतिषिद्धम् (१) ॥ ४ ॥ भूयस्त्वाद् गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः ॥ ५ ॥ तथापस्तेजोवायुश्च रसरूपस्पर्शाविशेषात् ॥ ६ ॥ इत्यष्टमाध्यायस्य द्वितीयमाह्निकम् ॥

क्रियागुणव्यपदेशाभावात् प्रागसत् ॥ १ ॥ सदसत् ॥ २ ॥ असतः क्रियागुणव्यपदेशाभावादर्थान्तरम् ॥ ३ ॥ सच्चासत् ॥ ४ ॥ यच्चान्यदसदतस्तदसत् ॥ ५ ॥ असदिति भूतप्रत्यक्षाभावात् भूतस्मृतेर्विरोधिप्रत्यक्षवत् ॥ ६ ॥ तथाऽभावे भावप्रत्यक्षत्वाच्च ॥ ७ ॥ एतेनाघटोऽगौरधर्मश्च व्याख्यातः ॥ ८ ॥ अभूतं नास्तीत्यनर्थान्तरम् ॥ ९ ॥ नास्ति घटो गेहे इति सतो घटस्य गेहसंसर्गप्रतिषेधः ॥ ॥ १० ॥ आत्मन्यात्ममनसोः संयोगविशेषा(२)दात्मप्रत्यक्षम् ॥ ११ ॥ तथा द्रव्यान्तरेषु प्रत्यक्षम्(३) ॥ १२ ॥

---

(१) प्रतिषिद्धमिति शेषः—पा० ३ पु० ।
(२) सन्निकर्षविशेषात्—पा० ३ पु० ।
(३) प्रत्यक्षमिति नास्ति २ पु० ।

असमाहितान्तःकरणा उपसंहृतसमाधयस्तेषां च ॥ १३ ॥ तत्समवायात् कर्मगुणेषु ॥ १४ ॥ आत्मसमवायादात्मगुणेषु ॥ १५ ॥ इति नवमाध्यायस्य प्रथममाह्निकम् ॥

अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम् ॥ १ ॥ अस्येदं कार्यकारणसम्बन्धश्चावयवाद्भवति ॥ २ ॥ एतेन शाब्दं व्याख्यातम् ॥ ३ ॥ हेतुरपदेशो लिङ्गं प्रमाणं करण(१)मित्यनर्थान्तरम् ॥ ४ ॥ अस्येदमिति बुद्ध्यपेक्षितत्वात् ॥ ५ ॥ आत्ममनसोः संयोगविशेषात् संस्काराच्च स्मृतिः ॥ ६ ॥ तथा स्वप्नः ॥ ७ ॥ स्वप्नान्तिकम् ॥ ८ ॥ धर्माच्च ॥ ९ ॥ इन्द्रियदोषात् संस्कारदोषाच्चाविद्या ॥ १० ॥ तद्दुष्टज्ञानम् ॥ ११ ॥ अदुष्टं विद्या ॥ १२ ॥ आर्षं सिद्धदर्शनं च धर्मेभ्यः ॥ १३ ॥ इति नवमाध्यायस्य द्वितीयमाह्निकम् ॥

इष्टानिष्टकारणविशेषाद्विरोधाच्च मिथः सुखदुःखयोरर्थान्तरभावः ॥ १ ॥ संशयनिर्णयान्तराभावश्च ज्ञानान्तरत्वे हेतुः ॥ २ ॥ तयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्याम् ॥ ३ ॥ अभूदित्यपि ॥ ४ ॥ सति च कार्यादर्शनात् ॥ ५ ॥ एकार्थसमवायिकारणान्तरेषु दृष्टत्वात् ॥ ६ ॥ एकदेश इत्येकस्मिन् शिरः पृष्ठमुदरं मर्माणि तद्विशेषस्तद्विशेषे-

(१) करणमिति नास्ति २ पु० ।

भ्यः ॥ ७ ॥ इति दशमाध्यायस्य प्रथममाह्निकम् ॥

कारणमिति द्रव्ये कार्यसमवायात् ॥ १ ॥ संयोगाद्वा ॥ २ ॥ कारणे समवायात् कर्माणि ॥ ३ ॥ तथा रूपे कारणैकार्थसमवायाच्च ॥ ४ ॥ कारणसमवायात् संयोगः पटस्य ॥ ५ ॥ कारणकारणसमवायाच्च ॥ ६ ॥ संयुक्तसमवायादग्नेर्वैशेषिकम् ॥ ७ ॥ दृष्टानां दृष्टप्रयोजनानां दृष्टाभावे प्रयोगोऽभ्युदयाय ॥ ८ ॥ (१) तद्वचनादाम्नायस्य प्रामाण्यमिति(२) ॥ ९ ॥ इति दशमाध्यायस्य द्वितीयमाह्निकम् ॥

इति भगवत्कणादमहर्षिप्रणीतानि वैशेषिकसूत्राणि समाप्तानि ॥

---

(१) अस्मद्बुद्धिभ्यो लिङ्गमृषेः इत्यधिकम् २ पु० ।
(२) तद्वचनादाम्नायप्रामाण्यमिति—पा० २ पु० ।



# वैशेषिकदर्शनस्य

# प्रशस्तपादविरचितभाष्यम्

## किरणावलीटीकासहितम् ।

श्रीगणेशाय नमः ।

विद्यासन्ध्योदयोद्रेकादविद्यारजनीक्षये ।
यदुदेति नमस्तस्मै कस्मैचिद्विश्वतस्त्विषे(१) ॥ १ ॥

---

श्रीमत्कैलासचन्द्राख्यान् गुरून् बुधशिरोमणीन् ।
नत्वा वैशेषिके तन्त्रे वृत्तिं सङ्कलयाम्यहम् ॥ १ ॥

(१) कर्तव्यविघ्नविघातकं रविनमस्कारं निबध्नाति । विद्येति । यदिति सामान्यतोऽपि कर्तृनिर्देशे विद्याविद्ययोः सन्ध्यारजनीभ्यां निरूपणाद्रविरुदेता लभ्यते । विद्येव या पूर्वसन्ध्या तदुदयोद्रेकादुत्पत्त्याधिक्यादविद्येव या रजनी तत्क्षये सति यदुदेति उदयगिरिशिखरमधिरोहति । सन्ध्या च न रात्रेर्भागविशेषः । निरस्तैतद्द्वीपवर्तिरविरश्मिजालस्य कालविशेषस्य रात्रित्वात् । सन्ध्याया चात्र द्वीपे कतिपयतत्सत्त्वात् । अत एव रात्रिसन्ध्ययोर्धर्मशास्त्रे पृथगभिधानम् । यद्वा* ल्यपूलोपे पञ्चमी सप्तमी च निमित्ततायां तथा च विद्याहेतुर्या सन्ध्या तदुदयोद्रेकं प्राप्याविद्याहेतुर्या रजनी तत्क्षयार्थं यदुदेति तस्मै विश्वतो विश्वस्मात् त्विट् दीप्तिर्यस्य तथाभूताय कस्मैचिद्विशिष्याशक्यनिर्वचनतत्तद्गुणगरिम्णे नमः । यद्वा एच्छास्त्रसाध्यमोक्षहेतुतत्त्वज्ञानविषयाय आत्मन एवायं नमस्कारः । विद्या आत्मसाक्षात्कारः सैव तत्त्वप्रकाशकत्वात्सन्ध्या तदुदयोद्रेकाद् दृढतरसंस्कारजननादविद्या आत्मनि मिथ्याज्ञानं सैव तज्ज्ञानविरोधित्वाद्रागजनकत्वाद्वा रजनी तस्याः क्षये सति यदात्मस्वरूपमुदेति मोक्षरूपप्रयोजनभाग् भवति त-

---

* ननु निरस्तरविकत्वमेककालस्य रात्रित्वं लाघवात् अतः सन्ध्यापि रात्रिरेव धर्मशास्त्रे पृथगुपादानं गोबलीवर्दन्यायेन दोषातिशयप्रतिपादनार्थमित्यस्वरसादाह यद्वेति । इति किरणावलीप्रकाशव्याख्यायां द्रव्यप्रकाशिकायां भगीरथठक्कुरः ।

यतो द्रव्यं गुणाः कर्म तथा जातिः परापरा ।
विशेषाः समवायो वा तमीश्वरमुपास्महे(१) ॥ २ ॥
अर्थानां प्रविवेचनाय जगतामन्तस्तमःशान्तये
सन्मार्गस्य विलोकनाय गतये लोकस्य यात्रार्थिनः ।
तत्तत्तामसभूतभीतय(२) इमां विद्यावतां प्रीतये
व्यातेने(३) किरणावलीमुदयनः सत्तर्कतेजोमयीम् ॥ ३ ॥

---

स्मै कस्मैचित् सर्वोत्कृष्टाय विश्वतास्त्विषे योगजधर्मसाचिव्याद्विश्वविषयकज्ञानाय नम इति किरणावलीप्रकाशे वर्द्धमानोपाध्यायाः ॥

(१) एतच्छास्त्रप्रतिपाद्यपदार्थोद्देशं कुर्वन्नेव नमस्कारवद्रूपान्तरेणापि भगवदुपासनमिष्टसाधनमिति दर्शयति ।

यत इति । उत्पत्तिज्ञप्तिहेतुत्वं नित्यानित्ययोर्यथायोगम् अत्र द्रव्याणां बहुत्वेप्यात्मनः प्राधान्यख्यापनाय द्रव्यमित्येकवचनम् । तद्विषयाणां श्रवणादिप्रतिपत्तीनां बहुत्वं गुणा इति बहुवचनेन व्यज्यते । परा व्यापिका । अपरा व्याप्या । वाशब्दः समुच्चये । यद्वा द्रव्यं हिरण्यादि गुणाः शास्त्रादयः कर्म हिताहितहेतुव्यापारः जातिः परा उत्कृष्टा ब्राह्मणत्वादिः अपरा अधमा चाण्डालत्वादिः जातेरनिमित्तकत्वेपि तज्जातीयशरीरोत्पत्तिस्तद्धेतुका । विशेषातिशयरूपाः । समवायो मेलकः सदसद्भ्यां सह इत्येतत्सर्वं यत ईश्वराद्भवति स उपास्यः इति युक्तमिति । कि० प्र० व० ॥

(२) तत्तदिति । तेते तामसाः कुतर्काभ्यासजनिततमोगुणप्रधाना नास्तिकाः नक्तंचराश्च भूताः प्राणिनस्तेषां भीतये भीत्यै । प्राचीननिबन्धाश्च सौगताद्युद्भावितकुहेतुसन्तमसाच्छादितास्तत्त्वज्ञानाय न पर्याप्ता इति तन्निरासाय । कि० प्र० व० ॥

(३) व्यातेने व्यातनोत् । आशंसायां भूतवच्चेत्याशंसायां लिडिति मतमयुक्तं तत्र भूतसामान्यप्रत्ययस्यैवातिदेशात् भूतविशेषविहितयोर्लङ्लिटोरनातिदेशात् तिङन्तप्रतिरूपकोयं निपातः । चक्रे सुबन्धुः सुजनैकबन्धुरितिवदिति केचित् । वस्तुतो णलुत्तमो वेति ज्ञापकात् कर्त्रपरोक्षेपि लिट् साधुः । ग्रन्थकरणरभसवशेन चित्तविक्षेपो वा ऋजुवस्तुनायमाचार्यस्य श्लोकः किन्त्वन्यस्येति समादधुः । कि० प्र० व० ॥

प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः ।
पदार्थधर्मसंग्रहः प्रवक्ष्यते महोदयः ॥ १ ॥

---

अतिविरसमसारं मानवार्ताविहीनं
प्रविततबहुवेलप्रक्रियाजालदुःस्थम् ।
उदधिसममतन्त्रं तन्त्रमेतद्वदन्ति
प्रखलजडधियो ये ते ऽनुकम्प्यन्त एते ॥ ४ ॥

शास्त्रारम्भे सदाचारपरिप्राप्ततया कायवाङ्मनोभिः कृतं परापरगुरुनमस्कारं शिष्यान् शिक्षयितुमादौ निबध्नाति । प्रणम्येति । कर्तव्यापेक्षया पूर्वकालभावित्वात् प्रणामस्य क्त्वानिर्देशः । भक्तिश्रद्धातिशयलक्षणः प्रकर्षः(१) प्रशब्देन द्योत्यते । तथाभूता हि परमेश्वरनतिर्मङ्गलमावहति (२) । कृतमङ्गलेन चारब्धं कर्म निर्विघ्नं परिसमाप्यते प्रचीयते(३) च । आगममूलत्वाच्चास्यार्थस्य व्यभिचारो न दोषाय(४) । तस्य

---

(१) ननु नत्वेत्यनेनैव नमस्कारनिबन्धनात् प्रशब्दो व्यर्थ इत्यत आह । भक्तीति । आराध्यत्वेन ज्ञानं भक्तिः । आराधना च गौरवितप्रीतिहेतुः क्रिया । वेदबोधितफलावश्यंभावनिश्चयः श्रद्धा । यद्वा* भक्तिश्रद्धे ज्ञानत्वव्याप्यजातिविशेषौ । कि० प्र० व० ॥

(२) मङ्गलं भवति—पा० २ पु० ।

(३) प्रचयश्च प्रारिप्सितग्रन्थस्य गुरूणा शिष्याय दानस्याविच्छेदः । कि०प्र०व०॥

(४) आगमेति । दोषाय यो व्यभिचारो व्याप्यव्यभिचारः विनापि मङ्गलं नि-

---

* ननु प्रीतिजनकतावच्छेदकं फलावश्यम्भावावच्छेदकं च रूपं प्रतीतं न वा आद्ये तन्निश्चय एव प्रवर्तकः तदेव च प्रकर्ष उपजीव्यत्वात् अन्त्ये कथमुक्तरूपनिश्चयो ऽपीत्यरुचेराह यद्वेति । भक्तिश्रद्धेति । भावप्रधानो निर्देशः । तेनादृष्टविशेषोपगृहीतमनःप्रयोज्यौ नमस्कारहेतुज्ञाननिष्ठजातिविशेषौ भक्तित्वश्रद्धात्वे क्रियातौल्येपि फलसत्त्वासत्त्वाभ्यां कल्प्येते इति भावः । कि० प्र० व्या० भ० ॥

कर्तृकर्मसाधनवैगुण्यहेतुकत्वात् । साद्गुण्ये ऽपि विघ्नहेतूनां बलीयस्त्वात् । न चैवं सति किमनेनेति वाच्यं प्रचितस्यास्यैव बलवत्तरविघ्नवारणे ऽपि कारणत्वात् । नहि घनविमुक्तमुद्गकर्मिकस्तृणस्तम्बो निवारयितुमसमर्थ इति तदर्थं नोपादीयते । सजातीयप्रचयसम्वलितस्य विघ्नवारणे शक्तत्वात् । न च विघ्नहेतुसद्भावनिश्चयाभावात् तद्वारणे कारणमनुपादेयम् । यतस्तत्सन्देहे ऽपि तदुपादानस्य न्याय्यत्वात् । अन्यथानुपस्थितपरिपन्थिभिः पार्थिवैर्द्विरदयूथपतयो नाद्रियेरन्निति । ईश्वरमित्यनेनैव लब्धे जगद्धेतुत्वे हेतुमिति पुनर्विशेषणोपादानं प्रमाणसूचनाय । कार्यं हि हेतुना विनात्मानमनाप्नुवद्धेतुमत्तया कर्तारमाक्षिपति ईश्वरपदसन्निधिप्रयुक्तो वा हेतुशब्दो विशिष्ट एव श्रेयः समधिगमनिमित्ते प्रवर्तते । प्रस्तुतशास्त्रहेतुत्वाद्वा हेतुमित्याह । स्मर्यते हि यत् कणादो मुनिर्महेश्वरनियोगप्रसादादवधिगम्य शास्त्रं प्रणीतवांस्तेन तं हेतुं प्रणम्य मया संग्रहः प्रवक्ष्यत इत्यर्थः । अतः ईश्वरप्रणामादनु पश्चात् कणादनामानं मुनिं प्रणम्येत्यनुषज्यते । यद्यपि गुरुतमगुरुतरगुरुक्रमेणैव प्रणामः क्रियत इति शिष्टाचारादेव लभ्यते तथापि शिष्यशिक्षायै क्रमो निबद्धो ऽन्विति । तथा च मुनिप्रणतेः पश्चाद्भावे दर्शिते सन्निधिसिद्धमवधित्वमीश्वरप्रणामस्येत्यत इति मन्दप्रयोजनमित्यपि न वाच्यम् । श्रुतिप्राप्ते ऽर्थे प्रकरणादीना-

---

विघ्नं समीहितसिद्धिरित्येवंरूपः स इह नास्ति कुतः आगममूलत्वात् । अस्यार्थस्य कार्यकारणभावस्य तथा चागमात् कार्यकारणभावे ऽवधृते यत्रापाततो नमस्कारादर्शनेऽपि निर्विघ्नं समाप्तिर्दृश्यते तत्रापि तयैव लिङ्गेन जन्मान्तरीयो नमस्कारो ऽनुमीयत इत्यर्थः । कि० प्र० व० ॥

**द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानं निःश्रेयसहेतुः ॥**

---

मनवकाशात् । अथवा यतः शुश्रूषवः श्रेयोर्थिनः श्रवणादिपटवोऽनसूयकाश्चान्तेवासिन उपसेदुरतो वक्ष्यत इत्यनेन सूच्यते । अन्यथाऽरण्यरुदितं स्यादित्यपि शिष्यशिक्षायै । एवं हि शिक्षिते शिष्या अपि तथा कुर्युस्तथा चाविच्छिन्नसम्प्रदायवीर्यवत्तरं शास्त्रं स्यात् । येन विद्यैवाह । विद्याह वै ब्राह्मणमाजगाम । गोपायमाशे वधीष्टेऽहमस्मि । असूयकायाऽनृजवे जडाय न मां ब्रूया अवीर्यवती तथा स्यामिति । एतेन सौत्रमप्यतःपदं(१) व्याख्यातं स्यात् । पदार्थधर्मसंग्रह इति । पदार्था द्रव्यादयस्तेषां धर्माः साधर्म्यवैधर्म्यरूपास्त एव परस्परं विशेषणीभूतास्ते ऽनेन सङ्गृह्यन्ते । शास्त्रे नानास्थानेषु वितता एकत्र सङ्कलय्य कथ्यन्त इति संग्रहः । स प्रकृष्टो वक्ष्यते । प्रकरणशुद्धेः संग्रहपदेनैव दर्शितत्वात् । वैशद्यं लघुत्वं कात्स्न्र्यं च प्रकर्षः । सूत्रे षु वैशद्याभावात् । भाष्यस्य च विस्तरत्वात् । प्रकरणादीनां चैकदेशत्वात् । एतेनाभिधेयं दर्शितम् । न च तत्प्रतीतावपि प्रेक्षावान् प्रयोजनं विना प्रवर्तत इति तदाह महोदय इति । महानुदय उद्गम उद्बोधो ज्ञानमिति यावत् सोऽस्माद्भवतीति महोदयः संग्रह उक्तः ॥

ततः किं न ह्ययं पुरुषार्थः । के पदार्थाः के च तेषां धर्मा इत्यत आह । द्रव्येति । अत्र के पदार्था इत्यपेक्षायां पदार्था

---

(१) अथातो धर्मं व्याख्यास्याम इति कणादसूत्रस्थम् ।

द्रव्यादयः षट् । के धर्मा इत्यत्र साधर्म्यवैधर्म्यरूपा अनुवृत्तव्यावृत्तरूपा इत्यर्थः । तेषामुद्बोधः कथं पुरुषार्थ इत्यत्र तत्त्वज्ञानं निःश्रेयसहेतुरिति । तत्त्वमनारोपितं रूपम् । तच्च साधर्म्यवैधर्म्याभ्यामेव विविच्यते । साक्षादपि हि दृश्यमाना अत्यन्ताऽसङ्कीर्णाः स्थाणवो वक्रकोटरादिभिः पुरुषादिभ्यो विविच्यन्ते नान्यथा किं पुनरतीन्द्रिया मिथो मिश्रीभूता अत्यन्तसङ्कीर्णाः कालाकाशादयः शरीरेन्द्रियात्मादयो वेति । एतेन पदार्था एव प्रधानतयोद्दिष्टा वेदितव्याः । अभावस्तु स्वरूपवानपि पृथक् नोद्दिष्टः । प्रतियोगिनिरूपणाधीननिरूपणत्वात् । न तु तुच्छत्वात् । उत्पत्तिविनाशचिन्तायां प्रागभावप्रध्वंसाभावयोर्वैधर्म्ये चेतरेतराभावात्यन्ताभावयोस्तत्र तत्र दर्शयिष्यमाणत्वादिति । तेन द्रव्यादीनां साधर्म्यवैधर्म्याभ्यां तत्त्वं प्रतिपादयन् सङ्ग्रहो निःश्रेयसं साधयति यतो ऽतः प्रेक्षावतामुपादेय इति तात्पर्यम् । निःश्रेयसं पुनर्दुःखनिवृत्तिरात्यन्तिकी । अत्र च वादिनामविवाद एव । न ह्यपवृक्तस्य दुःखं प्रत्यापद्यत(१) इति कश्चिदभ्युपैति । केवलमात्मापि दुःखहेतुत्वान्निवर्तयितव्यः शरीरादिवदिति ये वदन्ति तेषां यद्यसौ नास्ति किं निवर्तयितव्यं अत्यन्तासतो नित्यनिवृत्तत्वात् । अथास्ति तथापि किं निवर्तनीयं नित्यत्वेन तन्निवृत्तेरशक्यत्वात् । अथ ज्ञानस्वभाव एवासौ निवर्तनीय इति मतं असुमतमेतत् । दग्धेन्धनानलवदुपशमो मोक्ष इति वक्ष्यमाणत्वात् । तस्मादतिरिक्ते आत्मनि प्रमाणं वक्तव्यमित्यवशिष्यते तद्वक्ष्यामः । सांख्यानामपि दुःख-

(१) दुःखमुत्पद्यत इति प्रकाशसम्मतः पाठः ॥

निवृत्तिरपवर्ग इत्यत्र न विप्रतिपत्तिः । प्रकृत्याश्रयं(१) दुःखं न पुरुषाश्रयमिति विवादस्तन्मतमग्रे निराकरिष्यामः। ये त्वनुपप्लवां(२) चित्तसन्ततिमनन्तापवर्गमाहुस्तेप्युपप्लवस्य दुःखमयत्वात् तन्निवृत्तिमेवेच्छन्ति । न च चित्तसन्ततेरनन्तत्वं प्रामाणिकम् । निमित्तस्य शरीरादेरपाये नैमित्तिकस्य चित्तस्योत्पादयितुमशक्यत्वात् । उपप्लवावस्थायां तन्निमित्तमिति चेत् न अनुपप्लवस्यापि तत्साध्यत्वात् । न हि शरीरनिरपेक्षा तत्सिद्धिः सम्भवति । योगाभ्याससाध्यत्वात्तस्य । अन्यथा अन्योन्याश्रयप्रसङ्गात् । शरीरादिनिवृत्तावनुपप्लवश्चित्तस्यानुपप्लुते च तस्मिन् शरीरादिनिवृत्तिरिति । अथ शरीरादिकमपि चित्तविलसितमात्रं न तु वास्तवमित्यभिप्रायः । तत्र वक्ष्यते । वेदान्तिनामपि(३) अविद्यायां निवृत्तायां केवलमात्मैवापवर्गे वर्त-

---

(१) प्रकृत्याश्रयमिति । यद्यपि भावाष्टकसम्पन्नतया महत एव दुःखमुपेयते सांख्यैः तथापि तन्मते कार्यकारणयोरभेदात् प्रकृत्याश्रयं दुःखमुक्तम् । एतस्य विवादस्य मोक्षाविषयत्वे ऽपि यस्य दुःखनिवृत्तिस्तस्य मुक्तिरिति प्रकृतेरेव मोक्षो नात्मन इति मोक्षविषयत्वमस्यास्त्येवेति भावः । कि० प्र० व० ॥

(२) प्रवृत्तिविज्ञानोपादानमालयविज्ञानसन्तानः पूर्वपूर्वतज्जातीयज्ञानोपादेयः स एवैको मोक्षेनुवर्तत इति मतमुत्थाप्य निराकरोति । ये त्विति । उपप्लवः संसारः । उपप्लवेति । अनुपप्लवावस्थायां शरीरं विना पूर्वपूर्वालयविज्ञानेनैवोत्तरोत्तरं तदुत्पाद्यत इत्यर्थः । अनुपप्लवस्यापीति । उपप्लवध्वंसो वा अनुपप्लवः । अविद्यमान उपप्लवो यत्रेति चित्तविशेषो वा उभयत्रापि शरीरं कारणमित्यर्थः । कि० प्र० व० ॥

(३) वेदान्तिनामिति । वस्तुतो ब्रह्माद्वैतसाक्षात्कारादविद्यानिवृत्तौ विज्ञानसुखात्मकः केवलमात्मापवर्गे वर्तत इत्येकदण्डिमतमप्युक्तम् । स्वप्रकाशसुखात्मकस्य ब्रह्मणो नित्यतया मुक्तसंसारिणोऽविशेषापातात् पुरुषप्रयत्नं विनापि तत्सत्त्वेन तस्यापुरुषार्थत्वात् । अविद्यानिवृत्तिमात्रस्य प्रयत्नसाध्यत्वेप्यपुरुषार्थत्वात् । कि० प्र० व० ॥

त इति मते न नो विवादः । (१) न पुत्रः पुत्राय प्रियो भवति आत्मने वै पुत्रः प्रियो(२) भवतीत्यादिश्रौतोपपत्तिबलात् सर्वस्यात्मौपाधिकं प्रियत्वं स्वभावतश्चात्मैव प्रियो भवतीति पुनरवशिष्यते तत्रापि वक्ष्यते । तौतातिता(३)स्त्वकार्यमपि ईश्वरज्ञानं शरीरमन्तरेणानिच्छन्तः कार्यमेव सुखज्ञानमपवर्गे ऽस्तीति वदन्तः त्रपा विरोधो भयमिति त्रयमपि त्यक्तवन्तः । एतेन पारतन्त्र्यं बन्धः स्वातन्त्र्यं च मुक्तिरित्यप्यपास्तम् । न हि पारतन्त्र्यं स्वरूपतो हेयं अपि तु दुःखहेतुतया स्वातन्त्र्यमपि यदि दुःखतत्साधननिवृत्तिस्तदोमित्युच्यते । ऐश्वर्यं(४) चेत् कार्यतया तदपि साधनपरतन्त्रं क्षयि चेति दुःखाकरत्वाद्धेयमेवेति । तस्मादनिष्टनिवृत्तिरात्यन्तिकी निःश्रेयसमिति ॥

नन्वपुरुषार्थोयं सुखस्यापि(५) हानेरिति चेन्न । बहुतरदुः-

(१) नवारे पुत्राणां कामाय पुत्राः प्रिया भवन्ति आत्मनस्तु कामाय पुत्राः प्रिया भवन्ति—इत्यधिकं ३ पु० ॥

न पुत्र इति । एषा श्रुतिः पुत्रस्यात्मसम्बन्धेन प्रियत्वं बोधयन्त्यात्मनः स्वाभाविकप्रियत्वं बोधयति । यदन्वये तु यत्प्रतीयते यद्विरहे तु यन्न प्रतीयते तत्तस्य स्वाभाविकमिति लोकसिद्धव्युत्पत्तेः । आनन्दं ब्रह्मणो रूपमित्येकवाक्यत्वात्मनः प्रियात्मकानन्दरूपत्वं प्रतीयते । न चात्मने इति तादर्थ्ये चतुर्थ्यनुपपत्तिः यूपाय दार्वित्यत्र दारुस्वरूपयूपार्थत्ववदुपपत्तेरित्यर्थः । कि० प्र० व० ॥

(२) सर्वं प्रियं—पा० ३ पु० ॥

(३) दुःखसाधनशरीरनाशे नित्यनिरतिशयसुखाभिव्यक्तिर्मुक्तिरिति भाट्टं मतं निराकरोति । तौतातितास्त्विति । ईश्वरे शरीरं विना नित्यमपि न ज्ञानमित्यङ्गीकृत्य मुक्तस्य भोगायतनं विना भोग इत्यभ्युपगमात् त्रपा । कारणं विनापि कार्यमिति विरोधः । शरीरं विनापि ज्ञानसत्त्वेनानभिमतेश्वरसिद्धिप्रसक्त्या भयमित्यर्थः । कि० प्र० व० ॥

(४) ऐश्वर्यमिति । अणिमाद्यष्टसिद्धिरित्यर्थः । कि० प्र० व० ॥

(५) सुखस्यापीति । तुल्यायव्ययत्वाद्दुःखाभावो ऽपि न पुरुषार्थ इत्यर्थः ।

खानुविद्धतया सुखस्यापि प्रेक्षावद्धेयत्वात् । मधुविषसम्पृक्तान्नभोजनजन्यसुखवत् । तथापि दुःखोच्छित्तिरपुरुषार्थः(१) अनागतस्य निवर्तयितुमशक्यत्वात् वर्तमानस्य च पुरुषप्रयत्नमन्तरेणैव विरोधिगुणान्तरोपनिपातनिवर्तनीयत्वादतीतस्यातीतत्वादेवेति चेन्न । हेतूच्छेदे पुरुषव्यापारात् प्रायश्चित्तवत् । तथाहि मिथ्याज्ञानं सवासनं(२) इह संसारमूलकारणं तच्च तत्त्वज्ञानेन विरोधिना निवर्त्यते । तन्निवृत्तौ रागाद्यपाये प्रवृत्तेरपायाज्जन्माद्यपायस्तथा च दुःखसन्तानोच्छेदः । तच्च तत्त्वज्ञानं पुरुषप्रयत्नसाध्यमिति । किं पुनरत्र प्रमाणम् । दुःखसन्ततिरत्यन्तमुच्छिद्यते सन्ततित्वात् प्रदीपसन्ततिवदित्याचार्याः । पार्थिवपरमाणुगतरूपादिसन्तानेनानैकान्तिकमिदमिति चेन्न । सर्वात्मगतदुःखसन्ततिपक्षीकरणे फलतस्तस्यापि पक्षे ऽन्तर्भावात् न हि सर्वमुक्तिपक्षे सर्वोत्पत्तिमन्निमित्तस्यादृष्टस्याभावात् तदुत्पत्तौ बीजमस्ति । न च सर्वभोक्तॄणामपवृक्तौ तदुत्पत्तेः प्रयोजनमस्ति । न हि बीजप्रयोजनाभ्यां विना कस्यचिदुत्पत्तिरस्ति । सर्वमुक्तिरित्येव नेष्यत इति चेत्तर्हि य एव

---

बहुतरेति । ननु तथाप्यावश्यकत्वेन दुःखस्यैव हेयत्वं सुखस्य निरुपाधीच्छाविषयत्वात् अन्यथा दुःखाननुविद्धतया तस्य काम्यत्वेन स्वतः पुरुषार्थत्वाविरोधः । मैवम् । सुखमनुद्दिश्यापि दुःखभीरूणां दुःखहानार्थं प्रवृत्तिदर्शनेन दुःखाभावस्यैव स्वतः पुरुषार्थत्वात् । न हि दुःखाभावदशायां सुखमस्तीत्युद्दिश्य दुःखाभावार्थं प्रवर्तन्ते वैपरीत्यस्यापि सुवचत्वेन सुखस्यापुरुषार्थत्वापत्तेः । अतो दुःखाभावदशायां सुखं नास्तीति ज्ञानं न दुःखाभावार्थिनः प्रवृत्तिप्रतिबन्धकं दुःखभीरूणां सुखालिप्सूनां मोक्षे ऽधिकारादिति भावः । कि० प्र० व० ॥

(१) अपुरुषार्थत्वं कृत्यसाध्यत्वम् । कि० प्र०व० ॥

(२) सवासनमिति । वासना तज्जन्यः संस्कारः । तच्चेति । सवासनं मिथ्याज्ञानम् । कि० प्र० व० ॥

नापवृज्यते तस्यैव दुःखसन्तानेनानैकान्तिकमिदं किमुदाहरणान्तरगवेषणया एवमस्तु न चोदाहरणमादरणीयमिति चेन्नासिद्धेः। सिद्धौ वा संसार्यैकस्वभावा एव केचिदात्मान इति स्थिते अहमेव यदि तथास्यां तदा मम विपरीतप्रयोजनं पारिव्राजकमिति शङ्कया न कश्चित्तदर्थं ब्रह्मचर्यादिदुःखमनुभवेत्। अथ यदि सर्वदुःखसन्ततिनिवृत्तिर्भविष्यति(१) तर्हि इयता कालेन किं नाभूत् एकैकस्मिन् कल्पे यद्यैकैकोप्यपवृज्येत् तथाप्युच्छिन्नः संसारः स्यात् कल्पानामनन्तत्वात् सत्यमनन्ता एव ह्यपवृत्ताः न तु सर्वे सम्प्रति संसारस्य प्रत्यक्षसिद्धत्वात् नन्वेतदेव न स्यादित्युच्यत इति चेन्न। कालनियमे प्रमाणाभावात् न च सर्वोत्पत्तिमन्निमित्तादृष्टानुपपत्तौ सर्वमुक्तेरनुत्पत्तिः अपवर्गस्य भोगतत्साधनेतरत्वात् न ह्यदृष्टनिवृत्तिरप्यदृष्टान्तरसाध्या एकस्याप्यनपवर्गप्रसङ्गादिति। स्यादेतत्। आदिमती (२)प्रदीपसन्ततिर्निवर्तते। दुःखसन्ततिस्त्वनादिरियमनुवर्तिष्यत इति चेन्न। मूलोच्छेदानुवृत्त्योः प्रयोजकत्वात्। मूलोच्छेदाद्धि सन्ततेरुच्छेदः मूलानुवृत्तौ चानुवृत्तिः। अन्यथा

(१) सर्वमुक्तिर्भविष्यति—पा० ४ पु० ॥

(२) आदिमतीति। तथा च तद्व्यतिरेकमादाय केवलव्यतिरेकिणा सत्प्रतिपक्षत्वमादिमत्त्वं चोपाधिरित्यर्थः। अनादिरिति। स्वाश्रयध्वंसव्याप्यप्रागभावप्रतियोगिमात्रवृत्तिजातिमत्त्वमनादित्वम् *। कि० प्र० व० ॥

* नन्वनादित्वं प्रागभावाप्रतियोगित्वं दुःखसन्ततावसिद्धमत आह। अनादित्वमिति। येन रूपेणानादित्वं तदिह स्वपदेन विवक्षितं तदाश्रयस्य यो ध्वंसस्तद्व्याप्यो यः प्रागभावस्तत्प्रतियोगिमात्रवृत्तिजातिमत्त्वमित्यर्थः। कि० प्र० व्या० भ०॥

अत्र भगीरथठक्कुरेण मात्रपदादीनां सार्थविशेषणत्वं केचित्त्वित्यादिना बहु प्रपञ्चितं परंतु विस्तरभयान्न लिखितमस्माभिः॥

## तच्चेश्वरनोदनाभिव्यक्ताद्धर्मादेव ॥

---

त्वादिमत्त्वाविशेषे कालानियमो न स्यात् । काचित् प्रदीपसन्ततिः प्रहरमनुवर्तते काचिदहोरात्रमित्याद्यनियमो हि तैलादिमूलोच्छेदानियमप्रयुक्त इति । अशरीरं वावसन्तं(१) प्रियाप्रिये न स्पृशत इत्यागमाच्चायमर्थो ऽध्यवसेयः । स्यादेतत् । तत्त्वज्ञानं हि विरोधितया समूलं मिथ्याज्ञानमुन्मूलयन्निःश्रेयसहेतुः । न चोपपत्त्या शब्देन वा जनितमिदं परोक्षं तत्त्वज्ञानमपरोक्षं मिथ्याज्ञानं निवर्तयितुमुत्सहते दिङ्मोहादौ(२) तथानुपलब्धेः । अतो(३) ऽपरोक्षमव्युत्थायि(४) बलवत्तरं तत्त्वज्ञानं तन्निवर्त्तनसमर्थं तच्च(५) कुतो भविष्यतीत्यत आह । तच्चेति ॥

ईश्वरनोदना उपदेशो वेद इति यावत् । तेनाभिव्यक्तात् प्रतिपादिताद्धर्मात् । अयमर्थः । शास्त्रेण पदार्थान् विविच्य श्रुतिस्मृतीतिहासपुराणोपदिष्टयोगविधिना दीर्घकालादरनैर-

---

(१) स्थापनायां विपक्षे बाधकमाह । अशरीरमिति । वावसन्तमिति यङ्लुकि तेन संसारावस्थायां क्षणमात्रमशरीरतया नान्यथासिद्धिः । यद्वा वा एवार्थे तेनाशरीरमेव वसन्तमित्यर्थः । वावेति सम्बोधनम् । तेनाशरीरमेव सन्तं वर्तमानं वर्तमानकालस्य क्षणादधिकत्वे नोक्तदोषः । कि० प्र० व० ॥

(२) दिङ्मोहेति । सूर्योदयेन प्राचीमनुमायापि मुह्यन्तीत्यर्थः । कि० प्र० व० ॥

(३) ततो—पा० ३ पु० ॥

(४) अव्युत्थायीति । व्युत्थातुं भ्रमितुं शीलमस्येति व्युत्थायि भ्रान्तं न तथेत्यर्थः । बलवत्तरम् । बहुतरसंस्काराधायकं च शरीरादावात्मधीः प्रत्यक्षा-परोक्षेण शब्दानुमानजन्येन ज्ञानेन निवर्तयितुमशक्येति तन्निवर्तनक्षमा शरीरभिन्नात्मधीरध्यक्षा स्यात् साधनशास्त्रादित्यर्थः । तत्त्वज्ञानमिति । शरीरादिभिन्नात्मभावनातः साक्षात्काररूपमित्यर्थः । कि० प्र० व० ॥

(५) तत्—पा० ३ पु० ॥

न्तर्यसेवितान्निवृत्तिलक्षणाद्धर्मादेव तत्त्वज्ञानमुत्पद्यते यतो ऽपवृज्यते । न ह्युपपत्त्या विना विवेकः न च विवेचनाद्विना उपदेशमात्रेणाश्रद्धामलक्षालनं न च तेन विना शङ्काशूकस्य त्यागः न च तमन्तरेण निवर्तको धर्मः न च तेन विना दृढभूमिविभ्रमसमुन्मूलनसमर्थस्तत्त्वसाक्षात्कार इति । एतेन सत्त्वशुद्धिद्वारेणारादुपकारकं कर्म(१) सन्निपत्योपकारकं च ज्ञानमिति मन्तव्यम् । न तु तुल्यकक्षतया तत्समुच्चयः नापि ज्ञानेन धर्मो जन्यते विहितत्वादिति । धर्मस्यैव प्राधान्यम् । दृष्टद्वारेणोपपत्तावदृष्टकल्पनानवकाशात् । अन्यथा भेषजादिष्वपि तथा कल्प्येत । उपपत्तिविरुद्धश्च ज्ञानकर्मसमुच्चयः । काम्यनिषिद्धयोस्त्यागादेव समुच्चयानुपपत्तेः नापि असङ्कल्पितफलकाम्यकर्मसमुच्चयः चतुर्थाश्रमविरोधात्(२) यावन्नित्यनैमित्तिककर्मसमुच्चयस्यापि तत एवानुपपत्तेः । यत्नाश्रमविहितेन कर्मणा ज्ञानसमुच्चय इत्यपि नास्ति तदभावेपि गृहस्थस्य ज्ञाने सति मुक्तेः । यतः स्मरन्ति ॥

कर्मणैव हि संसिद्धिमास्थिता जनकादय इति ॥

न्यायागतधनस्तत्त्वज्ञाननिष्ठो ऽतिथिप्रियः ।

श्राद्धकृत् सत्यवादी च गृहस्थो ऽपि विमुच्यत इति च ॥

न च साध्यस्यावैचित्र्ये साधनवैचित्र्यमुपपद्यते । न च स्वर्गवदपवर्गेपि प्रकारभेदः संभवति । तस्मात् तत्त्वज्ञानमेव

(१) ननु तत्त्वज्ञानवत्कर्मापि श्रुत्या बोधितमिति तत्कुतो नोद्दिष्टमित्यत आह । एतेनेति । सत्त्व आत्मा तस्य शुद्धिस्तत्त्वज्ञानोत्पत्तिप्रतिबन्धकदुरितनिवृत्तिः तद्द्वारा परम्परया कर्म मोक्षकारणं तत्त्वज्ञानं तु सान्निपत्य कर्मापेक्षया सन्निधायोपकारकं कर्मानन्तरं तदुत्पत्तेरिति । कि० प्र० व० ॥

(२) असङ्कल्पितफलकर्मसमुच्चये चतुर्थाश्रमविरोधात्—पा० ३ पु० ॥

अथ के द्रव्यादयः पदार्थाः किं च तेषां साधर्म्यं चेति ॥

---

निःश्रेयससाधनम् । कर्माणि त्वनुत्पन्नतत्त्वज्ञानस्य तत्त्वज्ञानार्थिनस्तत्प्रतिबन्धकाधर्मतिरोधानद्वारेण(१) प्रायश्चित्तवदुपयुज्यन्ते । उत्पन्नतत्त्वज्ञानस्य त्वन्तरालब्धवृष्टेः प्रारब्धकारीरीपरिसमाप्तिवत् प्रारब्धाश्रमधर्मसमापनं लोकसंग्रहार्थमिति युक्तमुत्पश्यामः । एतेनाथातो धर्मं व्याख्यास्यामः । यतो ऽभ्युदयनिःश्रेयससिद्धिः स धर्मः । तद्वचनादाम्नायप्रामाण्यमिति त्रिसूत्री व्याख्याता(२) । अन्यथा व्याख्याने हि यतो ऽभ्युदयेति प्रत्येकसमुदायाभ्यामुभयत्राप्यव्यापकं स्यात् । यतो(३) ऽभ्युदयसिद्धिः स धर्म इत्येतावतैव लक्षणे सिद्धे पारम्पर्येण निःश्रेयसेप्यस्य हेतुत्वं प्रतिपादयितुं निःश्रेयसग्रहणमिति ॥

एवं प्रतिपन्नप्रयोजनाभिधेयसम्बन्धो जिज्ञासुः पृच्छति(४) ।

---

(१) धर्मापनयद्वारेण—पा० ३ पु० ॥

(२) ननु यतो ऽभ्युदयनिःश्रेयससिद्धिः स धर्म इति सूत्रे धर्मस्य मोक्षहेतुताबोधकत्वविरोध इत्यत आह । एतेनेति । सूत्रमप्यभ्युदयमात्रसाधकधर्मपरतयैव व्याख्येयमित्यर्थः । अभ्युदयो ऽत्र तत्त्वज्ञानम् । तद्वचनादिति । तेनेश्वरेण वचनात् प्रणयनादाम्नायस्य प्रामाण्यमित्यर्थः । अन्यथेति । यद्येको धर्मो ऽभ्युदयसाधको ऽन्यश्च निःश्रेयससाधक इत्यर्थः । न चैकस्यैव धर्मस्योभयसाधकतायां नोक्तदोषः । उक्तयुक्तेस्तत्त्वज्ञानोत्पादनेनैवान्यथोपपत्तौ धर्मस्य निःश्रेयसहेतुत्वे मानाभावादिति भावः । कि० प्र० व० ॥

(३) तद्यतो—पा० २ । पु० ॥

(४) एवमिति । अभिधेयं द्रव्यादि । प्रयोजनं निःश्रेयसम् । सम्बन्धः तत्त्वज्ञाननिःश्रेयसयोर्हेतुहेतुमद्भावः । कि० प्र० व० ॥

**तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि सामान्यविशेषसंज्ञोक्तानि नवैव तद्व्यतिरेकेण संज्ञान्तरानभिधानात् ॥**

---

अथेति । अथ (१) कानि द्रव्याणि कियन्ति(२) च के गुणाः कियन्तश्च कानि कर्माणि कियन्ति च किं सामान्यं कतिविधं च के विशेषाः कः समवाय इत्यर्थः । किं च तेषामिति । सामान्यतो विशेषतश्च पदार्थानां द्रव्याणां गुणानां कर्मणामित्यादि नेयम् (३) । चकारौ मिथः समुच्चये(४) । साधर्म्यवैधर्म्ययोरेष्वेवान्तर्भूतत्वात् पृथग्लक्षणार्थमपि न प्रश्नः(५) ॥

तत्रेति । तत्र तेषु द्रव्यादिषु वक्तव्येषु द्रव्याणि पृथिव्यादीनि । यद्यपि विभागस्य न्यूनाधिकसंख्याव्यवच्छेदपरत्वादेव नवत्वं लब्धं तथापि स्फुटार्थं नवग्रहणम् । एवकारश्च विप्रति-

---

(१) अथेति नास्ति २ । ३ । पु० ॥

(२) अग्रे विभागस्यापि वचनात्तद्विषयां जिज्ञासामाह । कियन्तीति । विशेषाणामानन्त्यात् समवायस्यैकत्वात् तत्र न विभागे जिज्ञासा कि० प्र० व० ॥

(३) ज्ञेयम्—पा० १ पु० ॥

(४) अथ के द्रव्यादयः पदार्थाः किं च तेषां वैधर्म्यं चेति पाठो वर्द्धमानोपाध्यायसम्मतः । चकाराविति । किं चेति चकारः प्रश्नसमुच्चये वैधर्म्यं चेति चकारः साधर्म्यसमुच्चय इत्यर्थ इति व्याख्यानात् ॥

(५) ननु द्रव्यादीनां लक्षणात्मकस्य साधर्म्यादेर्लक्षणं किन्न पृष्टमित्यत आह । साधर्म्येति । एष्वेव द्रव्यादिष्वेवेत्यर्थः । तथा च द्रव्यादेः साधर्म्यादेश्च मिथो विशेषणविशेष्यभावाल्लक्ष्यलक्षणभाव इत्यर्थः । यद्वा ननु द्रव्यादीनां लक्षणप्रश्नः कुतो नेत्यत आह । साधर्म्येति । एष्वेव लक्षणेष्वेव । तथा च साधर्म्यप्रश्ने न तत्प्रश्न इत्यर्थः । कि० प्र० व० ॥

पत्ति(१)निराकरणार्थः । सामान्यसंज्ञा द्रव्यमिति । विशेषसंज्ञा पृथिवीत्यादिका । तयोक्तानि सूत्रकृतेति शेषः । अवगताप्रभावस्य तस्योक्तेरागमत्वात् । अनवगताप्रभावस्यापि लोकप्रसिद्धार्थानुवादकत्वात् । लोके च तावतामेव सामान्यतो विशेषतश्च व्यवहारात् किं पुनरत्र प्रतिषिध्यते नवैवेति । न ह्यनवगतस्य प्रतिषेधः सम्भवति । उच्यते । द्रव्यस्य सतो नवबाह्यत्वं नवबाह्यस्य सतो द्रव्यत्वं वा तथा च प्रतिपन्नस्यैव प्रतिपन्ने प्रतिषेध इति न किंचिद्दुष्यति । अतः परं न शङ्का न चोत्तरम् । तथाहि (२) इदं द्रव्यमेभ्योधिकं स्यादिति वा इदमेभ्योधिकं द्रव्यं स्यादिति वा आशङ्कित प्रथमे आधिक्यं निराकरिष्यामो यथा सुवर्णस्य । द्वितीये द्रव्यत्वं निराकरिष्यामो यथा तमसः । अतः परं न शङ्का न चोत्तरम् । धर्मिण एव बुद्ध्यनारोहात् । यदि कथं चिद्बुद्धिमारोक्ष्यते तदास्माभिरप्युक्तेष्वेवान्तर्भावयिष्यते । अनन्तर्भावे वा द्रव्यत्वं तस्य निराकरिष्यत इत्यभिप्रायवानाह । तद्व्यतिरेकेण संज्ञान्तरानभिधानादिति सूत्रकृतेति शेषः । लोकेनेति वा । स्यादेतत् । अन्धकारस्तावदनुभवसिद्धतया दुरपह्नवः । न च सामान्यविशेषसमवायेष्वन्यतमत् तमः । तेषां व्यञ्जकवैचित्र्येऽपि व्यक्त्याश्रयसम्बन्धिनामुपलम्भमन्तरेणानुपलम्भनियमात् । उपलम्भे वा तत्त्वव्याघा-

(१) परविप्रतिपत्ति—पा० २ पु० ॥

(२) तथाहीति । इदं द्रव्यमिति पाठे एभ्यो नवभ्योऽधिकं तमोद्रव्यमिति योजना । इदमेभ्य इति । इदं द्रव्यं सुवर्णमेभ्यः पृथिव्यादिभ्योऽधिकं स्यादित्यर्थः । कि० प्र० व० ॥

तात् । न च (१) कर्म संयोगविभागयोरकारणत्वात् । न ह्य-न्धकारेण किंचित् कुतश्चिद् विभज्य केनचित् संयोज्यते । अ-तथाभूतस्य च तल्लक्षणानुपपत्तेरतत्त्वात् । न गुणः । द्रव्यासम-वायात् । द्रव्यासमवेतं ह्यसमवेतमेव स्याददृव्यसमवेतं वा । उभयथापि गुणत्वव्याघातः । सामान्यवतः स्वतन्त्रस्य द्रव्यत्वा-पत्तेः । निःसामान्यस्य गुणलक्षणव्याघातात् । गुणकर्मणोर्नि-र्गुणतया गुणस्य तत्र समवायविरोधात् । द्रव्यासमवाय एवा-स्य कथमिति चेत् । इत्थम् । न दिक्कालमनसामयम् । तेषां विशेषगुणविरहात् । सामान्यगुणस्य चाश्रयसहोपलम्भनिय-मेन तदप्रत्यक्षतायामप्रत्यक्षत्वप्रसङ्गात् । नात्मनो बाह्यकरण-प्रत्यक्षत्वादिदन्तास्पदत्वाच्च । नापि नभोनभस्वतोश्चाक्षुषत्वा-त् । चाक्षुषता हि गुणानां रूपिद्रव्यसमवायेन व्याप्ता । तच्च रूपित्वं गगनपवनाभ्यां व्यावर्तमानं चाक्षुषगुणसम्बन्धमपि व्यावर्तयति । न तेजसः । प्रतीतौ तद्विरोधित्वात् शैत्यवत् । गु-णिनः स्वगुणप्रतीतिपरिपन्थित्वे गुणस्य नित्यमनुपलम्भप्रसङ्गा-त् । सत्याश्रये तेनैव प्रतिबन्धात् । असति गुणिनि गुणस्यास-त्त्वात् । तत्सहचरितगुणान्तरानुपलब्धेश्च । न तावच्छाया ते-जसो रूपमेव । तद्रूपस्य शुक्लभास्वरत्वनियमात् । न चेन्द्रनी-लप्रभावदाश्रयोपाधेरतथाभूतमिदमाभातीति साम्प्रतम् । शै-त्यभूतत्वस्फटिकपद्मरागाद्याश्रयरूपाननुविधानात् । तस्माद्गु-णान्तरमेवेदं तेजस इति वाच्यम् । तथा च तद्ग्रहे तदग्रहस्तद्वि-रहे एव तद्ग्रहणमिति विपरीतमिति महत्यनुपपत्तिः । नापि

(१) न कर्मेति प्रकाशसम्मतः पाठः ॥

पाथःपृथिव्योरालोकनिरपेक्षचक्षुर्ग्राह्यत्वात् । पार्थिवमेवेद-मारोपितं रूपमित्यपि न समीचीनम् । बाह्यालोकसहकारि-विरहे चक्षुषस्तदारोपे ऽप्यसामर्थ्यात् । तदेव हि धर्म्यन्तरे स-मारोप्यते पित्तपीतिमवत् । तत्रैव च नियतदेशे ऽनियतदेशत्वं नेदीयस्यणीयस्यपि(१) महत्त्ववत् । उभयथापि तत्प्रथनमन्त-रेणानुपपत्तिरेव एकत्रारोप्यत्वादन्यत्रारोपविषयत्वात्तस्यैव । न चालोकमन्तरेण रूपग्रहणे चक्षुषः सामर्थ्यमित्युक्तम् । न चारो-प्यारोपविषयाप्रथने भ्रान्तिसम्भवः । न चोभयोरन्यतरस्मिन्न-व्यापृतस्यैव चक्षुषो भ्रान्तिजनकत्वम् । न चायमचाक्षुषः प्रत्य-यस्तदनुविधानस्यानन्यथा सिद्धत्वात् । स्वप्नविभ्रमवन्मानस ए-वायं न चाक्षुष इति नाशङ्कनीयम् । निमीलितनयनस्य गेहे-स्त्यन्धकारो न वेति सन्देहानुपपत्तेः । तस्मात् क्रियावत्त्वाद्गुणव-त्त्वाच्च(२) द्रव्यमेतत् । क्रियावत्त्वादेव नाकाशाद्यात्मकम्(३) । रूपवत्त्वादेव न मनोवायू । स्पर्शरहितत्वाच्च(४) न पृथिवी जलं तेजो वेति । दशमं द्रव्यमिति प्राप्तिस्तत् कथं नवैवेति । न । वस्तु-तोऽस्य क्रियावत्त्वे रूपवत्त्वे वा ऽचाक्षुषत्वप्रसङ्गात् । आलोकस-हकारिण एव चक्षुषस्तत्र सामर्थ्यावधारणादित्युक्तम्(५) । न चेदमद्रव्यं(६) रूपिद्रव्यं रूपवतो मूर्तिनान्तरीयकत्वेन निरव-

(१) नेदीयसीति । गोळकसन्निकृष्टाणुणि यथाधिकदेशत्वमारोप्यत इत्यर्थः । तत्प्रथनं रूपसाक्षात्कार इत्यर्थः । कि० प्र० व० ॥

(२) क्रियावत्त्वाद्रूपवत्त्वाच्च—पा० १ पु० ॥

(३) क्रियावत्त्वान्नाकाशाद्यात्मकम्—पा० २ पु० ॥

(४) स्पर्शविरहत्वाच्च—पा० १ पु० ॥

(५) सामर्थ्यावधारणेत्युक्तम्—पा० १ पु० ॥

(६) अद्रव्यमिति । न विद्यते द्रव्यं समवायिकारणतया सम्बन्धि यस्य

यवस्य परमाणुतयातीन्द्रियत्वापत्तेः । नाप्यनेकद्रव्यं द्रव्यम् । स्पर्शरहितत्वद्रव्यत्वेनानारब्धत्वान्मनोवत् । न च रूपवत्तया स्पर्शोऽप्यनुमास्यते । तद्रहितस्यापि पुरुषार्थहेतुत्वादारब्धं वा स्यात् । प्रारब्धस्य चानुभवसिद्धत्वात् मनसो ऽनुपलभ्यमानधर्मस्य स्वयमनुपलभ्यमानस्य च वैयर्थ्यादेवारम्भानुपपत्तिरिति साम्प्रतम् । रूपवत्त्वस्य प्रागेवाप्रत्यक्षत्वप्रसङ्गेनापास्तत्वात् । प्रत्यक्षत्वस्य चानुभवसिद्धत्वादित्येतत्सर्वमभिसन्धाय भगवान्मुनिराह । द्रव्यगुणकर्मनिष्पत्तिवैधर्म्याद्भाभावस्तम इति । सो ऽपि कथमालोकमन्तरेण प्रतियोगिस्मरणाधिकरणग्रहणविरहे विधिमुखेन च चाक्षुष इति चेत् । न । यद्ग्रहे हि यदपेक्षं चक्षुस्तदभावग्रहेऽपि तदपेक्षते । एवं हि तदितरसामग्रीसाकल्यं स्यात् । तदालोकाभावेऽप्यालोकापेक्षा स्यात् । यथालोके तदपेक्षा स्यात् । न त्वेतदस्ति । प्रत्युत विरोध एव । तस्मिन् सति तदभाव एव न स्यात् किं तदपेक्षेण चक्षुषा गृह्येत । दिवा च प्रतियोगिनः प्रभामण्डलग्रहण एव प्रदेशान्तरे तदभावग्रह इति न किंचिदनुपपन्नम् । अन्यत्रापि न रात्रिमप्रति-

---

निरवयवामित्यर्थः । रूपवत इति । अस्य च चाक्षुषत्वादित्यर्थः । अनित्यत्वाच्चेत्यपि द्रष्टव्यम् । स्पर्शरहितेति । स्पर्शवत्तयारम्भकत्वेनानारब्धस्यास्पर्शवत्त्वानियमादित्यर्थः । न चेति । साम्प्रतमित्यग्रेतनेन सम्बन्धः । स्पर्शरहितस्यापि तमसः पुरुषार्थत्वहेतुत्वेनारब्धत्वसम्भवादप्रयोजकत्वम् । मनस्तु नारम्भकं तदारब्धस्य शरीरेन्द्रियहेतुत्वाभावेन वैयर्थ्यात् । साधनावच्छिन्नसाध्यव्यापकस्य नीरूपत्वस्योपाधित्वाच्च । अन्यथा रूपवत्त्वेनारम्भकत्वे नीरूपस्यानारब्धत्वाद्वायुरप्यनुद्भूतरूपा पृथिवी स्यात् । अत एव तमःपरमाणुर्न द्रव्यारम्भकः स्पर्शशून्यत्वान्मनोवदित्यपास्तं सिद्ध्यसिद्धिव्याघाताच्च । तस्माद्बीजकादृष्टाधीनमुद्भवत्वमिति तदभावान्न तमसि स्पर्शोद्भव इति भावः । कि० प्र० व० ॥

सन्धायान्धकारग्रहः । रात्रिज्ञानं च न दिवसमप्रतिसन्धाय निरस्तैतद्दीपवर्त्तिरविरश्मिजालः कालविशेषो ह्यत्र रात्रिरित्युच्यते । गिरिदरीविवरवर्त्तिनस्तु यदि योगिनो न ते तिमिरावलोकिनस्तिमिरदर्शिनश्चेन्नूनं स्मृतालोका इति । अधिकरणमपि दृष्टमनुमितं स्मृतं वा । इहेदानीमन्धकार इति प्रत्ययात् । विधिमुखस्तु प्रत्ययो ऽसिद्धः । न हि नञो ऽप्रयोग इत्येव विधिः । प्रलयविनाशावसानादिषु व्यभिचारात् । नञर्थान्तर्भावेन वाक्यार्थे पदप्रयोग इति तु समं समाधानमन्यत्राभिनिवेशात् । गतेः का गतिरिति चेत् । भ्रान्तिः । स्वाभाविक्याङ्गतावावरकद्रव्यानुविधानानुपपत्तेः । प्रभातुल्यत्वे तेजःप्रभाश्रयेषु रत्नविशेषेषु छाया दिवसे न स्यात् । छाययैव तदभिभवे बहलतमे तमसि तेषामालोको न स्यात् । आलोकान्तरेण वा तदभिभवे छायाया उद्भवो न स्यात् । तस्मादावरकद्रव्ये गच्छति यत्र यत्र तेजसोऽसन्निधिस्तत्र तत्र छायाग्रहणादन्यदेशतानिबन्धनो गतिभ्रम इति । कथं भावधर्माध्यारोपो ऽभाव इति चेत् । न किंचिदेतत् । सारूप्यतत्त्वाग्रहाविह तन्निबन्धनं न त्वन्यत् । दृष्टश्च दुःखाभावे सुखाध्यारोपः । भारावतारे(१) सुखिनः संवृत्ताःस्म इति संयोगाभावे विभागाभिमान इत्यादि । एतेन नीलिमाध्यारोपो व्याख्यातः शुक्लभास्वरविरोधित्वसारूप्येण तदारोपोपपत्तेः । न चैवं रक्तत्वाद्यारोपप्रसङ्गोपि आरोपे सति निमित्तानुसरणात् । न तु निमित्तमस्तीत्यारोपः । अदृष्टादिकं चात्र नियामकमध्यवसे-

(१) भारापगमे—पा० २ पु० ॥

**गुणाः रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाश्चेति कण्ठोक्ताः सप्तदश ॥**

---

यम् । स्मर्यमाणं चैतद्रूपमारोप्यते रजतत्ववन्न गृह्यमाणम् । अतो न सहकार्यपेक्षाचोद्यमाशङ्कनीयं धर्मिणि निरपेक्षत्वात् यद्येवमारोपितं रूपं न तमो भाभावस्तु तम इति विनिगमनायां को हेतुरिति चेत् । उच्यते । एषा तावदनुभवस्थितिः । तमो नीलं न तु नीलिमा तम इति । न चारोपितेन वास्तवेन वा नीलिम्ना तमोबुद्धिव्यपदेशौ समानार्थौ । सहप्रयोगानुपपत्तेः । नीलीद्रव्योपरक्तेषु वस्त्रचर्मादिषु तमोबुद्धिव्यपदेशप्रसङ्गाच्च । अवश्यम्भावी च भाभावानुभवो निरालम्बनस्य भ्रमस्यानुपपत्तेः । न च तमःप्रत्ययो बाध्यते । नीलप्रत्ययस्तु बाध्यत इवेति प्रत्ययवत् । तस्माद्यत्र गुणक्रियारोपस्तदन्धकार न तु नीलिमेति सुष्ठूक्तं नवेवेति ॥

गुणान् विभजते । गुणा इति । रूपादयः सप्तदश कण्ठोक्ताः (१) सूत्रकारेण । अभ्युपगमसिद्धान्तन्यायेनान्येपि सप्तसिद्धगुणभावाः तत्र तत्र तेषां व्युत्पादनात् अनभ्युपगमे व्युत्पादनविरोधात् तथा च विभागसूत्रं न्यूनम् । रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः

---

(१) कण्ठोक्ता इति । असाधारणस्वशब्देनोक्ता इत्यर्थः । कर्त्रपेक्षायामाह । सूत्रकारेणेति । अभ्युपगमेति । साक्षाद्सूत्रितत्वेपि समानतन्त्राभिहितत्वेनाभ्युपगम्यमानत्वादित्यर्थः । कि० प्र० व० ॥

चशब्दसमुच्चिताश्च गुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दाः सप्तैवेत्येवं चतुर्विंशतिगुणाः ॥

उत्क्षेपणापक्षेपणाकुञ्चन(१)प्रसारणगमनानि पञ्चैव कर्माणि ॥

गमनग्रहणाद् भ्रमणरेचनस्यन्दनोर्द्ध्वज्वलनतिर्यक्पतननमनोन्नमनादयो गमनविशेषा एव न तु जात्यन्तराणि (२) ॥

---

सुखदुःखे इच्छाद्वेषौ प्रयत्नश्च गुणा इति हि तत् । अत आह ॥

चशब्दसमुच्चिताः सप्तेति । अदृष्टशब्देन धर्माधर्मयोः संक्षेपेणाभिधानम् । न त्वदृष्टत्वं नाम सामान्यमस्ति । कार्यकारणलक्षणानां तद्व्यवस्थापकानामभावात् । तेन गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दा इत्युक्तं भवति । एवं कण्ठोक्त्या समुच्चयेन चैकतया चतुर्विंशतिर्गुणा व्यवहर्त्तव्याः तथाविधबुद्धिविषयतया साकल्येन न तु संख्यायोगेन यथा चैतत् तथा गुणे वक्ष्यामः ॥

कर्माणि विभजते । उत्क्षेपणेति । अत्रापि पञ्चैवेति स्पष्टार्थम् । विभागवचनादेव पञ्चत्व(३)सिद्धेः ॥

आधिक्यमाशङ्क्याह । गमनग्रहणादिति । कर्मपदार्थे चैतद् व्युत्पादनीयम् ॥

---

(१) उत्क्षेपणावक्षेपणावकुञ्चन—पा० ४ पु० ॥

(२) गमनविशेषा न जात्यन्तराणि—पा० ४ पु० ॥

(३) पञ्चधासिद्धेः—पा० २ पु० ॥

सामान्यं द्विविधं परमपरं चेति । तच्चानुवृत्तिप्रत्ययकारणम् । तत्र परं सत्ता महाविषयत्वात् । सा चानुवृत्तेरेव हेतुत्वात् सामान्यमेव । द्रव्यत्वाद्यपरमल्पविषयत्वात् । तच्च व्यावृत्तेरपि हेतुत्वात् सामान्यं सद्विशेषाख्यामपि लभते (१) ॥

---

सामान्यं विभजते । सामान्यमिति । समानानां भावः (२) स्वाभाविकोऽनागन्तुको बहूनां धर्मः सामान्यमित्यर्थः । तथा च धर्मिणां बहुत्वे धर्मस्य चानागन्तुकत्वे विवक्षिते नित्यमेकमनेकवृत्तिसामान्यमिति लक्षणं सूचितम् । तत् द्विविधं द्वैविध्यं दर्शयति । परमपरं चेति । एकव्यक्तिसमावेशे सतीति चकारार्थः । नैकव्यक्तिकं सामान्यमस्तीति आकाशादौ वक्ष्यते । नान्यूनानतिरिक्तव्यक्तिकमिति बुद्धिरुपलब्धिर्ज्ञानमित्यादिपर्यायस्थितौ । न मिथो व्यभिचारीति निष्क्रमणत्वप्रवेशनत्वादिजा-

---

(१) तच्च व्यावृत्तेर्हेतुः सद्विशेषाख्यामपि लभते—पा० २ पु० ॥

(२) समानानां भाव उपाधिरपीत्यत उक्तं स्वाभाविक इति । सोऽपि यदि स्वभावजन्यस्तर्ह्यसिद्धिः । स्वभावाश्रितश्चोपाधिरपीत्यत उक्तं अनागन्तुक इति । साक्षात्समवेत इत्यर्थः । नित्यमिति । एकमिति स्वरूपाभिधानमात्रं न तु लक्षणार्थमित्येके । एकं लक्षणमिति योज्यम् । लक्षणान्तरं चासमवायित्वे सत्यनेकसमवेतत्वमित्यन्ये । अनेकवृत्तित्वमनेकाधारत्वं तच्चाभावसमवाययोरप्यस्तीत्यत उक्तमेकमसहायम् । अभावसमवाययोश्च प्रतियोगिसम्बन्धिनौ सहायावित्यपरे । अनेकवृत्तित्वं च स्वाश्रयान्योन्याभावसामानाधिकरण्यम् । असमाविष्टजात्योर्व्यावर्तनार्थमाह समावेशे सतीति । सामानाधिकरण्ये सतीत्यर्थः । यद्वा सामान्यं समाविष्टमसमाविष्टं चेत्येको विभागः । समाविष्टमपि परमपरं चेति विभक्तविभाग इत्यसमाविष्टजात्यपेक्षया समुच्चयार्थश्चकार इत्यर्थः । कि० प्र० व० ॥

तिसङ्करापत्तौ । न सामान्यादि(१) व्यक्तिकम् । अनवस्थाना-लक्षणव्याघातादसम्बन्धाच्चेति । तस्मात् परस्परपरिहारस्थि-तिविरुद्धम् । अविरुद्धं तु परापरभावस्थितीति नियमः । परं व्यापकमपरं व्याप्यमित्यर्थः । प्रमाणं सूचयति । अनुवृत्तिप्रत्य-यकारणमिति । यदि सामान्यं न स्याद् भिन्नेष्वनुगताकारः प्रत्ययो न स्यात् । द्रव्यगुणकर्मणामपि सामान्यद्वारेणैवानुवृ-त्तिप्रत्ययहेतुत्वात् । परमुदाहरति । तत्र परं सत्तेति । सत्ता-सामान्यं परमिति व्यवहर्तव्यम् । कुतो महाविषयत्वात् । द्रव्यत्वादिभ्योधिकविषयत्वात् । एवमन्यत्रापि यद्यदपेक्षयाधि-कविषयं तत्तदपेक्षया परमिति व्यवहर्तव्यं यथा सत्तेत्यर्थः । सा च सत्तासामान्यमेव । न तु द्रव्यत्वादिवद्विशेषोपि कुतो-नुवृत्तेरेव हेतुत्वादिति । ननु सामान्यादिभ्यो व्यावर्तमानापि सत्ता यदि स्वाश्रयं ततो न व्यावर्तयेत् तर्हि द्रव्यत्वादिकम-पि न व्यावर्तयेदविशेषात् । न । सत्ताया व्यक्तिस्वरूपमात्र-व्यङ्ग्यतया व्यक्त्यैक्यनियमाभावात् । बाधकात्तु सामान्यादौ तत्त्यागः । सामान्यान्तरस्य हि संस्थानगुणविशेषकार्यकार-णादिव्यङ्ग्यतया तेषां च नियतत्वान्न सर्वत्राभिव्यक्तिः तर्हि वस्तुस्वरूपमेव सत्तास्तु । न च गोत्वाद्यभावेपि यदि गौर्गौ-रिति प्रत्ययानुवृत्तिः स्वरूपतः स्यात् तदाश्वादावपि स्यादि-तिवत् यदि सत्तया विनापि सत्सदिति प्रत्ययानुवृत्तिः स्वरू-

---

(१) न सामान्यादीति । सामान्यादित्रिके जात्यनुपपत्तौ यथासंख्यमनव-स्थानादि हेतुत्रयम् । लक्षणेति । विशेषस्य सामान्यवत्त्वे सामान्यवत्ताद्भिन्नत्वे सति समवेतत्वलक्षणव्याघात इत्यर्थः । असम्बन्धादिति । समवायस्य समवा-यान्तराभावादित्यर्थः । कि० प्र० व० ॥

**नित्यद्रव्यवृत्तयो ह्यन्त्याः विशेषाः। ते च खल्व-त्यन्तव्यावृत्तिबुद्धिहेतुत्वाद्विशेषा एव विशेषाः(१) ॥**

---

पतः स्यात्सर्वत्र स्यादित्यनिष्टापत्तिरिति वाच्यम्। तदनुवृत्तेस्त-दभावेपीष्टत्वादिति । न । प्रत्ययानुवृत्तेर्निमित्तमन्तरेणानुप-पत्तेः। न च विशेषा एव तन्निमित्तम्। लक्षणमात्रं वा। सा-मान्योच्छेदप्रसङ्गात्। न हि विशेषान् लक्षणं वा विहाय क्व-चित्सामान्याभिव्यक्तिरस्ति। कथं तर्हि सामान्यादौ सदिति प्रत्ययः। सत्त्वैकार्थसमवायात्। गुणादिषु संख्याप्रत्ययवत्। अ-भावे ऽपि तर्हि स्यादिति चेत्। न। तस्य सद्विरुद्धतयैव प्रतीते-रिति। द्रव्यत्वाद्यपरम्। सत्तापेक्षयाल्पविषयत्वात्। तच्चेति। चस्त्वर्थः। अपिः समुच्चये। अनुवृत्तेर्हेतुत्वादिति हेतुमनुकर्षति सत्तायामन्त्येषु विशेषेषु चैकैकनिमित्तवशादेकैका संज्ञा। इह तु निमित्तद्वयसमावेशात्संज्ञाद्वयसमावेश इत्यर्थः। एतद्व्युत्पा-दनप्रयोजनं साधर्म्यादौ भविष्यतीति ॥

विशेषानाह। नित्येति। विशेषा इति बहुवचनेनानन्त्यं विवक्षितं के ते ऽन्त्या अन्ते ऽवसाने भवन्ति सन्तीति यावत्। येभ्यो ऽपरे विशेषा न सन्तीत्यर्थः। सामान्यरूपेभ्यो हि विशे-षेभ्यो ऽपरे गुणादयो विशेषाः सन्ति एभ्यस्तु नापरे किं त्वेष्वेव वैशिष्ट्यं समाप्यते। क्व ते वर्तन्त इत्यत उक्तं नित्येति। अयम-र्थः। अनित्यद्रव्येषु तावदाश्रयादिभिरेव विशिष्टबुद्धिरुपपन्नेति ततोऽधिकेषु विशेषेषु प्रमाणाभावः। नित्येषु तु द्रव्येष्वाश्रयर-

---

(१) ते च खल्वितरव्यावृत्तिहेतुत्वाद्विशेषा एव—पा० ४ पु० ॥

**अयुतसिद्धानामाधार्याधारभूतानां यः सम्बन्ध इह प्रत्ययहेतुः स समवायः ॥**

---

हितेषु समानजातीयेषु समानगुणकर्मसु च भवितव्यं व्यावर्तकेन धर्मेण व्यावृत्तत्वात्। न चैवं गुणादिष्वपि तत्कल्पनावकाशः आश्रयविशेषेणैव तद्व्यावृत्त्युपपत्तेरिति प्रमाणसूचनम्। तथा च वक्ष्यते। ननु तथापि सामान्यान्येव कानिचित्तथा भविष्यन्ति गुणा वा किं पदार्थान्तरकल्पनयेत्यत आह। ते चेति। चस्त्वर्थः। अयमर्थः। ते पुनर्यद्येकैकव्यक्तिवृत्तयः कथं सामान्यरूपाः अनेकव्यक्तिवृत्तित्वे च कथमत्यन्तव्यावृत्तबुद्धिहेतवः गुणा अपि भवन्तः सामान्यवन्तः स्युस्तथाप्यत्यन्तव्यावृत्तबुद्धिहेतुत्वं व्याहन्येत। अतो निःसामान्यास्तथा च गुणत्वव्याघातः तस्मादन्त्यव्यपदेशादत्यन्तव्यावृत्तबुद्धेरेव हेतुत्वाद्विशेषा एव विशेषा नान्यत्रान्तर्भूता इति। एतेन एकद्रव्याः (१) स्वरूपसन्त इति लक्षणं सूचितमिति। एवं च निःसामान्यत्वेपि विशेषोऽयं विशेषोऽयमित्यनुगतव्यवहार उपाधेर्लक्षणं चोपाधिरध्यवसेय इति ॥

समवायस्यैकत्वाद्विभागो नास्तीति लक्षणमाह। अयुतसिद्धानामिति। अयुताः (२) प्राप्ताश्च ते सिद्धाश्चेत्ययुतसिद्धाः

---

(१) एकद्रव्या इति। एकमात्रद्रव्याश्रया इत्यर्थः। स्वरूपेति। स्वरूपेणैव सन्तो न तु सत्तायोगेनेत्यर्थः। निःसामान्यत्वे सत्येकद्रव्यमात्रवृत्तित्वमिति लक्षणार्थः। एवं चेति। विशेषपदसङ्केतग्रहोऽपि तत एवेति द्रष्टव्यम्। कि० प्र० व० ॥

(२) ननु चायुतसिद्धौ यदि युतौ न सिद्धौ तदा कयोः सम्बन्धो धर्मिणोरेवाभावात्। अथायुतसिद्धौ तथापि कयोः सम्बन्धः सम्बन्धिनोरपृथग्भूतत्वात्

# एवं धर्मैर्विना धर्मिणामुद्देशः कृतः ॥

---

प्राप्ता एव सन्ति न वियुक्ता इति यावत् तेषां सम्बन्धः प्राप्तिलक्षणः समवायः । तेन संयोगो व्यवच्छिन्नस्तस्याप्राप्तिपूर्वकत्वात् तथा च (१) नित्या प्राप्तिः समवाय इति लक्षणं सूचितं भवति । अजसंयोगाभावो वक्ष्यते (२) । समवायस्य नित्यत्वं च । प्राप्तिपदेनैव वाच्यवाचकभावादिलक्षणः सम्बन्धो न प्रसज्यते । एतदेव स्पष्टयति । आधार्याधारभूतानामिति । स्वभावत आधार्याधाराणां न त्वागन्तुकेन धर्मेणेत्यर्थः । प्रमाणमाह । इह प्रत्ययहेतुरिति । इह तन्तुषु पट इह पटे शुक्लत्वं इह गवि गोत्वमित्यादयः प्रत्ययाः सम्बन्धमन्तरेणानुपपद्यमानास्तं व्यवस्थापयन्तीत्यर्थः ॥

अथान्येपि शक्तिसंख्यासादृश्यादयः पदार्थाः किमिति नोद्दिष्टा इत्यत आह । एवमिति । उक्तेन क्रमेण धर्मिणामुद्देशः कृतो धर्मैर्विना धर्मा एव परं नोद्दिष्टाः शक्त्यादीनामेष्वेवान्तर्भावात् । तथा च वक्ष्यामः । यद्यपि सामान्यविशेषसमवायानां लक्षणमप्युक्तं तथापि तस्येहाव्युत्पादनादनुक्तकल्पतयोद्दे-

---

पृथग्भूतयोरेव सम्बन्धादित्यत आह । अयुता इति । अन्योन्यपरिहारेण पृथगाश्रयानाश्रिता इत्यर्थः । एतदेव स्पष्टयति । प्राप्ता एवेति । अनेनाप्राप्तिर्निषिध्यते सा च प्राप्तिप्रागभावः तथा च तदप्रतियोगी सम्बन्ध इत्यर्थः । तेन विशेषणताख्योऽपि नित्यः सम्बन्धो निरस्तः । कि० प्र० व० ॥

(१) तेन—पा० १ । ३ पु० ॥

(२) अजेति । विभुनोर्मिथः संयोगो नास्त्यज इति न तत्रातिव्याप्तिरित्यर्थः । प्राप्तिपदेनेति । न च नित्यपदेनैव तन्निरासः तस्येश्वरेच्छारूपतया नित्यत्वात् यद्यपि प्राप्तित्वं संयोगसमवायान्यतरत्वमित्यन्योन्याश्रयस्तथापि जातिशून्यत्वे सति सामान्यत्वविशेषत्वशून्यभावत्वं तल्लक्षणमनेनोपलक्षितम् । कि० प्र० व० ॥

षण्णामपि पदार्थानां साधर्म्यमस्तित्वाभिधेयत्वज्ञेयत्वानि ॥

आश्रितत्वं चान्यत्र (१) नित्यद्रव्येभ्यः ॥

द्रव्यादीनां पञ्चानामपि समवायित्वमनेकत्वं च । गुणादीनां पञ्चानामपि निर्गुणत्वनिष्क्रियत्वे ॥

---

यः कृत इत्याह ॥

यद्यपि धर्मा अपि षड्भ्यो नातिरिच्यन्ते तथापि त एव परस्परमङ्गतामापन्नाः परस्परविवेकायोपयोच्यन्त इति पृथगुच्यन्त इत्यभिप्रायवानाह । षण्णामपीति । अपिरभिव्याप्तौ । अस्तित्वं विधिमुखप्रत्ययविषयत्वम् । प्रतियोग्यनपेक्षनिरूपणत्वमिति (२) यावत् । अभिधेयत्वमभिधानयोग्यता । शब्देन सङ्गतिलक्षणः सम्बन्धः । ज्ञेयत्वं ज्ञानयोग्यता । ज्ञाप्यज्ञापकसम्बन्धलक्षणः । नन्वेतद्द्वयमभावेप्यस्तीति चेत् । अस्तु । नहि तदपेक्षया वैधर्म्यमिदं विवक्षितमपि तु षडपेक्षया साधर्म्यम् ॥

आश्रितत्वमाश्रयता स्वाभाविकी सा च नित्यद्रव्येषु नास्तीत्यत आह । अन्यत्रेति । नित्यद्रव्याणि विहायेदं साधर्म्यमुक्तमित्यर्थः । ननु समवायेप्येतन्नास्तीति चेत् । न । समवायस्य समवायान्तराभावेपि स्वभावत एवाधारसन्निकृष्टत्वात् ।

(१) आश्रितत्वं त्वन्यत्र—पा० ३ पु० ॥

(२) निरूपणीयमिति—पा० २ पु० ॥

**द्रव्यादीनां त्रयाणां (१) सत्तासम्बन्धः सामान्यविशेषवत्त्वं स्वसमयार्थशब्दाभिधेयत्वं धर्माधर्मकर्तृत्वं च ॥**

---

तथा च वक्ष्यामः । चकारान्मूर्तं विहाय निष्क्रियत्वम् (२) ॥

अथ समवायाद्वैधर्म्यमितरेषां साधर्म्यमाह । द्रव्यादीनामिति । समवायित्वं (३) समवायलक्षणः सम्बन्धः । अनेकत्वं स्वरूपभेदः (४) चकारात् समवायादन्यत्वम् । द्रव्यं विहाय पञ्चानामाह । गुणादीनामिति । निर्गुणत्वं गुणाभावविशिष्टत्वं निष्क्रियत्वं क्रियाया असमवायः ॥

द्रव्यादीनां त्रयाणामिति । सत्तासम्बन्धः समवायलक्षणः । सामान्यविशेषा द्रव्यत्वादयस्तद्वत्त्वम् । निरुपपदेनार्थशब्देन द्रव्यादयस्त्रय एवाभिधीयन्ते नापरे एष एव स्वसमयो वैशेषिकाणां स्वशास्त्रे व्यवहारलाघवाय । यथा ध्यानधारणासमाधित्रयमेकत्र संयम इति योगानुशासने । द्रव्यादित्रयं तु प्रत्ये-

---

(१) त्रयाणामपि—पा० ३ । ४ पु० ॥

(२) निष्क्रियत्वमिति । न च निष्क्रियविनष्टे मूर्ते क्रियात्यन्ताभाववत्त्वमित्यतिव्यापकं कर्मवद्वृत्तिद्रव्यत्वव्याप्यजातिशून्यभावत्वस्येन्द्रियवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिशून्यभावत्वस्य वा विवक्षितत्वात् । कि० प्र० व० ॥

(३) समवायित्वमिति । यद्यपि समवायित्वं यदि समवेतत्वं तदा नित्यद्रव्याव्याप्तिः । समवायाश्रयत्वं च सामान्याद्यव्यापकं तयोः समवेतधर्माभावात् । तथापि समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं विवक्षितम् । कि० प्र० व० ॥

(४) स्वरूपेति । यद्यपि स्वरूपभेदः प्रामाणिकत्वमितरनिष्ठान्योन्याभावप्रतियोगित्वं वा द्वयमपि समवाये गतम् । तथापि स्वाश्रयान्योन्याभावसमानाधिकरणविभाजकोपाधिमत्त्वे तात्पर्यम् । कि० प्र० व० ॥

**कार्यत्वानित्यत्वे कारणवतामेव ॥**

**कारणत्वं चान्यत्र पारिमाण्डल्यादिभ्यः ॥**

---

कसमुदायाभ्यामिति विशेषः । तदिदमुक्तं स्वसमयेति । धर्माधर्मकर्तृत्वं चेति । साधर्म्यद्वयसूचनाय चकारः । धर्मकर्तृत्वमधर्मं विहाय अधर्मकर्तृत्वं च धर्मं विहाय । ननु जात्यादीनां कथं नैतत् । उच्यते । द्रव्यादीनां विहितनिषिद्धभावनाविष्टानां हि तद्धेतुत्वं न स्वरूपतः । न च भावनावेशो जात्यादिषु स्वरूपतो द्रव्यादिकमनन्तर्भाव्य संभवति । नित्यत्वेनाव्यापारत्वात् । अनित्यधर्मायोगेनाव्यापारित्वात् । न च ज्ञानमात्रेण तेषामुपयोगो ऽभियोगवदनिषेधात् (१) । तस्मात् स्वाश्रयावच्छेदमात्रेणैवोपयुज्यन्त इति ॥

कार्यत्वमभूत्वा भावित्वम् । अनित्यत्वं च भूत्वाऽभावित्वमिह विवक्षितम् । अन्यथा कारणवतामेवेति नियमो न स्यात् । तदनपेक्षान् विहायेत्येवकारार्थः ॥

कारणत्वं च ज्ञातृधर्मेतरकार्यापेक्षया । अन्यथा (२) पारि-

---

(१) अभियोगो विधिः । नियोगवदिति पाठे नियोगो विधिरित्यर्थः । कि० प्र० व० ॥

(२) ननु ज्ञानादिकं प्रति सामान्यादीनामपि कारणत्वमस्त्येवेत्यत आह । ज्ञातृधर्मेति । अन्यथेति । यद्यपि योगिप्रत्यक्षस्य विषयाजन्यतया पारिमाण्डल्यमपि न ज्ञातृधर्मजनकं तथाप्यतद्गुणसंविज्ञानबहुव्रीहिणाऽऽदिपदग्राह्याणामस्मदादिप्रत्यक्षज्ञानजनकत्वात् ते व्यवच्छेद्या द्रष्टव्याः । योगिप्रत्यक्षमपि विषयजन्यमिति केचित् । त्रयग्रहणं चेति । अत्र त्रयाणामित्यनुवृत्तेः त्रयस्यैव तत्साधर्म्यं तच्च सामान्यादेरपि ज्ञानकारणत्वात् कारणत्वमात्रविवक्षायां नोपपद्येत । न चाग्रे सामान्यादेरकारणत्वमेतद्वैधर्म्यं स्यादित्यर्थः । कि० प्र० व० ॥

द्रव्याश्रितत्वं चान्यत्र नित्यद्रव्येभ्यः ॥

सामान्यादीनां त्रयाणामपि स्वात्मसत्त्वं बुद्धिलक्षणत्वमकार्यत्वमकारणत्वमसामान्यविशेषवत्त्वं नित्यत्वमर्थशब्दानभिधेयत्वं चेति ॥

---

माण्डिल्यादिव्यवच्छेदस्त्वयग्रहणं च नोपपद्येत । पारिमाण्डिल्यं परमाणुपरिमाणम् (१) । आदिग्रहणात् परममहत्त्वं (२) अन्त्यावयविगतरूपरसगन्धस्पर्शपरिमाणानि द्वित्वद्विपृथक्त्वपरत्वापरत्वानि विनश्यदवस्थद्रव्ये संयोगविभागवेगकर्माख्यन्त्यः शब्दश्चरमः संस्कारो ज्ञानं च गृह्यते ॥

द्रव्याश्रितत्वं च द्रव्यसमवायिकारणता । एवं द्रव्यत्वादिसामान्यविशेषपदार्थयोरप्रसङ्गः तथाप्यव्यापकमत आह । अन्यत्रेति । नित्यद्रव्येभ्य इत्युपलक्षणं नित्यगुणेभ्य इत्यपि द्रष्टव्यम् । नित्यद्रव्याणि नित्यगुणांश्च विहायेदं पदार्थत्रितयसाधर्म्यमित्यर्थः । आद्यौ संयोगविभागौ नित्यवर्गं च विहाय गुणासमवायिकारणकता चेति चार्थः ॥

सामान्यादीनामिति । स्वात्मसत्त्वं सत्ताविरहः । बुद्धिलक्षणत्वं बुद्धिमात्रममीषां लक्षणं प्रमाणं न तु द्रव्यादिवत्प्रमाणान्तरमस्तीत्यर्थः । अनुवृत्तबुद्धिर्व्यावृत्तबुद्धिरिहेति बुद्धिरित्येव हि सामान्यादित्रये प्रमाणमिति । अकार्यत्वमनादित्वम् । कथ-

---

(१) बहुषु प्राचीनपुस्तकेषु पारिमाण्डिल्यमित्येव पाठस्तदनुरोधादेवात्र तथैव पाठो मूले सन्निवेशितः । नित्यं परिमण्डलमिति सूत्रम् । परिमण्डलमेव पारिमाण्डल्यम् । इति शङ्करमिश्राः ॥

(२) द्व्यणुकपरिमाणमित्यधिकं १ । ३ पु० ॥

मिति चेत् । अन्यथा स्वरूपव्याघातात् । सामान्यस्य हि कार्यत्वे व्यक्तिरेव समवायिकारणं स्यात् तथा च तदुत्पत्तिविनाशयोर्जात्युत्पत्तिविनाशे प्रतिव्यक्तिभिन्नं सत्तासामान्यरूपतां जह्यात् । अभेदे तु व्यक्तेः पूर्वमपि सत्त्वान्न तत्कारणकं स्यात् । एवं पूर्वतरपूर्वतमादिव्यक्तिभ्योपि प्राक् सत्त्वादनादित्वं सामान्यस्य । अन्यथा स्वरूपव्याघात इति । नित्यद्रव्याणां च कदाचिद् विशेषाभावे व्यावृत्तिरपि निवर्तेत तथा च द्रव्यसङ्करः स्यात् । न च स्वभावसाङ्कर्यं पुनरसाङ्कर्यं स्वभावपरावृत्तिप्रसङ्गात् ततः सर्वदैवासङ्कीर्णत्वात् सर्वदैव विशिष्टानीत्यनादय एव विशेषाः । समवायोपि निःसमवायः कथं समवायिकारणं विना भवेत् । भवन् वा (१) कथं न कार्यान्तरमर्यादामतिक्रामेत् । कथं चोत्पन्नोपि विनश्येत् तथा च कथमुत्पद्येतापि भावस्याविनाशिनो ऽनुत्पत्तेः । समवायान्तराभ्युपगमे च कथमनवस्थां नापादयेत् । कथं वा पश्चादुत्पद्यमानः संयोगलक्षणप्राप्तौ स्वभावं न जह्यात् । अप्राप्तिपूर्विका प्राप्तिरिति हि तत् नित्यसम्बन्धिषु तयानभ्युपगमाच्चेति तस्मात्सुष्ठूक्तं सामान्यादीनां त्रयाणामकार्यत्वमिति । अकारणत्वमात्मधर्मेतरकार्यापेक्षया । असामान्यविशेषवत्त्वमपरसामान्यविरहः स च सामान्येष्वनवस्थानात् विशेषेष्वपि सामान्यसद्भावे गुणत्वापत्तौ पुनः समानगुणेषु विशेषान्तरापेक्षायामनवस्थानादेव समवायस्यैकत्वात् समवायान्तरापेक्षायामनवस्थानाच्चेति । नित्यत्वमनन्तत्वं तच्चाकार्यत्वात् । अनित्यत्वं हि कार्यताव्याप्तं सा च

(१) भवन् वेति । भावकार्यान्तरस्य मर्यादामतिक्रामेदित्यर्थः । कि०प्र०व०।

पृथिव्यादीनां नवानामपि द्रव्यत्वयोगः स्वात्मन्यारम्भकत्वं गुणवत्त्वं कार्यकारणाविरोधित्वमन्त्यविशेषवत्त्वम् ॥

---

सामान्यादिभ्यो व्यावर्तमाना स्वव्याप्यमनित्यत्वमुपादाय निवर्तते । अकार्यमपि हि यद्याकाशपरमाण्वादि (१) सामान्यादि वा निवृत्तं स्यात् पुनस्तन्न स्यात् कारणाभावात् । ततस्तदभावेपि निराश्रयं किंचिदपि न स्यादिति । अर्थशब्दानभिधेयत्वं स्वसमयार्थशब्दानभिधेयत्वम् । चकारात् कारणानपेक्षत्वम् । उपलक्षणं चैतत् । एवमन्यदप्यूहनीयम् । तद्यथा अनित्यधर्मत्वमविशेषाणामेव नित्यत्वमकर्मणामेव अयोगिप्रत्यक्षत्वं द्रव्यादीनां चतुर्णामेव असमवायिकारणत्वं गुणकर्मणोरेव असमवेतत्वं नित्यद्रव्यसमवाययोरेव ॥

इदानीं द्रव्याणामेव साधर्म्यं वैधर्म्यं चाह । पृथिव्यादीनामिति । कियतामित्यत आह । नवानामपीति । अपिरभिव्याप्तौ । द्रव्यत्वयोगो द्रव्यत्वसमवायः द्रव्यत्वमित्येतावति वक्तव्ये योगग्रहणमुपलक्षणनियमार्थम् । अपरिच्छिन्नदेशत्वात् सामान्यसमवाययोः कथमत्रैवेदं नान्यत्रेति प्रत्ययनियम इति केचिद्दर्शयन्ति तत्रेदमुत्तरमत्रैव (२) द्रव्यत्वं वर्तते यत इत्युच्यते । अयमेव हि द्रव्यत्वस्य स्वभावो यदेतत्समवायमभिव्यञ्जये (३) देताभिर्व्यक्तिभिः सह न रूपादिभिः । गुणत्वं च रूपादिव्य-

---

(१) यद्याकाशपरमात्मादि—पा० २ पु० ॥

(२) केचिच्चोदयन्ति तत्रेदमुत्तरं तत्रैव—पा० १ पु० ॥

(३) अभिव्यञ्जयति—पा० २ पु० ॥

क्तीरादाय न पृथिव्यादिव्यक्तीरित्यादि वक्ष्यते। द्रव्यत्वमेव नास्ति गोत्वादिवदनुपलब्धेरिति चेत्। न। कार्याश्रयतोपलक्षणेन साधर्म्येणाभिव्यक्तस्य सामान्यस्य सास्नादिसंस्थानाभिव्यक्तगोत्वादिवत् प्रतीतेः। अन्यथा कार्याश्रयत्वमपि सामान्यानियतं नवस्वेव न स्यात् कारणत्वं हि सामान्येन नियम्यते कार्यत्वं च तच्च स्वाभाविकमबाधनात् बाधनाच्चौपाधिकमिति विशेषः॥

व्यक्तेरभेदस्तुल्यत्वं संकरोथानवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः (१)॥

व्यञ्जकधर्मानुपादाय जातिनिराकरणे गोत्वादिकमपि न स्यात्। न हि सास्नासम्बन्धाद्यनवभासने कस्यचिद्गौरिति प्रत्ययानुवृत्तिरस्ति तस्मादस्ति द्रव्यत्वम्। स्वात्मन्यारम्भकत्वं स्वसमवेतकार्यकारित्वं समवायिकारणत्वमित्यर्थः। गुणवत्त्वं गुण-

---

(१) जातौ बाधकमेव किमित्यत आह। व्यक्तेरभेद इति। अभिन्नव्यक्तिकान्यजात्या सहानूनानतिरिक्तव्यक्तिका च परस्परात्यन्ताभावसमानाधिकरणत्वे सति परस्परसमानाधिकरणा। अनवस्थादिपराहता च जातिर्न भवतीत्यर्थः। तथाहि। आकाशत्वं न जातिः एकव्यक्तिमात्रवृत्तित्वात् एतद्घटत्ववत्। अन्यथा जातिलक्षणव्याघातात्। बुद्धित्वं ज्ञानपदवृत्तिनिमित्तं न ज्ञानत्वभिन्नजातिः। ज्ञानभिन्नावृत्तित्वे सति सकलज्ञानवृत्तित्वात्। विषयित्ववत्। निष्क्रमणत्वप्रवेशनत्वे न जाती। परस्परात्यन्ताभावसमानाधिकरणत्वे सति परस्परसमानाधिकरणत्वात्। भूतत्वमूर्तत्ववत्। सामान्यं यदि द्रव्यकर्मभिन्नं सज्जातिमत् स्याद् गुणः स्यादिति सामान्यरूपाव्यवस्थैवानवस्थाविशेषो यदि द्रव्यकर्मान्यत्वे सति जातिमान् स्याद् गुणः स्यात्। तथा च व्यावृत्तधीहेतुर्न स्यात्। समवायो यदि प्राप्तित्वे सति समवायवान् स्यात् संयोगः स्यात्। न च प्राप्तित्वात् समवायवत्त्वं साध्यं साधनावच्छिन्नसाध्यव्यापकस्य संयोगत्वस्योपाधित्वादिति। परमते समवायनानात्वमभ्युपेत्योक्तम्। अस्माकं व्यक्तेरभेद एव तत्रापि बाधक इति क्रमेणापादनमिति भावः। कि० प्र० व०॥

अनाश्रितत्वनित्यत्वे चान्यत्रावयविद्रव्येभ्यः ॥

पृथिव्युदकज्वलनपवनात्ममनसामनेकत्वापरजातिमत्त्वे ॥

क्षितिजलज्योतिरनिलमनसां क्रियावत्त्वमूर्त्तत्वपरत्वापरत्ववेगवत्त्वानि ॥

---

समवायस्तदेतद्द्वयं निमित्तव्यवस्थापकम् । द्रव्यत्वं तु द्रव्यव्यवहारनिमित्तमित्यवधेयम् (१) । कार्यकारणाविरोधित्वम् । कार्यकारणयोरन्यतरेणापि (२) द्रव्यजातीयं न विरुध्यत इत्यर्थः । अन्त्यविशेषवत्त्वं एतद्द्रव्यजातीयस्यैव सम्भवतीत्यर्थः । अथवान्यत्रावयविद्रव्येभ्य इति भविष्यति ॥

अनाश्रितत्वमाधारैकस्वभावता (३) । नित्यत्वं द्रव्यत्वे सतीति बोध्यम् । चकाराद्विपर्ययेण विशेषरहितद्रव्यत्वमाश्रितद्रव्यत्वमनित्यद्रव्यत्वं चान्यत्र निरवयवद्रव्येभ्य इति ॥

पृथिवीत्यादि । अनेकत्वं बहुत्वसंख्या । अपरा जातिः पृथिवीत्वादिका तद्वत्ता तत्समवायः । संस्कारवत्ता चेति द्रष्टव्यम् ॥

क्षितीत्यादि । क्रिया स्पन्द(४) स्तद्वत्ता । मूर्तत्वमसर्वगतप-

---

(१) निमित्तमित्यवसेयम्—पा० २ पु० ॥

(२) कार्यकारणेति । यथा शब्दो गुणः कार्येण शब्देन नाश्यते कर्म श्रोत्तरसंयोगेन तथान्त्यः शब्द उपान्त्येन नैवं द्रव्यजातीयं तद्धि क्वचित् समवायिकारणनाशेन क्वचिदसमवायिकारणनाशेन नश्यतीत्यर्थः । कि० प्र० व० ॥

(३) स्वभावत्वम्—पा० २ पु० ॥

(४) धात्वर्थः क्रियाऽतिव्यापिकेत्यन्यथा व्याचष्टे स्पन्द इति । स्पन्दवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमित्यर्थः । एवं परत्वादावपीति नोत्पन्नविनष्टाव्याप्तिः । कि० प्र० व० ॥

आकाशकालदिगात्मनां सर्वगतत्वं परममहत्त्वं सर्वसंयोगिसमानदेशत्वं चेति ॥

पृथिव्यादीनां पञ्चानामपि भूतत्वेन्द्रियप्रकृति-

---

रिमाणयोगः । परत्वापरत्वे गुणविशेषौ वक्ष्येते । वेगः संस्कारविशेषस्तद्वत्ता ॥

आकाशादीनामिति ॥ सर्वगतत्वं पूर्वोक्तेषु सर्वेषु मूर्तेषु गतत्वं सम्बन्धः । परममहत्त्वं प्रकर्षकाष्ठाप्राप्तमहत्परिमाणयोगः । नन्वियत्तैव परिमाणमुच्यत इति चेत् । न । संख्यागुरुत्वयोरपि तथाभावप्रसङ्गात् । हस्तवितस्त्यादिपरिकल्पनाभावे (१) परमाणुत्वस्याप्यभावप्रसङ्गात् । तदभावेपि परमसूक्ष्मत्वात् परिमित एव परमाणुरिति चेत् । न । तदभावेपि परममहत्त्वात् परिमितमेवाकाशादीति न कश्चिद्विशेषः । तस्माद्धस्तवितस्त्यादिप्रकर्षनिकर्षवानितरेभ्यो व्यावृत्तः परस्परमनुवृत्तश्च गुणविशेषः प्रत्यक्षसिद्धो दुरपह्नवस्तस्य यथा निकर्षकाष्ठया परमाणुत्वं तथा प्रकर्षकाष्ठया परममहत्त्वमपीति । सर्वसंयोगिसमानदेशत्वम् । सर्वेषां संयोगिनां मूर्तानां संयोगवृत्त्या समाना आकाशादयो देशास्तेषां भावस्तत्त्वम् । पूर्वमाकाशाद्येव सर्वमूर्तेषु वर्तत इत्युक्तम् । सम्प्रति त एवाकाशादिषु वर्तन्त इत्यपौनरुक्त्यम् । अथ वा पूर्वं मूर्तसंयोगा एवाकाशादिषु वर्तन्त इत्युक्तम् । सम्प्रति मूर्ता एव नभःप्रभृतिषु वर्तन्त इत्यपौनरुक्त्यम् । चकारात् क्रियापरत्वापरत्ववेगविरहः ॥

---

(१) तदभाव इति चेन्नेत्यत्राधिकम् १ पु० ॥

त्वबाह्यैकैकेन्द्रियग्राह्यविशेषगुणवत्त्वानि ॥

---

पृथिव्यादीनामिति । भूतत्वमौपाधिकं(१)सामान्यम् । अथ जातिरेव किं न स्यान्न स्यात् व्यञ्जकनियमाभावेन व्यक्तिनियमानुपपत्तेः बहिरिन्द्रियग्राह्यविशेषगुणवत्तैव व्यञ्जिकेति चेत् । न । तदामूर्तत्वमपि जातिरेव स्यात् । अवच्छिन्नपरिमाणस्य व्यञ्जकस्य सद्भावात् (२) । एवमस्तु को दोष इति चेत् । न । जातिसङ्करप्रसङ्गात् । तथाहि मनसि मूर्तत्वं नभसि च भूतत्वं मिथः परिहारेण वर्तमानं पृथिव्यादौ संकीर्यते । अस्तु तर्हि पृथिवीत्वाद्यनेकनिबन्धनप्रवृत्तिरेव भूतशब्दो ऽक्षादिवदिति चेत् । न । एकनिमित्तत्वे सम्भवत्यनेकार्थत्वकल्पनानवकाशात् तस्माद्भोक्तव्यविषयाश्रयतया भूतानि सिद्धानि भूतानीत्युच्यन्ते । इन्द्रियप्रकृतित्वमिन्द्रियोपादानत्वं तच्च नभसोऽवच्छिन्नानवच्छिन्नभेदकल्पनयोपपादनीयम् । अन्यथा भूतेभ्य इति पञ्चमी समानतन्त्रे (३) स्वतन्त्रे च मनस एतद्वैधर्म्यं न स्यादिति । प्रकृतिशब्दः स्वभावार्थो वा तथा च मनोऽव्यवच्छेदाय सन्निधिसिद्धं बाह्यपदमनुसन्धेयम् । बाह्यैकैकेन्द्रियग्राह्यविशेषगुणवत्त्वं बाह्येनानात्मगुणग्राहिणा (४) एकैकेन प्रति-

---

(१) औपाधिकमिति । संस्कारत्वान्यबहिरिन्द्रियग्राह्यगुणत्वव्याप्यजातिमद्विशेषगुणवत्त्वमात्माभिन्नविशेषगुणवत्त्वं वेत्यर्थः । कि० प्र० व० ॥

(२) व्यञ्जकसम्भवात्—पा० २ पु० ॥

(३) समानतन्त्रे गौतमसूत्रे तथा च घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्य इति ॥

(४) अनात्मेति । अनात्मगुणग्राहकत्वं मनस्यपीत्यात्मगुणाग्राहकेणेत्यर्थः । कि० प्र० व० ॥

चतुर्णां द्रव्यारम्भकत्वस्पर्शवत्त्वे ॥

त्रयाणां प्रत्यक्षत्वरूपवत्त्वद्रवत्ववत्त्वानि ॥

द्वयोर्गुरुत्वं रसवत्त्वं चेति ॥

भूतात्मनां वैशेषिकगुणवत्त्वम् ॥

क्षित्युदकात्मनां चतुर्दशगुणवत्त्वम् ॥

---

नियतेनेन्द्रियेण साक्षात्कारिज्ञानसाधनेन च ग्राह्या ग्रहणयोग्या ये गुणा गन्धादयः परस्परं विशेषा व्यवच्छेदहेतवस्तद्वत्त्वम् । अत्र विवक्षाभेदेन बाह्यैकैकेन्द्रियग्राह्यगुणवत्त्वं बाह्येन्द्रियग्राह्यविशेषगुणवत्त्वं चेति बोद्धव्यम् ॥

चतुर्णां पृथिव्यप्तेजोवायूनां द्रव्यारम्भकत्वं द्रव्यसमवायिकारणत्वम् । स्पर्शवत्त्वं स्पर्शसमवायः । उपलक्षणं चैतत् । अवान्तराणुत्वमहत्त्वे स्थितिस्थापकसंस्कारयोगः । शरीरेन्द्रियारम्भकत्वं चेत्यपि द्रष्टव्यम् ॥

त्रयाणां पृथिव्यप्तेजसां प्रत्यक्षत्वं बाह्येन्द्रियग्राह्यत्वम् । रूपवत्त्वं रूपसमवायः द्रवत्ववत्त्वं द्रवत्वसमवायः सम्भाव्यते चैतत् ॥

द्वयोः पृथिव्युदकयोः गुरुत्वं तत्कार्यं पतनं च । रसवत्त्वं च रसो माधुर्यादिस्तद्वत्त्वम् । आलोकप्रकाश्यत्वं अभास्वररूपवत्त्वं चेति चार्थः ॥

भूतात्मनां पृथिव्यादीनां पञ्चानामात्मनां च वैशेषिकगुणवत्त्वं स्वाश्रयव्यवच्छेदौपयिकावान्तरसामान्यविशेषवन्तो वैशेषिका गुणाः रूपादयो बुद्ध्यादयश्च तद्वत्त्वम् । उपलक्षणं चैतत् । प्रत्यक्षगुणवत्त्वमित्यपि द्रष्टव्यम् ॥

आकाशात्मनां क्षणिकैकदेशवृत्तिविशेषगुणवत्त्वम् ॥

दिक्कालयोः पञ्चगुणवत्त्वम् ॥

सर्वोत्पत्तिमतां निमित्तकारणत्वं च ॥

---

क्षित्युदकात्मनां चतुर्दशगुणवत्त्वं संख्यामात्रेण(१)साधर्म्यमेतत्। न तु गुणा विशेषतो विवक्षिताः सम्भावितं चैतत् साधर्म्यं न तु व्यापकं परमेश्वरात्मन्यसम्भवात्। तानग्रे गणयिष्यति ॥

आकाशात्मनां क्षणिकैकदेशवृत्तिविशेषगुणवत्त्वम्। क्षणिका आशुतरविनाशिन एकदेशवृत्तयो ऽव्याप्यवृत्तयः (२) विशेषाय स्वाश्रयव्यवच्छेदाय गुणा विशेषगुणास्तद्वत्त्वम्। अत्रापि विवक्षाभेदादेकदेशवृत्तिविशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वं चेति द्रष्टव्यम्। आकाशे तादृशो गुणः शब्दः। आत्मनि बुद्ध्यादिः ॥

दिक्कालयोः पञ्चगुणवत्त्वं संख्यापरिमाणपृथक्त्वसंयोगविभागाः पञ्चैव गुणाः दिशि काले च ॥

सर्वोत्पत्तिमतां निमित्तकारणत्वं च। तत्समवेतद्वित्वद्विपृथक्त्वादिसंयोगविभागवर्जं सर्वाण्युत्पत्तिमन्ति गृह्यन्ते तेषां निमित्तकारणं दिक्कालौ। न हि देशकालानपेक्षं किं चिदुत्पद्यते। तथा च व्यपदिश्यते इहेदानीं जात इति। गेहे जातो गोष्ठे जात इत्यनिमित्तमपि गेहादि व्यपदिश्यत इति चेत्।

---

(१) संख्यामाश्रित्य—पा० २ पु० ॥

(२) अव्याप्येति। समानाधिकरणात्यन्ताभावप्रतियोगिन इत्यर्थः। कि० प्र० व० ॥

**क्षितितेजसोर्नैमित्तिकद्रवत्वयोगः ॥**

**एवं सर्वत्र विपर्ययात् साधर्म्यं वैधर्म्यं च वाच्यमिति ॥**

---

न । तस्याप्यधिकरणतया निमित्तत्वात् । न ह्यधिकरणमकारणमिति । यद्येवं सम्प्रदानतयाऽदृष्टद्वाराधिष्ठातृतया वा आत्मनामपि सर्वोत्पत्तिमन्निमित्तकारणत्वमस्ति तत्कथमनयोरेवोपन्यास इति चेत् । सत्यम् । अधिकरणतया तु सर्वोत्पत्तिमन्निमित्तत्वं विवक्षितम् । यथा हि दिक्कालोपाध्यधिकरणा सर्वोत्पत्तिः । नैवमात्मोपाध्यधिकरणेति । परत्वापरत्वानुमेयत्वं चेति चार्थः ॥

क्षितितेजसोर्नैमित्तिकद्रवत्वयोगः अग्निसंयोगान्निमित्तादुत्पद्यते यद् द्रवत्वं तत्समवायः सुवर्णादौ तैजसे घृतादौ पार्थिवे ॥

एवं सर्वत्र विपर्ययात् साधर्म्यं वैधर्म्यं च वाच्यमिति । एवमनेन न्यायेन सर्वत्र साधर्म्यं यत् तदेव विपर्ययाद् व्यावृत्तेर्वैधर्म्यं वैधर्म्यं यत् तदेव विपर्ययादनुवृत्तेः साधर्म्यम् । अथवा साधर्म्यविपर्ययो ऽप्यन्यस्मात् साधर्म्यं (१) वैधर्म्यविपर्ययो ऽप्यन्यस्माद्वैधर्म्यं च स्वयमूहित्वा वाच्यमध्यापकेन ग्राह्यं च शिष्यैरिति । तद्यथा गन्धवती पृथवीति वैधर्म्यं वक्ष्यति तद्विपर्ययान्निर्गन्धत्वमबादीनां साधर्म्यमुक्तं जलभूम्योः साधर्म्यं गुरुत्वं रसव-

---

(१) साधर्म्यविपर्ययो ऽप्यन्यस्मात्साधर्म्यमित्यत्र वैधर्म्यं चेत्यपि द्रष्टव्यम् । अन्यस्मादिति ल्यब्लोपे पञ्चमी अन्यं प्राप्य साधर्म्यमित्यर्थः । वैधर्म्यविपर्ययो ऽप्यन्यस्माद्वैधर्म्यं साधर्म्यं चेत्यपि द्रष्टव्यम् । कि० प्र० व० ॥

त्वं च तद्विपर्ययादितरेभ्यो वैधर्म्यम् । विपर्ययस्त्वितरेषां तेजः-प्रभृतीनां साधर्म्यमगुरुत्वं नीरसत्वं च । एवमात्मानं विहाय परार्थत्व(१)मचेतनत्वं च । मनो विहायानन्तःकरणत्व-मनष्टगुणवत्त्वं च । अम्भो विहाय निःस्नेहत्वमक्लेदत्वं(२) च । तेजो विहायाऽनुष्णत्वमदाहकत्वम् । जलज्योतिरनिलानाम-पाकजस्पर्शवत्त्वम् । जलज्योतिषोरपाकजरूपवत्त्वम् । दिक्काल-मनसां वैशेषिकगुणविरहः । वाय्वाकाशदिक्कालमनसामती-न्द्रियत्वम् । आत्ममनसोः(३) शरीरावच्छेदेन वृत्तिलाभः । वा-य्वादीनां नीरूपत्वम् । आकाशादीनां स्पर्शशून्यत्वम् । का-लादीनामभूतत्वमित्यादि ॥

---

(१) परार्थत्वं भोगानधिकरणत्वमित्यर्थः । अनन्तरिति । आत्मग्राहकेन्द्रिया-न्यद्रव्यत्वमित्यर्थः । कि० प्र० व० । अनन्तःकरणत्वमनणुत्वं—पा० १ पु० ॥

(२) अक्लेदत्वमिति । सांसिद्धिकद्रवत्वाविरहिद्रव्यत्वमित्यर्थः । कि० प्र० व० ॥

(३) आत्ममनसोरिति । शरीरावच्छेदः शरीरसंयोगविशेषः । वृत्तिलाभो भोगजनकत्वम् । तच्चासमवायिकारणत्वम् । तेन भोगासमवायिकारणसंयोगाश्र-यत्वमित्यर्थः । शरीरतत्संयोगौ च निमित्तकारणे इति नातिव्याप्तिः । यद्वा * निरवयवत्वे सति ज्ञानहेतुशरीरसंयोगवत्त्वमित्यर्थः । कि० प्र० व० ॥

---

* यदि कार्यैकार्थप्रत्यासत्त्या शरीरात्मसंयोगोऽप्यसमवायिकारणं तदा शरीर एव तदव्याप्तमतो लक्षणान्तरमाह । यद्वेति । प्राणाद्यतिव्याप्तिनिरासायाद्यविशेष-णम् । ज्ञानहेतुमनःसंयोगवति श्रोत्रे ऽतिव्याप्तिरिति शरीरपदम् । शरीरेन्द्रिय-संयोगस्य च ज्ञानहेतुत्वे मानाभाव इति तद्विशेषणेनातिव्याप्तिनिरासः । न च त-स्याहेतुत्वे शरीरसंयुक्तं सदित्यग्रिमग्रन्थविरोधः । तत्तेन नियममात्राभिधानान्न तु हेतुत्वाभिधानात् । यदि शरीरेन्द्रियसंयोगोऽपि हेतुस्तदा श्रोत्रातिव्याप्तिनिरासाय श्रोत्रान्यत्वं विशेषणम् । यद्वा ज्ञानहेतुत्वं सकलजन्यज्ञानहेतुत्वं विवक्षितमि-त्यदोषः । शरीरपदं चैवं सति व्यर्थमेवेति केचित् । वयं तूद्भूतरूपपरमाणुनि-ष्ठमहत्त्वाभावसाक्षात्कारप्रत्यासत्तिघटकचक्षुःसंयोगवति परमाणावतिव्याप्तिवार-णाय शरीरपदमिति ब्रूमः । कि० प्र० व्या० भ० ॥

**इहेदानीमेकैकशो वैधर्म्यमुच्यते ॥**

**पृथिवीत्वाभिसम्बन्धात् पृथिवी । रूपरसगन्ध-**

---

तदेवमुक्तैर्द्रव्यत्वादिभिर्द्रव्यमितरेभ्यो विविचितं न तु मध्यवर्तिभि(१)रन्त्यविशेषवत्त्वादिभिरव्याप्तेः नापि परस्परतोऽतिव्याप्तेः किन्तु कियानपि विवेकः सिद्ध्यतीत्युक्तम् । न चैतावतैव कृतकृत्यत्वमविवेकस्य तदवस्थत्वादिति तत्कुतो विवेकः स्यादित्यपेक्षायामाह ॥

इहेदानीमिति । इह प्रकरणे इदानीमवसरप्राप्तौ एकैकमित्येतावतैव चरितार्थत्वे (२) शसप्रत्ययोपादानं वीप्सायां भूयस्त्वज्ञापनार्थम् ॥

पृथिवीत्वाभिसम्बन्धात् पृथिवीति । पृथिवीत्वं नाम सामान्यविशेषः तेनाभिमतः सम्बन्धः समवायलक्षणः तस्मात् । न त्वेकार्थसमवायसंयुक्तसमवायादेरित्यर्थः । ननु पृथिवीस्वरूपसिद्धौ किंलक्षणेन सिद्धे साधनस्य वैयर्थ्यात् तदसिद्धौ चाश्रयासिद्धेः । न । स्वरूपसिद्धावपीतरव्यवच्छेदस्य साध्यमानत्वात् तथाहि । पृथिवी अबादिभ्यो भिद्यते पृथिवीत्वात् । यत्पुनरितरेभ्यो न भिद्यते नासौ पृथिवी यथा अबादि । न चेयं न पृथिवी तस्मादितरेभ्यो भिद्यते । तथाप्यप्रसिद्धविशेषणः पक्षः इतरव्यवच्छेदस्य क्वचिदप्यप्रसिद्धेः सिद्धौ वा साधनवैयर्थ्यात् ।

---

(१) मध्यवर्तिभिः एकदेशवृत्तिभिरित्यर्थः । अन्त्यविशेषवत्त्वादिभिरित्यत्रादिपदेन मूर्तत्वादिग्रहणम् । अव्याप्तेः भागासिद्धतया सर्वद्रव्याव्यावर्तकत्वादित्यर्थः । कि० प्र० व० ॥

(२) चरितार्थत्वात् —पा० २ पु० । चरितार्थे—पा० ३ पु० ॥

न। इतरव्यावृत्तेर्घटादावेव प्रत्यक्षसिद्धत्वात् । किन्त्वापरमाणोराच भूगोलकात् पृथिवीत्वनिमित्ताक्रान्ते व्याप्त्या व्यवच्छेदभेदव्यावृत्त्या व्यावृत्तिर्न (१) सिद्धेति साध्यत इति न दोषः। अथ किमेतल्लक्षणमिति। उच्यते। केवलव्यतिरेकिहेतुविशेष एव लक्षणम्। तथा चाचार्याः समानासमानजातीयव्यवच्छेदो लक्षणार्थ इति। एवं तर्हि पृथिवीत्वनिमित्ताक्रान्ते व्याप्त्यावच्छेदभेद(२)व्यावृत्त्या व्यावृत्तिः क्वचिन्न सिद्धेति पुनरप्यप्रसिद्धविशेषणत्वं समायातमिति चेन्न पक्षसम्बन्धिनो विशेषणस्य सर्वत्रान्वयिन्यप्यपूर्वस्यैव (३) साध्यत्वात्। प्रसिद्धो हि धर्मी धर्मिणमन्वेति न तु धर्म्यन्विततयैव प्रसिद्धः साध्यत इति। तथा सति सिद्धेः साधनवैयर्थ्यादिति। तथापि घटादौ चेदितरव्यावृत्तिः प्रत्यक्षसिद्धा ततस्तद्दृष्टान्तबलेनान्वयादेव परमाण्वादौ साध्यतां किं घटादिकमपि पक्षे निक्षिप्य व्यतिरेक आद्रियत इति चेत्। आस्तां तावदयं सुहृदुपदेशः केवलव्यतिरेकिलक्षणं तावन्निर्व्यूढम्। व्यवहारसिद्धि(४)र्वा लक्षणप्रयोजनम्। तथाहि। विवादाध्यासितं द्रव्यं पृथिवीति व्यवह्रियते लोके न पृथिवीत्वात्। यत्पुनः पृथिवीति न व्यवह्रियते न सा

---

(१) अवच्छेदभेदेन व्यावृत्तिर्न—पा० ३ पु० ॥

(२) व्याप्त्येत्यस्यैव व्याख्यानमवच्छेदेति। अवच्छेदभेदो घटत्वपटत्वादिः। तस्य व्यावृत्त्या विरहितत्वेन लक्षिता व्यावृत्तिरित्यर्थः। कि० प्र० व० ॥

(३) सर्वत्राप्रसिद्धस्यैव—पा० १ पु० ॥

(४) व्यवहारसिद्धिर्वेति। ननु पृथिवीव्यवहारः पृथिवीपदप्रयोगविषयत्वं वा पृथिवीपदजन्यज्ञानविषयत्वं वा पृथिवीत्वेन निमित्तेन पदवाच्यत्वं वा पृथिवीत्वेऽप्यस्तीति ततो हेतुव्यावृत्तावसाधारण्यम्। मैवम्। पृथिवीत्वेन निमित्तेन पृथिवीशब्दाभिधेयत्वस्य तद्व्यवहारार्थत्वात्। कि० प्र० व० ॥

पृथिवी यथा अबादि । न च नेयं पृथिवी तस्मात्तथा व्यवह्रि-यत इति । अत्रापि व्यवहारविषयस्य स्वरूपतः सिद्धेर्नाश्रया-सिद्धिः । पृथिवीव्यवहारस्य संमुग्धस्य सिद्धेर्नाप्रसिद्धविशेषण-त्वम् । पक्षे व्याप्त्या निमित्तविशेषवतः साध्यत्वान्न साधनवै-यर्थ्यं सर्वपृथिवीपक्षीकरणेन च नान्वयित्वम् । यद्यस्यान्वयव्य-तिरेकावनुविधत्ते तत्तद्धेतुकं यथा घटादि मृदादिहेतुकं अनु-विधत्ते च पृथिवीव्यवहारः पृथिवीत्वस्यान्वयव्यतिरेकाविति चेत् । न । पृथिवीत्वनिमित्तकत्वे पृथिवीव्यवहारस्य साध्ये ऽन्वयाभावात् । केवलं (१) सर्वनाम्ना(२) व्यवहारमात्रेण व-क्तीयमन्वयः स च व्यतिरेकान्न भिद्यते विवक्षाभेदादिति । यत्पुनराह भूषणो लक्षणं चिह्नं लिङ्गमिति (३) पर्याय इति । तदसत् । व्यावृत्तौ व्यवहारे वा साध्ये ऽन्वयिनो ऽनवकाशात् । व्युत्पन्नस्य स्वयमेव व्यवहारात् । अव्युत्पन्नस्य सपक्षपरिचया-भावात् । कथं तर्हि शास्त्रे क्रियावद्‌ द्रव्यमिति द्रव्यलक्षणं प-ठ्यते (४) । द्रव्यस्यैवायमसाधारणो धर्मः समवायिकारणत्वव-द्गुणवत्त्ववच्चेति प्रतिपादनार्थं न तु लक्षणत्वेन द्रव्यमात्रं पक्षी-कृत्य व्यावृत्तिसाधने भागासिद्धत्वात् । मूर्तद्रव्यमात्रपक्षीकर-णेप्यसाधारणत्वात् । तस्माद्वायुमनसोरप्रत्यक्षत्वेन द्रव्यत्ववि-प्रतिपत्तौ च क्रियावत्त्वेन तत्प्रसाध्य भागासिद्धिः परिहरणी-

---

(१) केवलमिति । नहि यत्त्वं तत्त्वं चानुगतमिति व्यतिरेकव्याप्तिमुपजीव्य सर्वनाम्नान्वयाभिधानमेव वक्तृत्वार्थः । कि० प्र० व० ॥

(२) सर्वनामशब्देन—पा० २ पु० ॥

(३) लक्षणं चिह्नं गमकं लिङ्गमिति—पा० ३ पु० ॥

(४) द्रव्यलक्षणमुपपद्यते—पा० १ पु० ॥

स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वसंस्कारवती । एते च गुणविनिवे-

---

शेति तस्य तात्पर्यम् । ये तु प्रमाणमेव सर्वस्य व्यवस्थापकं न तु लक्षणं तदपेक्षाया(१)मनवस्थामाहुः तेषां निन्दामि च पिबामि चेति न्यायः (२) । यतोऽव्याप्त्यतिव्याप्तिपरिहारेण तत्तदर्थव्यवस्थापकं तत्तद्व्यवहारव्यवस्थापकं च प्रमाणमुपादत्ते तदेव लक्षणम् । अनुवादः स (३) इति चेत् । अस्माकमप्यनुवाद एव । न ह्यलौकिकमिह किंचिदुच्यते । न चानवस्था वैद्यकादौ रोगादिलक्षणवद् व्याकरणादौ शब्दादिलक्षणवच्च व्यवस्थोपपत्तेः । तत्रापि संमुग्धव्यवहारमाश्रित्य लक्षणैरेव व्युत्पत्तिरिति । क्षित्युदकात्मनां चतुर्दशगुणवत्त्वं साधर्म्यमित्युक्तम् । तत्र के ते चतुर्दशगुणाः पृथिव्यामित्यत आह । रूपेति । ननु गन्धसाहचर्याद्रूपादयोप्यसाधारणतामापन्नास्तत्कथं न लक्षणमिति चेत् । न । केवलस्यैव गन्धस्यासाधारणत्वे विशेषणासामर्थ्यात् । एतच्चानुपदमेव स्फुटयिष्यति । एषु सूत्रकारसम्मतिमाह । एते चेति । गुणानां विनिवेशो द्रव्येषु समवायः स च प्रतिपाद्यत्वेनाधिक्रियते ऽस्मिन्निति गुणविनिवेशाधिकारः द्वितीयोऽध्यायः । तथा च सूत्रम् । तत्र रूपरसगन्धस्प-

---

(१) तदपेक्षायामिति । लक्षणे ऽपि लक्षणापेक्षायामित्यर्थः । कि० प्र० व० ॥

(२) न्यायापातः— पा० १ पु० ॥

(३) स इति । लक्षणरूपो ऽर्थो ऽनुवादो न त्वपूर्वार्थप्रापकः मानान्तरप्रतीतार्थप्रमापकत्वादित्यर्थः * । कि० प्र० व० ॥

* प्रमितार्थप्रतिपादकत्वादित्यपि पाठः पुस्तकान्तरे ॥

शाधिकारे रूपादयो गुणविशेषाः सिद्धाः । चाक्षुषवचनात् सप्त संख्यादयः । पतनोपदेशाद् गुरुत्वम् । अद्भिः सामान्यवचनाद् द्रवत्वम् । उत्तरकर्मवचनात् संस्कार इति (१) ॥

---

र्शवती पृथिवीति सूत्रकारवचनाद्रूपादयः सिद्धाः(२) चाक्षुषवचनात् सप्त संख्यादय इति । संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे । कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणीति सूत्रे संख्यादीनां चाक्षुषत्वे हेतुत्वेन रूपिद्रव्यसमवाय उक्तः । न चासिद्धस्य हेतुत्वम् । अतस्तेपि रूपवत्यां पृथिव्यां सप्त सिद्धाः । पतनोपदेशाद्गुरुत्वमिति संयोगविभागप्रयत्नवेगाभावे (३) गुरुत्वात् पतनमिति पतने गुरुत्वस्य हेतोरुद्देशात् पतनवत्यां पृथिव्यां गुरुत्वमपि सिद्धं न ह्यसिद्धस्य हेतुत्वं नापि व्यधिकरणस्य कर्मासमवायिकारणत्वं नोदनादिषु विपर्यासदर्शनादिति । अद्भिः सामान्यवचनाद् द्रवत्वमिति सर्पिर्जतुमधूच्छिष्टानां पार्थिवानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यमिति सूत्रे सर्पिरादीनां पार्थिवानां द्रवत्वमद्भिः समानो धर्म इत्युक्तमतो द्रवत्वमपि सिद्धम् । उत्तरकर्मवचनात् संस्कार इति । नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरं चेति सूत्रे इषुकर्मोपदेशेन पार्थिवद्रव्यस्योत्तरस्मिन्

---

(१) इतीति नास्ति २ पु० ॥

(२) तथा च सूत्रम् । रूपरसगन्धस्पर्शवती पृथिवी । संख्यादौ सूत्रकारसम्मतिमाह । चाक्षुषवचनात्—पा० २ पु० ॥

(३) संयोगाद्यभावे—पा० १ पु० ॥

क्षितावेव गन्धः । रूपमनेकप्रकारकं शुक्लादि । रसः षड्विधो मधुरादिः । गन्धो द्विविधः सुरभिरसुरभिश्च । स्पर्शोऽनुष्णाशीतत्वे सति पाकजः ॥

---

कर्मणि संस्कारः कारणतयोक्तोऽतः सोऽपि सिद्धः । उपलक्षणं चैतत् । आद्यकर्मकार्यतयाप्युक्तस्तच्चैव सिद्ध इत्यपि द्रष्टव्यम् । तदनेन सूत्रकारसंमतिप्रदर्शनव्याजेन सर्वत्र प्रमाणमादर्शितम् । तथाहि । रूपादिष्वेकादशसु प्रत्यक्षं पतनलिङ्गकमनुमानं (१) गुरुत्वे । अग्निसंयोगान्वयव्यतिरेकानुविधायितया नेदमिह क्षीरादिवत् संयुक्तसमवायेन नान्यस्येति प्रत्यक्षमेव सोपपत्तिकं द्रवत्वे । निरन्तरो गतिसन्तान एव वेगव्यवहारहेतुरिति मीमांसकदुर्दुरूढविप्रतिपत्तिव्युदासाय कार्यलिङ्गक(२)मनुमानं संस्कार इति ॥

एवं गुणवत्त्वेन द्रव्यत्वे व्यवस्थिते पृथिवीत्वव्यवस्थाहेतून् गुणविशेषानाकृष्य दर्शयति । क्षितावेव गन्ध इति । क्षितावेव गन्धो वर्तते न द्रव्यान्तरे । तेन गन्धसमवायः पृथिवीत्व(३) व्यवस्थाहेतुरित्युक्तं भवति । यत्तु सुगन्धि सलिलं सुरभिः समी-

---

(१) पतनलिङ्गकमिति । गन्धवत्यधःसंयोगफलिका क्रिया सासमवायिकारणिका क्रियात्वात् संप्रतिपन्नवदिति न तेजस्यगुरुण्यपि तद्दर्शनाद् व्यभिचारः । न चैवं रसेनार्थान्तरम् । रसोत्कर्षेण पतनोत्कर्षाभावात् । कि० प्र० व० ॥

(२) कार्यलिङ्गकमिति । नोदनाभिघाताजन्यं द्वितीयं कर्म सासमवायिकारणं कर्मत्वादाद्यकर्मवत् । न च कर्मणार्थान्तरं कर्मवति कर्मान्तरानुत्पत्तेरित्यर्थः । कि० प्र० व० ॥

(३) पृथिवीव्यवस्थाहेतु—पा० २ पु० ॥

रण इति तत्पार्थिवकुसुमाद्यधिवासनिबन्धनम् । तदन्वयव्यतिरेकानुविधानात् न तु स्वभावत इत्यवधेयम् । ननु तथाप्यव्यापको गन्धः क्षितेः । वक्ष्यमाणेषु मणिवज्रादिष्वनुपलब्धेः तत्कथं तद्व्यवस्थाहेतुः न पाकेन पूर्वरूपनिवृत्तौ (१) रूपान्तरोत्पत्तौ च पाकजरूपस्यैव गन्धसहचरिततया तत्रापि तदनुमानात् । अनुद्भवात्तु तदनुपलम्भः तत्र घ्राण इवेत्यभिप्रायः । रूपमनेकप्रकारं शुक्लादि क्षिताविवेत्यनुवर्तते । यद्यपि शुक्लादिरूपं समुच्चयेन न संभवति । स हि जातिसमुच्चयो विरोधादेवानुपपन्नः । व्यक्तिसमुच्चयोपि न व्याप्याऽनुपलम्भबाधितत्वात् नाव्याप्याऽव्याप्यवृत्तिजातीयताविरोधात् । किमेतत्तर्हि चित्रं रूपमिति । यथा शुक्लमिति शुक्लजातीयं तथा चित्रमिति चित्रजातीयं व्याप्यवृत्त्येव प्रत्येकं च न क्षितिव्यवस्थाहेतुः (२) भागासिद्धत्वात् । तथापि क्रमेण शुक्लाद्यनेकरूपसमवायलक्षणः समुच्चयः क्षिताविव । किं च शुक्लशुक्लतरशुक्लतमाद्यवान्तरानन्तजातिमद्रूपं क्षिताविव नान्यत्र । जलस्य हि शुक्लत्वेपि नावान्तरतारतम्यमस्ति पार्थिवद्रव्यसंयोगात्तु तथा प्रतिभासः । एवं तेजसोपि शुक्लभास्वरैकस्वभावत्वे (३) स्वाभाविकविशेषाभावः । ये पुनराहुः । शुक्लत्वादिकमेव सामान्यं नास्ति कुतस्तदवान्तरतारतम्यमिति । एकैका एव हि शुक्लारुणादिरूपव्यक्तयो नित्या अपि अनित्याभिर्द्रव्यव्यक्तिभिर्व्यज्यन्ते । तारतम्यं त्वमूषामाश्रयमिश्रतया यथायथा हि धवले कृष्णद्रव्यानुप्रवेशस्तथा-

---

(१) पूर्वरूपपरावृत्तौ—पा० ३ पु० ॥

(२) क्षितिव्यवच्छेदहेतुः—पा० २ । ३ पु० ॥

(३) शुक्लभास्वरैकस्वभावात्—पा ३ पु० ॥

तथा तारतम्यावभास इति तदयुक्तम् (१)। तेषामाश्रयस्थिताववपि पावकसंयोगात् पूर्वरूपनिवृत्तिरुत्तररूपोत्पादश्च न स्यात्। अनेकव्यक्तिसमवेतस्य निरतिशयस्य नित्यस्य सामान्यादन्यत्वं च नोपपद्यते। अस्तु तर्हि शुक्लत्वादिकं सामान्य(२)मेवेति चेत्। न। गोत्वादिना परापरभावानुपपत्तौ जातिसंकरप्रसङ्गात्। रसः षड्विधो मधुरादिरिति। अस्यापि व्याप्तिर्मध्वादिषु गन्धवत्पाकजरूपेणानुमानात्। अत्राप्यवान्तरानेकसामान्यविशेषवान् रसः पृथिव्यामेवेति वाक्यार्थः। अपामव्यक्तमधुर एव हि रसः स्वभावतः। अवान्तरभेदास्तु नारिकेलादिजलगताः पार्थिवद्रव्योपाधिकाः। तेन गन्धवती पृथिवी अवान्तरानेकसामान्यविशेषवद्रूपवती अवान्तरानेकसामान्यविशेषवद्रसवती चेति लक्षणार्थः। स्यादेतत्। यथा रूपवत्त्वाविशेषेपि त्रयाणामनेकविधरूपवती पृथवी। स्वच्छधवलरूपवज्जलम्। शुक्लभास्वररूपवत्तेजस्तथा गन्धावान्तरप्रकारभेदमाश्रित्य द्रव्यभेदः स्यादित्यत आह। गन्धो द्विविधः सुरभिरसुरभिश्चेति। चितावेवेत्यनुवर्तते न द्रव्यान्तरे पाकजः खल्वयमेकस्मिन्नेव द्रव्ये कालभेदेन वर्तमानः प्रकारभेदवानपि न द्रव्यान्तरव्यवस्था(३) हेतुरिति भावः। स्पर्शोऽस्याः पाकजो विलक्षण इत्याह। स्पर्श इति। यद्यपि नभस्वतोऽनुष्णाशीतस्पर्श उक्तस्तथापि न पाकजः पाकजस्पर्शवती पृथिवीति लक्षणार्थः। अत्र हि स्पर्शवतीत्युच्यमाने जलादावतिव्याप्तिः स्यात्। पाकजवती-

(१) यत्तदसत्—पा० ३ पु० ॥

(२) शुक्लादिकं द्रव्यवृत्ति सामान्य—पा० १ पु० ॥

(३) द्रव्यभेदव्यवस्था—पा० २ पु० ॥

त्युच्यमाने तेजसा पाकजद्रवत्ववतातिव्याप्तिः । अतः पाकजस्पर्शवती । अत्र च गन्धरूपरसानां पाकजत्वं सदपि स्फुटत्वान्नोक्तम् स्पर्शस्य तु तथात्वे विप्रतिपत्तिः न हि गन्धादिवद्विशेषतः स्पर्शः पाकस्यान्वयव्यतिरेकावनुविधत्ते । पार्थिवगुणत्वमात्रेण तत्परिकल्पने परिमाणादिष्वपि तथाकल्पनाप्रसङ्गात् तदेतद्विप्रतिपत्तिबीजमपनिनीषन्नेवोक्तवान् पाकजः स्पर्श इति । यदि हि पाकजो न स्यात् संख्यापरिमाणादिवदविशिष्टः स्यात् । तथा चाशीविषवृश्चिककीटादिदंशेषु शूकशिम्बिवृश्चिकपत्त्रिकादिषु (१) संस्पृष्टेषु दृष्टो दुःखविशेषो नोपपद्येत । मणिमूलादिविशेषेषु स्पृष्टेषु तदुपशमो न स्यात् । गवादिचाण्डालादिस्पर्शविधिनिषेधौ च न स्याताम् । न च द्रव्यमात्रे तावुपपद्येते (२) । दर्शनस्पर्शनघ्राणास्वादनभेदेन मातङ्गमदिरादिषु प्रायश्चित्तभेदानुपपत्तिप्रसङ्गात् । तस्मात्पार्थिवस्पर्शोऽपि पाकजः पार्थिवविशेषगुणत्वाद् गन्धवदित्यवधेयम् (३) । ये तु मन्यन्ते पृथिव्यां स्पर्शो नास्त्येव औष्ण्यशैत्ये विहाय स्पर्शान्तरस्यानुपलम्भबाधितत्वात् । शैत्यमेव हि तेजःस्पर्शेनाभिभूतमौष्ण्यं चोदकस्पर्शेनाभिभूतमनुष्णाशीतत्वेनानुभूयत इति तान् प्रत्याह । अनुष्णाशीतत्वे सतीति । बलवत्सजातीयग्रहणकृतमग्रहणं खल्वभिभवः । तथा चाभिभावकमन्यतरद्वश्यमुपलभ्येत न चैवं प्रकृते किन्तु शैत्योष्णत्वानुपलम्भेपि

---

(१) शूकशिम्बिः कपिकच्छुः । वृश्चिकपत्त्रिका वृश्चिकाली ॥

(२) द्रव्यमात्रेत्यैतावुपपद्येते—पा० २ पु० ॥

(३) इत्यवधातव्यम्—पा० ३ पु० ॥

**सा च द्विविधा । नित्या चानित्या च । परमाणुलक्षणा नित्या । कार्यलक्षणा त्वनित्या । सा**

---

तद्विलक्षणः स्पर्श उपलभ्यत एव । तथाविधे तमसि शुष्कपार्थिवस्येति (१) भावः ॥

सेयं(२) पृथिवी यद्यनित्यैव स्यात्तदावयवानवस्था स्यात् । एकस्यापि कस्यचिदवयवस्य निवृत्तौ निराश्रयं च कार्यमापद्येत । अथ नित्यैव निःप्रमाणिका तर्हि स्यात् । कार्यं च गन्धवदपि द्रव्यान्तरमापद्येतेत्यत आह । सा च (३) द्विविधा । नित्या चानित्या चेति । चकारौ मिथः समुच्चयार्थौ नियमनिराकरणपरौ । तेन नोक्तदोषावकाश इत्यभिप्रायः । का पुनर्नित्या महती हि मही महत्त्वादेव कार्यत्वादनित्या । अणुपरिमाणा तु नोपलभ्यत एवेत्यत आह । परमाणुलक्षणा नित्येति । लक्षणं स्वभावः । कार्यमेवात्र प्रमाणं भविष्यतीत्यभिप्रायवता नेह प्रमाणान्तरमादर्शितं तथाहि स्थूलकार्यस्य लोष्टादेरवयवक्रियाविभागादिन्यायेन विभज्यमानस्याल्पतरतमादिभावाद्-

---

(१) तथाविधेऽप्यन्धे तमसि शुष्कपार्थिवद्रव्यत्वस्येति—पा० ३ पु० ॥

(२) नित्यानित्यभेदकथनस्यार्थान्तरत्वमपाकरोति । सेयमिति । अवयवानवस्थेति । यद्यप्यनवस्थामात्रं बीजाङ्कुरसाधारण्येन न दूषणं तथापि सर्वकार्यद्रव्यनाशात् प्रलयानन्तरं सृष्टिरिति व्यवस्थाविरह एवानवस्थेत्येके । द्व्यणुकावयवस्यानेकद्रव्यारब्धत्वे महत्त्वं स्यादित्यर्थ इत्यन्ये । एकस्येति । सर्गादौ सर्वानित्यद्रव्यनिवृत्तौ द्व्यणुकनिराश्रयतापत्तिरित्यर्थः । निःप्रमाणिकेति । नित्यपृथिव्या अनुपलम्भात् पृथिवीत्वस्य अनित्यपृथिवीवृत्तित्वेनैवोपलम्भादित्यर्थः । कि० प्र० व० ॥

(३) तु—पा० ३ पु० ॥

तो नात्मीयस्तं परमाणुमाचक्ष्महे । एष ह्यवयवावयविप्रसङ्गो न तावन्निरवधिरेव । अनन्तावयवारब्धत्वाविशेषेण (१) मेरुसर्षपादीनां परिमाणभेदानुपपत्तेः । न च कारणसंख्याया अविशेषेपि परिमाणप्रचयविशेषाद्विशेष इति युक्तम् । तयोरपि संख्याविशेषाभावे ऽनुपपत्तेः । नापि प्रलयावधिः कस्यचिद्द्रव्यस्य निरवयवत्वेन प्रलयानुपपत्तेः । द्रव्यस्यावयवविभागविनाशाभ्यां विना विनाशाभावात् । नापि विभागावधिः । तस्य विभज्यमानाश्रयतया तदभावे ऽनुपपत्तेः । न चैकाश्रय एव विभाग इति युक्तम् । किञ्चिद्धि कुतश्चिद्विभज्यते न तु तदेव तस्मात् । तस्मान्निरवयवावधिरयमवयवावयविप्रसङ्ग इति विज्ञायते । तर्कितमेतन्न तु प्रमितमिति (२) चेत् । अत्र कश्चिदाह । किमत्र प्रमाणगवेषणया त्रसरेणोः प्रत्यक्षप्रमाणसिद्धत्वात् । तस्य चावयवकल्पनायां प्रमाणाभावेन निरवयवत्वादिति (३) तदसत् । तस्य चाक्षुषद्रव्यत्वेन महत्त्वादनेकद्रव्यवत्त्वा(४)च्चेति । यदि हि द्रव्यस्य चाक्षुषता महत्त्वमन्तरेण

---

(१) अनन्तेति । नन्वनन्तावयवारब्धत्वाविशेषेपि कश्चित्तादृग्बहुतरावयवारब्धः कश्चित्तादृक्तदवयवापेक्षयाल्पावयवारब्ध इत्यवान्तरसंख्याभेदादेव परिमाणभेदः स्यात् । अत्राहुः सर्षपो यदि साक्षात्परम्परासाधारणमेर्वारम्भकान्यूनावयवारब्धः स्यादेतावत्पारिमाणाधिकपरिमाणः स्यात् । न ह्यवयवानां निविडत्वे प्येतावानपकर्षः सम्भवति । यद्वा मेरुपदं स्थूलपरं सर्षपपदं च द्व्यणुकपरं तेन यदि द्व्यणुकं सावयवारब्धं स्यान्महत् स्यादिति महत्त्वापत्तिरेव तुल्यपरिमाणत्वापत्तिः । यद्वा द्व्यणुकत्रसरेण्वोः सावयवावयवारब्धत्वेन तुल्यपरिमाणापादने तात्पर्यम् । कि० प्र० व० ॥

(२) न त्वनुमितमिति मूले, न प्रमाणमिति च टिप्पण्याम्—पा० ३ पु० ॥

(३) प्रमाणाभावान्निरवयवत्वमिति—पा० ३ पु० ॥

(४) अनेकद्रव्यत्वात्—पा० ३ पु० ॥

स्यात् । दूरदूरतरादौ न महत्परिमाणप्रकर्षमनुविदध्यात् । यदि च सानेकद्रव्यवत्तां नाद्रियेत महत्त्वमपि नाद्रियेत । तद्व्यावृत्तौ तस्यापि व्यावृत्तिस्तस्य तत्कारणत्वात् । अन्यथा तत्प्रकर्षं महत्त्वप्रकर्षो नानुविदध्यात् । तस्माद्विवादाध्यासित-त्रसरेणुर्महाननेकद्रव्यवांश्च । अस्मदादिचाक्षुषद्रव्यत्वाद् घटवदिति । अपर आह । अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यत्वात् महत्परिमाणतारतम्यवदिति । तदप्यसत् । परस्पराश्रयदोषप्रसङ्गात् (१)। यदि नासौ परमाणुः सन्तु तर्हि तदवयवा एव कार्यानुमिताः परमाणवः । न हि तेपि महान्तो रूपविशेषवतां महतां चाक्षुषत्वप्रसङ्गात् । तथा च तेषां च कार्यत्वे प्रमाणानवक्लृप्तौ तदवयवाननुमानात् । यद्यपि चाणुत्वान्निरवयवत्वाच्च तेषां महत्परिमाणारम्भे न कारणमहत्त्वप्रचयौ स्तः । तथापि बहुत्वसंख्यास्तीति सर्वं समञ्जसम् । न । उक्तोत्तरत्वात् । अवश्यं हि त्रसरेणोरवयवैरनेकद्रव्यैर्भवितव्यं तस्य महत्त्वात् कार्यमहत्त्वं प्रति चावयवगतस्यानेकद्रव्यत्वस्यापि कारणत्वात् । अन्यथा महत्त्वस्य तत्प्रकर्षानुविधानानुपपत्तेः । तस्मात् त्रसरेणोरवयवाः सावयवाः महद्द्रव्यारम्भकत्वात् तन्तुवत् । बहवश्च(२) ते परिमाणप्रचयानुपपत्तौ महदारम्भकत्वात् तुल्यपरिमाणप्रचयतन्त्वपेक्षयाधि-

---

(१) परस्परेति । परमाणुसिद्धौ महत्त्वविरुद्धाणुपरिमाणसिद्धिः । तत्सिद्धौ परमाणुसिद्धिरित्यर्थः। न च महत्त्वापकर्ष इत्थं व्यपदिश्यते तस्य त्रुटावेव विश्रामात् । कि० प्र० व० ॥

(२) बहवश्चेति । परिमाणारम्भकबहुत्ववन्तः परिमाणप्रचयाजन्यमहत्त्वपरिमाणाश्रयद्रव्यजनकत्वादित्यर्थः । कि० प्र० व० ॥

च स्थैर्याद्यवयवसन्निवेशविशिष्टाऽपरजातिबहुत्वोपेता शयनासनाद्यनेकोपकारकरी च ॥

---

कसंख्यतन्तुवत् । ते च विभज्यन्ते सावयवत्वाद् घटवत् । विपक्षे बाधकमुक्तम् । तदवयवानां त्ववयवकल्पनानवकाशः प्रमाणाभावाद् बाधकाच्च । द्रव्यारम्भकत्वमूर्तत्वादीनामनुकूलतर्काभावात् । अनवस्थाप्रसङ्गस्य च प्रतिकूलस्य स्फुटत्वादिति परमाणुसिद्धिः । तस्माद्यत्कार्यद्रव्यं तत्सावयवमिति समनियमसिद्धौ कार्यद्रव्यत्वेन सावयवत्वं प्रसाध्य यत एवावयवात् कार्यद्रव्यत्वं व्यावर्तते तं निरवयवं परमाणुमुपपादयिष्याम इत्यभिप्रायवानाह । कार्यलक्षणा त्विति । तुशब्दः परमाणोर्व्यवच्छिनत्ति किमत्र प्रमाणमत आह । सा चेति । येयमुक्तरूपा दृश्यते सा च प्रत्यक्षसिद्धेत्यर्थः । स्थैर्यं स्थिरता चिरकाला(१)-वस्थायित्वमिति यावत् । आदिग्रहणाद्विष्टम्भकत्वं जलादिव्यूहविरोधित्वं च । अवयवसन्निवेशास्तत्तत्सामान्यविशेषाभिव्यञ्जकसंस्थानविशेषाः । स्थैर्यादीनि चावयवसन्निवेशाश्च तैर्विशिष्टा । न ह्येतद् (२) द्रव्यान्तरे संभवति । जलादीनां यत्किञ्चित्स्पर्शवद्वेगवद्द्रव्योपनिपातमात्रेणैव भङ्गुरत्वात् । न च पार्थिववदम्भो द्रव्यान्तरं गच्छद्विष्टभ्नाति । पूर्वव्यूहं वा विरुणद्धि

---

(१) चिरकालेति । यद्यप्येतज्जलादावप्यस्ति तथापि निविडसंयोगविशेषवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वमभिप्रेतम् । विष्टम्भकत्वं स्वाभाविकगुरुत्वाश्रयद्रव्यान्तरगतिप्रतिबन्धकत्वम् । व्यूहविरोधित्वं च स्वाभाविकगुरुत्ववत्पतनप्रतिबन्धकत्वम् । कि० प्र० व० ॥

(२) न चैतत्—पा० ३ पु० ॥

**त्रिविधं चास्याः कार्यं शरीरेन्द्रियविषयसंज्ञ-**

---

न च पार्थिवद्रव्यवद् द्रव्यान्तरं तत्तज्जात्यभिव्यञ्जकसंस्थानभेदवदिति । यतस्तत्तत्संस्थानविशेषवती अत एवापरजातिबहुत्वोपेता । ननु सर्वस्य चेतनादन्यस्य परार्थत्वात् किमनया चेतनप्रयोजनं साध्यत इत्यत आह । शयनेति । शयनं शय्या आसनमवस्थितिः । आदिग्रहणाद् भ्रमणकृषिकर्मादि (१) चकारादभिघाताद्यनेकापकारकरी चेति ॥

तदिदं पारार्थ्यमस्याः (२) किं विषयतयैव नेत्युच्यते । किन्तु त्रैविध्येनेत्याह । त्रिविधं चेति । शरीरमिन्द्रियं विषय इति संज्ञा यस्य तदिदं तथोक्तम् । एतेन न शरीरत्वमिन्द्रियत्वं विषयत्वं वा जातिरस्ति । प्रथमद्वितीययोः पृथिवीत्वादिना पराऽपरभावानुपपत्तेः तृतीयेपि निःसामान्ययोरपि सामान्याभावयोर्विषयत्वात् । तस्माद्यदवच्छिन्ने (३) आत्मनि भोगस्तदन्त्यावयवि शरीरम् । शरीरसंयुक्तमतीन्द्रियं (४) साक्षात्प्रतीतिसाधनमिन्द्रियम् । प्रतीयमानतया भोगसाधनं विषय इति । त-

---

(१) गृहकरणकृषिकर्मादि—पा० ३ पु० ॥

(२) परार्थत्वमस्याः—पा० १ पु० ॥

(३) यदवच्छिन्न इति । पादे मे सुखं शिरसि मे वेदनेत्याद्यनुभवबलादात्मभिन्नेपि सुखस्यावच्छेद्यावच्छेदकभावः सम्बन्ध इत्यर्थः । न च मृतशरीरादावव्याप्तिः । आत्मविशेषगुणकारणमनःसंयोगवदन्त्यावयविमात्रवृत्तिजातिमत्त्वस्य विवक्षितत्वात् तत्रापि मनुष्यत्वादिजातिसत्त्वात् । कि० प्र० व० ॥

(४) शरीरसंयुक्तमिति । यद्यप्येतद्दिक्कालप्राणाद्यतिव्यापकं तथापि स्मृत्यजनकज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वम् । त्वगिन्द्रियस्य सर्वज्ञानाजनकत्वान्न तत्राव्याप्तिः । शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानहेतुमनःसंयोगाश्रयत्वं वा । प्रतीयमानतयेति । न चाग्रे वायोर्विषयत्वाभिधाने विरोधः

कम् । तत्र शरीरं द्विविधं योनिजमयोनिजं च । तत्रायोनिजमनपेक्ष्यशुक्रशोणितं देवर्षीणां शरी-

---

क्षणरूपोपाधिनिबन्धना एताः संज्ञा इति । चस्त्वर्थो वाय्वादिभ्यो भिनत्ति । वायोर्हि चतुर्विधं कार्यं नभःप्रभृतीनां चैकविधमेवेति । अनेकावान्तरप्रकारवच्छरीरारम्भिका पृथिव्येव न द्रव्यान्तरमित्यभिप्रायवाँस्तद्भेदं दर्शयति । शरीरं द्विविधं योनिजमयोनिजं चेति । ननु योनिजवन्नायोनिजमपि शरीरमुपलभामह इत्यत आह । तत्रेति । देवानामृषीणामपि (१) श्रूयते हि ब्रह्मणो मानसा मन्वादय इति । ननु कारणमतिपत्य (२) यदि कार्यं भवेत् कार्यमेव न स्यात् स्याच्च मृदादिव्यतिरेकेणापि घटादिरिति । न । शरीरत्वस्योष्मजक्रिमिमशकादिभिर्व्यभिचारात् । संस्थानविशेषवत्त्वस्य चासिद्धेः त्रिदशाः खल्वेतेऽनेकमन्वन्तरायुषोऽनिमिषचक्षुषो नभश्चारिणः कामगास्त्रिनयनचतुर्भुजादयः । अस्मदादयस्तु दशदशाः शतवर्षपरमायुषः परिभ्रमच्चक्षुषो भूचराः प्रतिहतगतयो द्विभुजनयनाः किञ्चित् संस्थानसाम्येपि (३) गोगवयादिवज्जातिभेदोपपत्तेः । न

---

साक्षात्क्रियमाणत्वस्याविवक्षितत्वात् । वायवीयस्पर्शस्य विषयत्वात्तदाधारत्वेन वायोरपि विषयत्वोपचाराद्वा । शरीरादेश्च विषयत्वेप्यज्ञायमानस्यापि भोगसाधनत्वात् पृथगुपादानं नायं विभागः किन्तु पृथिवीजातीयस्य येन रूपेण पारार्थ्यं तद्रूपोपदर्शनमित्यप्याहुः । कि० प्र० व० ॥

(१) देवानामृषीणामिति—पा० १ पु० । देवानामृषीणां चेति ३ पु० ॥

(२) कारणं परित्यज्य—पा० १ । २ पु० ॥ कारणमिति । शरीरं प्रति शुक्रशोणितसन्निपातस्य कारणत्वात्तमतिपत्य शरीरं न स्यादित्यर्थः । कि० प्र० व० ॥

(३) किञ्चिदवयवसंस्थान—पा० २ पु० ॥

रं धर्मविशेषसहितेभ्यो ऽणुभ्यो जायते। क्षुद्रजन्तूनां यातनाशरीराण्यधर्मविशेषसहितेभ्यो ऽणु-

---

च (१) संस्थानमपि योनिजत्वे नियामकं गोगजोरगादीनां(२) तदभावेपि योनिजत्वात्। तस्मात्सर्वेषां स्वकर्मनिबन्धनो भोगः तच्च तन्नान्तरीयकतया जन्मायुषी आक्षिपति। तत्र (३) येन कर्मणा गर्भवासादिदुःखमपि भोजयितव्यमस्ति तेन योनिजमुत्पाद्यते तदन्येन त्वन्यथेति युक्तमुत्पश्यामः। तदेतदाह। धर्मविशेषसहितेभ्यो ऽणुभ्य इति। अणुभ्य इति मूलकारणनिर्देशोयं न त्वणुभिरेवाहत्य शरीरमारभ्यते तदेतदग्रे व्यक्तीकरिष्यति द्वयणुकादिप्रक्रमेणेति। क्षुद्रजन्तूनां मशकादीनां यातनाशरीराणि यातना नरकपीडा तस्यै शरीराणीति (४) नारकिणामिति शेषः। क्षुद्रजन्तूनां शरीराणीति संस्थानिसंस्थानभेदविवक्षया भोक्तृभोगायतनभेदविवक्षया वा षष्ठी। अधर्मविशेषः प्रकृष्टो ऽधर्मस्तत्सहितेभ्यः। न हि योनिजं शरीरमाकल्पमयःकुम्भीपाकक्रकचदारणादिदुःखसहनक्षमं नापि नरकयातनासु योनिस्पर्शसुखमानुषङ्गिकमपि श्रूयते।

---

(१) न वा संस्थानविशेषे योनिः कारणमपि तु कर्मविशेष एवेत्याह। न चेति। कि० प्र० व० ॥

(२) मनुष्यगोगजभुजगादीनां—पा० २। ३ पु० ॥

(३) क्व तर्हि शरीरे योनिः कारणमित्यत आह। तत्रेति। अयोनिजदेवादिशरीरे चागमः प्रमाणम्। योनिं विना न शरीरमित्यत्र चागमे योनिपदं कारणमात्रपरं मनुष्यदेहपरं वा चैत्रस्तदीययोनिजशरीरान्यपार्थिवशरीरवान् शरीरित्वान्मैत्रवदित्यनुमानमप्याहुः। कि० प्र० व० ॥

(४) यातनाशरीराणीत्यत्र—इत्यधिकं ३ पु० ॥

भ्यो जायन्ते । शुक्रशोणितसन्निपातजं योनिजं तत्तु द्विविधं जरायुजमण्डजं च । मानुषपशुमृ-

---

न च नरका एव न सन्ति (१) । स्वर्गेऽप्यनाश्वासप्रसङ्गादिति । इह योनिशब्देन यदि कारणमात्रमुच्यते द्विविधत्वं (२) नोपपद्यते इत्यत आह । शुक्रेति । सन्निपातः परस्परमेलनं तज्जं योनिजम् । पशवो ग्राम्याश्चतुष्पदा आरण्या मृगाः । गर्भवेष्टनचर्मपुटकं जरायुः । पक्षिणो विहङ्गमाः । सरीसृपा परितः प्रसर्पणशीलाः सर्पकीटमत्स्यादयः । यद्यपि चोद्भिदोऽपि वृक्षादयः शरीरभेदतया अत्रैव व्याख्यातुमुचिताः तथाप्यतिमन्दान्तःसंज्ञतया लौकिकापेक्षया सुखदुःखभोक्त्रधिष्ठानत्व(३)ममीषामविवक्षन् प्रायेण जङ्गमोपकारकतया तदधीनतया च विषयतां विवक्षन् तेष्वेवान्तर्भाव्य व्याख्यास्यन्ते । कयाचिद्विवक्षया ह्यन्तर्भूतमपि पृथग् व्याख्यायते । यथा अयथार्थत्वेन विपर्ययत्वे सति स्वप्नसंशयज्ञाने लोकप्रसिद्धिमाश्रित्य कयाचिद्विवक्षया पृथग्भूतमप्यन्तर्भाव्य व्युत्पाद्यते यथा प्रमितेरन्यत्वेनाविद्यापि यथार्थत्वेन स्मृतिर्विद्यायां कयाचिद्विवक्षया सदपि किञ्चिद्रूपमनभिधाय रूपान्तरमुच्यते । यथात्रैव रूपरसगन्धानां पाकजत्वमनुक्त्वा सौरभाद्युक्तम् । शरीरेन्द्रिययोः द्व्यणुकादिप्रक्रममुपेक्ष्य योनिजत्वाद्युक्तमित्याचार्यशैलीयम् । कथं पुनरेतत्

---

(१) नरकाण्येव न सन्ति—पा० १ पु० ॥
(२) कारणत्वमात्रमुच्यते तद्द्वैविध्यं—पा० ३ पु० ॥
(३) भोगाधिष्ठानत्व—पा० ३ पु० ॥

इत्थं वृक्षादयः प्रतिनियतभोक्त्रधिष्ठिताः (१) जीवनमरणस्वप्नजागरणरोगभेषजप्रयोगबीजसजातीयानुबन्धा (२)नुकूलोपगमप्रतिकूलापगमादिभ्यः प्रसिद्धशरीरवत्। न चैते संदिग्धासिद्धाः आध्यात्मिकवायुसम्बन्धात् सोपि मूले निषिक्तानामपां दोहदस्य च पार्थिवस्य धातोरभ्यादानात्। तदपि वृद्धिभग्नक्षतसंरोहणाभ्यामिति। अन्यथा कारणं विना कार्यानुत्पत्तिप्रसङ्गे सर्वमिदमालूनं विशीर्णमापद्येतेति संक्षेपः। आगमश्चा-(३)त्रार्थे बहुतरो ऽनुसन्धेय(४) इति। कथं पुनर्मानुषादिशरीरं पार्थिवं गन्धक्लेद(५)पाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकमि-

---

(१) प्रतिनियतेति । भोगजनकमनःसंयोगवन्त इत्यर्थः । आत्मविशेषगुणजनकमनःसंयोगो जीवनम्। ज्ञानजनकमनःसंयोगाजनकस्पन्दजन्यविभागजन्यज्ञानजनकमनःसंयोगध्वंसो मरणम्। स्वप्नवहनाडीमनःसंयोगजन्यं ज्ञानं स्वप्नः। तद्संयुक्तमनःसंयोगजन्यज्ञानं जागरणम्। रोगो धातुवैषम्यम्। चिकित्सा भेषजप्रयोगः। कि० प्र० व०। रोगचिकित्सा—इति प्रकाशसम्मतः पाठः॥

(२) सजातीयानुबन्धः सजातीयस्नेहः स च ज्ञानरूपतया यद्यपि न शरीरधर्मस्तथापि तेन तद्व्यञ्जकचेष्टोपलक्ष्यते। कि० प्र० व०॥

(३) ननु वृद्ध्यादेर्गिरिपाषाणेन व्यभिचारोऽभ्यादानहेतुवायोः प्राणत्वे मानाभावश्चेत्यत आह। आगमश्चेति॥

नर्मदातीरसंजाताः सरलार्जुनपादपाः।
नर्मदातोयसंस्पर्शात्ते यान्ति परमां गतिम्॥
श्मशाने जायते वृक्षः काक*गृध्रोपसेवितः॥

इत्याद्यागम इत्यर्थः। न च तस्याधिकानिष्टपरत्वं बाधकं विना मुख्यान्यपरत्वाभावादिति भावः। कि० प्र० व०॥

(४) बहुतरः प्रतिसन्धेय इति—पा० ३ पु०॥

(५) क्लेदः क्षरणम्। पाक औष्ण्यम्। व्यूहः क्रिया। अवकाशो मुखादावन्नादिगत्यप्रतिबन्धः। कि० प्र० व०॥

---

* कङ्कगृध्रोपसेवित इति वा पाठः॥

ति हि प्रसिद्धिः। सत्यं सा पञ्चानां कारणत्वमात्रेण न तु समवायितया। अथ तथैव किं न स्यात्। इत्थम्। द्व्यणुकादिप्रक्रमेण तावदयमारम्भ इति वक्ष्यते। तत्र यदि विजातीयपरमाणुभ्यामेकमारभ्येत अगन्धमरसमित्याद्यापद्येत। एकस्य गन्धादेरनारम्भकत्वात्। आरम्भकत्वे वा सततोत्पत्तिप्रसङ्गादपेक्षणीयाभावात्। अथानेकस्यापि कुत एतन्न प्रसज्यते। समवायिकारणस्यापेक्षणीयत्वात्। न ह्यनपेक्षितसमवायिकारणमसमवायिकारणमारभत इति चेत्। तदेतदेकत्रापि तुल्यम्। न च तन्त्वादिगतानां रूपादीनामनेकेषामेवारम्भकत्वदर्शनादन्यत्रापि तथा कल्पयितुं युक्तम्। कारणानां सजातीयतया तत्र तथोपपत्तेः। विजातीयानामारम्भकत्वे त्वन्यथापि भविष्यति। विपक्षे बाधकाभावात्। तेनोष्णं जलं सुरभिः समीरण इत्याद्युपपद्यते। न। एकेन गुणेन गुणारम्भे जातिसंकरप्रसङ्गात्। तथाहि। गन्धवत्त्वादेव तद्द्व्यणुकं पृथिवीजातीयं सांसिद्धिकद्रवत्वाच्छीतत्वाच्च जलं स्यात्। एवं शुक्लभास्वररूपवत्त्वादुष्णत्वात्तेजः स्यात्। अपाकजानुष्णाशीतस्पर्शवत्त्वाद्वायुः स्यात्। तदयं प्रमाणार्थः। गन्धवन्ति द्व्यणुकानि गन्धवद्भिरेव परमाणुभिरारभ्यन्ते कार्यत्वे सति गन्धवत्त्वात् पार्थिवपरमाणुद्वयारब्धद्व्यणुकवत्। विवादाध्यासिताः परमाणवो गन्धवन्त्येव द्व्यणुकान्यारभन्ते गन्धवत्त्वात्। ये पुनर्निर्गन्धान्यारभन्ते न ते गन्धवन्तः। यथा निर्गन्धजलाद्यारम्भकाः परमाणवः। न च न ते गन्धवन्तः तस्माद्गन्धवन्त्येव द्व्यणुकान्यारभन्ते। न च दृष्टान्तासिद्धिरनियमारम्भे सजातीयाभ्या-

गाणां जरायुजं पक्षिसरीसृपाणामण्डजम् । इ-
न्द्रियं गन्धव्यञ्जकं सर्वप्राणिनां जलाद्यनभिभूतैः

---

मव्यारम्भाभ्युपगमात् । अन्यथा निर्गन्धस्य जलादेर्नीरसस्या-नलादेर्नीरूपस्य च पवनस्यानुपलम्भप्रसङ्गः । एवं सांसिद्धिक-द्रवत्ववन्ति द्व्यणुकानि तथाभूतैरेव परमाणुभिरारभ्यन्ते(१) । कार्यत्वे सति सांसिद्धिकद्रवत्ववत्त्वात् आप्यपरमाणुद्वयार-ब्धद्व्यणुकवत् । जलपरमाणवः शीतान्येव द्व्यणुकान्यारभन्ते शीतत्वात् । ये पुनरशीतान्यारभन्ते ते न शीताः । यथा अशी-ततेजोद्व्यणुकारम्भका इत्यादि स्वयमूहनीयम् । तस्मात् सजा-तीयानामेवारम्भकत्वं न विजातीयानामिति स्थितम् । तथा-पि शरीरस्य कथं पार्थिवत्वनिश्चयः । इत्थम् । क्लेदादीनां परा-वृत्तावपि शरीरस्य प्रत्यभिज्ञानात् (२) । गन्धस्य च यावद्द्रव्य-भावित्वाद् घटवत् । यथाहि घटादौ पार्थिवे क्लेदशोषदशाया-मपि (३) गन्धोऽनुवर्तते । शैत्यादयस्तु कुसुमादिवासितजलादि-गन्धवन्निवर्तन्ते तथा शरीरेपीति । तद्वत्पार्थिवत्वमवधार्यत इति । इन्द्रियमाह । इन्द्रियमिति । गन्धव्यञ्जकं यदिन्द्रियं तत्पा-र्थिवं घ्राणमिति व्यवहर्तव्यं रूपाद्यव्यञ्जकत्वे सति गन्धस्य व्य-

---

(१) परमाणुभिरारभ्यन्ते—पा० ३ पु० ॥

(२) प्रत्यभिज्ञानादिति मूलम् । न च भुक्ते परिमाणान्यत्वादन्यदेव तच्छरी-रमिति तत्रापि प्रत्यभिज्ञानमनुपपन्नमिति वाच्यम् । जात्यभेदावगाहमानेनापि तदुपपत्तेः । कि० प्र० व्या० भ० ॥

(३) क्लेदशोषदशयोरपि—पा० ३ पु० ॥

ञ्जकत्वादित्यर्थः(१)। गन्धोपलब्ध्या (२) तावत्करणमात्रं सिद्धम्। क्रियायाः करणनिष्पाद्यत्वनियमात्। तच्च प्राप्यकारि जनकत्वे सति तदप्राप्तावजनकत्वात्। द्रव्यं च संयोगाश्रयत्वात् पार्थिवं च गन्धवत्त्वात् गन्धवत्त्वं च रूपाद्यव्यञ्जकत्वे सति गन्धस्य व्यञ्जकत्वात् कुङ्कुमगन्धाभिव्यञ्जकतैलवत्। सर्वप्राणिनामिति। प्राणिभेदेनेन्द्रियप्रकृतिवैचित्र्यं निवारयति। यदि गन्धाभिव्यक्तौ शक्तिरस्ति (३) पृथिव्याः किं न सर्वैव पृथि-

(१) गन्धस्य व्यञ्जकं यदित्यर्थः—पा० ३ पु० ॥

(२) पार्थिवे घ्राणे मानमाह। गन्धोपलब्ध्येत्यादि। गन्धोपलब्धिः * रसाद्युपलब्धिजनकशरीरसंयोगिकरणजन्या तदन्यसाक्षात्कारत्वात् रूपप्रत्यक्षवत्। न च दृष्टान्तासिद्धिः अन्धकारस्थं गोलकं † घटसाक्षात्कारकारणघटसंयोगाधिकरणतेजोवृत्तिघटसाक्षात्कारकारणसंयोगाधिकरणं ‡ रूपवत्त्वे सति घटसाक्षात्कारकारणत्वाद् घटवदिति संयोगिसंयोगिव्यावृत्तकरणसिद्धेः। तत्पार्थिवं रसाद्यव्यञ्जकत्वे सति गन्धव्यञ्जकद्रव्यत्वात् चम्पकाद्यधिवासाद्यधिकरणविततद्रव्यवत् कुङ्कुमगन्धाभिव्यञ्जककुक्कुटोच्चारो न दृष्टान्तः तस्य साक्षात्कारविषयत्वेन रूपादिव्यञ्जकत्वात्। अत एव नवशरावगन्धव्यञ्जकजले न व्यभिचारः तेन स्वीयरसस्याप्यभिव्यक्तेः। यद्वा गन्धसाक्षात्कारासाधारणकारणतावच्छेदकद्रव्यत्वव्याप्यव्याप्यजातिमत्त्वादिति हेतुः जलस्य गन्धव्यञ्जकत्वं जलत्वेनैव न तु तद्व्याप्यजात्यन्तरेण। कि० प्र० व० ॥

(३) गन्धाभिव्यक्तिसामर्थ्यमस्ति—पा० ३ पु० ॥

* गन्धोपलब्धिरिति। लौकिकगन्धसाक्षात्कार इत्यर्थः। साध्ये आदिपदं स्पर्शाव्यञ्जकत्वगर्भसाध्यान्तरसूचनायान्यथा व्यर्थविशेषणतापत्तेः। रूपाव्यञ्जकत्वगर्भं च न साध्यं तैलदृष्टान्तानुपपत्तेः। परकीयत्वविशेषणे च गौरवात् कि० प्र० व्या० भ० ॥

† मानुषेति च गोलकविशेषणमतो न मार्जारनयनस्थिततेजसार्थान्तरम्। कि० प्र० व्या० भ० ॥

‡ घटेति। घटसाक्षात्कारकारणं घटसंयोगस्तदधिकरणं यत्तेजस्तद्वृत्तिर्यो घटसाक्षात्कारकारणं संयोगस्तदधिकरणमित्यर्थः। कि० प्र० व्या० भ० ॥

पार्थिवावयवैरारब्धं घ्राणम् । विषयस्तु द्व्यणुकादि-प्रक्रमेणारब्धस्त्रिविधः । मृत्पाषाणस्थावरलक्षणः । तत्र भूप्रदेशाः प्राकारेष्टिकादयो मृद्विकाराः । पाषाणा उपलमणिवज्रादयः । स्थावरा: वृक्षतृणौषधिगुल्मलतावतानवनस्पतय इति ॥

---

व्येवमित्यत आह । जलाद्यनभिभूतैरिति । अत एव श्लेष्माद्यभिभवे सति गन्धो न गृह्यत इति भावः । घ्राणमिति । लोकप्रसिद्धमित्यर्थः । तृतीयं च पृथिवीकार्यमाह । विषयस्त्विति । यद्यपि शरीरमपि विषयः तथापि शरीरत्वेनैव तदसाधारणं पुरुषार्थसाधनमिति दर्शयितुं तदेव रूपं तस्य दर्शितम् । वक्ष्यमाणे तु विषयत्वमेवासाधारणमतस्तदुच्यते । द्व्यणुकादिप्रक्रमेणेति । द्व्यणुकमादिर्यस्य प्रक्रमस्य तथोक्तस्तेनारब्धो निष्पादितः । मृत्त्वं मृत्तिकात्वम् । पाषाणत्वं प्रस्तरत्वम् । स्थावरत्वं उद्भित्त्वं सामान्यविशेषाः । तत् मृत्तिकात्वं केषु वर्तत इत्यत आह । तत्रेति । मृद्विकारा मृत्तिकारूपा विकाराः (१) । के पाषाणा इत्यत आह । उपलेति । उपलाः ग्रावाणः । मणयो माणिक्यादयः । वज्रं हीरकम् । आदिग्रहणाद्गैरिकादयः । स्थावरा इति । वृक्षाः पुष्पफलवन्तः स्कन्धशाखिनः । तृणान्युलपादीनि । ओषधयः फलपाकान्ताः यवादयः (२) । गुल्मा राटाः ।

---

(१) मृत्तिकाकारा विकारा मृद्विकाराः—पा० ३ पु० ॥

(२) कदल्यादयश्चेत्यधिकं २ पु० ॥

लताः कुष्माण्डीप्रभृतयः (१)। अवतानाः केतक्यादयः। वनस्पतयो विना पुष्पं फलिनः। अत्र च शरीरग्रहणेनैव तदवयवा मांसास्थ्यादयस्तद्विकाराश्च क्षीरघृतादयः संगृहीताः। इन्द्रियग्रहणेनैव तदवयवाः विषयग्रहणेनैव द्व्यणुकादयः। पाषाणग्रहणेनैव हरितालादयः। स्थावरग्रहणेनैव पत्रपुष्पादयः। वृक्षग्रहणेनैव काष्ठादयः। तृणग्रहणेनैव तालादयः। ओषधिग्रहणेनैव तद्विकारास्तन्दुलतैलादय इति। ननु कोयं द्व्यणुकादिप्रक्रमो द्व्यणुक एव मानाभावात् (२)। त्रसरेणवस्तावत्प्रत्यक्षसिद्धाः। ते च चाक्षुषद्रव्यत्वा(३)देव महान्तो द्रव्यस्य (४) चाक्षुषतां प्रति रूपविशेषवन्महत्त्वस्यापि कारणत्वात्। अन्यथा दूरदूरतरादौ तत्प्रकर्षानुविधानानुपपत्तेः महत्त्वे सति रूपवत्त्वात् कर्मवत्त्वाच्च ते सावयवाः कार्याश्च। अन्यथावयवगतसंख्याद्यनुपपत्तौ महत्त्वानुपपत्तेः (५)। नित्यत्वे प्रकृष्टकाष्ठाप्राप्ताल्पभावस्य महत्त्वविरोधात्। न च त्रसरेण्ववयवा अपि सावयवास्तदवयवकल्पनायां प्रमाणाभावात्। नहि त्रसरेणुवत् तेपि महान्तो रूपविशेषवतां महतां चाक्षुषत्वप्रसंगात्। यद्यपि च तेपि महत्त्वव्यावृत्तेरणुपरिमाणाः निरवयवत्वाच्च प्रचय(६)वञ्चितास्तथापि बहुत्वान्महान्ति कार्यद्रव्याण्या(७)रप्स्य-

---

(१) कुश्माण्डीप्रभृतयः—पा० ३ पु० ॥
(२) प्रमाणाभावात्—पा० ३ पु० ॥
(३) चाक्षुषद्रव्यतया—पा० ३ पु० ॥
(४) रूपवद्द्रव्यस्य—पा० ३ पु० ॥
(५) अवयविमहत्त्वानुपपत्तेः—पा० ३ पु० ॥
(६) प्रशिथिलप्रचय—पा० ३ पु० ॥
(७) बहुत्वसंख्यास्तीति महत्कार्यद्रव्याणि—पा० ३ पु० ॥

म्ते तथा च परमाणव एव त्रसरेण्ववयवा इति तत्कुतो द्व्यणुकम् । उच्यते । महतः कार्यद्रव्यस्य कार्यद्रव्यारभ्यत्वनियमात् द्व्यणुकसिद्धिः । अन्यथा परमाणुभिरेव बहुत्वसंख्योपेतैर्महद्द्रव्यारम्भे गोघटादेरपि तैरेवारम्भादान्तरालिकाल्पाल्पतरादिकार्योपलम्भविरोधात् (१) । तथा च (२) त्र्यणुकवदनुपलब्धितरेखोपरेखादिर्घटादिरपि स्यात् । तथा च संस्थानभेदानुपलम्भे तदभिव्यङ्ग्यं घटत्वादिकमपि नोपलभ्येत । न चारम्भाप्यारभन्त इति तदुपलम्भोपपत्तिर्मूर्तानां समानदेशत्वानुपपत्तिः । न्यूनाधिकदेशतया समानदेशत्वेप्यविरोध इत्यपि नास्ति । न्यूनदेशतया हि यत्र नास्ति तत्राधिकदेशस्य स्थितिं माविरौत्सीत् । स्वदेशेतु विरुन्ध्यादेव । तत्राप्यविरोधे मूर्तत्वं जह्यात् । अवयवरूपादिवत् संयोगिन्यपि वा देशे न्यूनाधिकदेशतया समानदेशत्वाविरोधः स्यात् । न चोदञ्चनावच्छिन्ने (३) देशे घटादिः संयोगेन वर्तते । कथं तर्हि चरमादितन्त्वपकर्षणे अल्पतरतमादिपटोपलम्भ इति चेत् प्रतिबन्धकविगमेऽवस्थितसंयोगिभ्यः खण्डपटोत्पत्तेः । आद्यादितन्त्वपकर्षणे त्वयाप्येषै-

---

(१) आन्तरालिकेति । घटे नष्टे कपालशर्कराचूर्णादिकार्यं नोपलभ्येतेत्यर्थः । कि० प्र० व० ॥

(२) तथाहि—पा० ३ पु० ॥

(३) न चोदञ्चनादिच्छिन्ने—पा० ३ पु० ॥ उदञ्चनं शरावः* । कि० प्र० व० ॥

---

* यद्यपि घटशरावोदञ्चनादिभेदेनेति चतुर्थटीकादर्शनादुदञ्चनशरावयोर्भेदस्तथापि शरावपदेनात्र शराव उक्तः । टीकायामपि सामान्यविशेषभेदेनैव पौनरुक्त्यम् । यद्वोदञ्चनं शराव एव टीकायां तूदञ्चनपदेन ऊर्द्धमञ्चनमस्येति व्युत्पत्त्या ऊर्ध्वगमनशीलं वस्त्वन्तरमेवोक्तम् । कि० प्र० व्या० म० ॥

व रीतिरनुमन्तव्या । अन्यथा (१) द्वितन्तुकादिपटपर्यन्तसमस्तकार्यविनाशे खण्डपटानुत्पत्तौ च तन्त्वतिरिक्तं न किञ्चिदुपलभ्येत । नन्वेषविचारो द्व्यणुकेष्वपि समानस्तैरपि हि यदि बहुभिः कार्यद्रव्यमारभ्यते घटादयोप्यारभ्येरन् तथा चान्तरालिककार्यपरम्परानुपपत्तौ तदनुपलम्भप्रसंगः । अथ तैस्त्रसरेणुरेवारभ्यत इति नियमः । परमाणुभिरपि स एवारभ्यत इति तुल्यम् । हातव्यो ऽयं पक्षो विशेषो वा वक्तव्यः । उच्यते । यथा ह्यवयवावयविप्रसंगः परमाणुषु विश्राम्यति । तथायमवयवसंख्यापकर्षः क्वचिद्विश्राम्येत् । न च त्रित्वमपकर्षकाष्ठा द्वित्वैकत्वयोः संभवात् । तत्रैकमनारम्भकमवयवसंयोगानुपपत्तावसमवायिकारणाभावात् । अनेकसंख्याभावे वावयविनो ऽवयवापेक्षयाधिकपरिमाणानुपपत्तेः । अवयवापेक्षया चावयविनो ऽधिकपरिमाणत्वनियमात् । एकस्य चावयवस्य विभागानुपपत्तौ तत्कार्यस्य विनाशासम्भवे नित्यत्वप्रसङ्गादिति । तथा च द्वित्वमपकर्षपर्यन्तस्तदादिरयमारम्भः । तच्च द्वाभ्यां परमाणुभ्यामारब्धं कार्यं न स्यात् । तथात्वे तस्य कारणाभावात् । तदपि च द्व्यणुकं यदि नारभेत । यदि हि द्वित्वसंख्यायुक्तमेवारभेत उभयथापि तदुत्पादनवैयर्थ्यं स्यात् । तस्मात् तेन महद्द्रव्यमारभ्यमाणं बहुत्वसंख्यायोगिनैवेति नियमः । न च द्व्यणुकवत्परमाणवोपि बहुत्वसंख्यामाश्रित्य महत्कार्यमारप्स्यन्त इति युक्तम् । अनियमारम्भस्य (२) निषिद्धत्वात् । कारणकारणस्य

(१) तथाहि—पा० २ पु० ॥

(२) अनियमारम्भस्येति । त्रसरेणोः कस्यचिद्द्व्यणुकेन कस्यचिच्च परमाणुभिरारम्भे नियतहेतुत्वं न स्यादित्यर्थः । नन्वणुपरिमाणाश्रयत्वेन कारणानुग-

**अप्त्वाभिसम्बन्धादापः । रूपरसस्पर्शद्रवत्व-**

---

च कार्यकार्यजातीयानारम्भकत्वात् । नहि तन्तवः पटमारभन्ते तत्कारणं चांशव इति । तस्माद् (१) विवादाध्यासितास्त्रसरेणवो न निरवयवद्रव्यारब्धाः सावयवद्रव्यारब्धा इति वा महत्त्वे सति कार्यत्वात् उभयवादिसिद्धद्व्यणुकारब्धत्रसरेणुवत् घटवद्वेति । एवं तर्हि द्व्यणुकमपि न निरवयवद्रव्यारब्धं सावयवद्रव्यारब्धं वा कार्यद्रव्यत्वात् त्रसरेणुवद् घटवद्वेति स्यात् न स्यादनवस्थाप्रतिहतत्वादिति द्व्यणुकादिप्रक्रमसिद्धिः पर्यवसिता पृथिवीति ॥

अथेदानीमपो निरूपयति । अप्त्वाभिसम्बन्धादिति । अप्त्वं नाम सामान्यविशेषः । तेनाभिसम्बन्धादित्यादि (२) पूर्ववद्व्याख्येयम् । तासां द्रव्यत्वसिद्धये गुणानाह रूपरसेत्यादि ।

---

मः स्यादित्यत आह । कारणकारणस्येति । त्र्यणुककारणद्व्यणुककारणस्य परमाणोः स्वकार्यद्व्यणुकस्य यत्कार्यजातीयं त्रसरेणुजातीयं तदारम्भकत्वं नास्तीत्यर्थः । यद्वा । आरम्भारम्भकवादनिषेधाभिप्रायक एवायं ग्रन्थः । कि० प्र० व० ॥

(१) तस्मादिति । ननु साधनावच्छिन्नसाध्यव्यापकं महावयवारभ्यत्वमुपाधिः । तथा त्रसरेणुर्नित्यद्रव्यारभ्यः द्रव्यारभ्यत्वे सति महदनारभ्यत्वात् । परमाणुगन्धवदिति प्रतिरोधः । अत्राहुः । अस्ति तावन्महत्त्वात्मकं कार्यं तत् प्रति कारणत्वं कार्यद्रव्यत्वेनैव गृहीतं न च महत्त्वविशेष एव तत्त्वेन जनकत्वं त्रसरेणौ व्यभिचारादित्यकारणककार्योत्पत्त्या विपक्षबाधकेन साधनस्य साध्यव्याप्यतया तदव्यापकत्वे नोपाधेः साध्याव्यापकत्वात् द्व्यणुकारब्धत्रसरेणावेव साध्याव्यापकत्वात् । यद्वा । त्रसरेणुर्न नित्यद्रव्यसमवेतः शब्दान्यत्वे सत्यस्मदादिबहिरिन्द्रियग्राह्यत्वाद् घटवत् न च प्रत्यक्षसमवेतत्वमुपाधिः अप्रत्यक्षव्यक्तिप्रत्यक्षगन्धादौ साध्याव्यापकत्वादित्यत्र तात्पर्यम् । कि० प्र० व० ॥

(२) तेनाभिमतसम्बन्धादित्यादि—पा० १ पु० ॥

स्नेहसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाप-रत्वगुरुत्वसंस्कारवत्यश्च । एते च पूर्ववत् सिद्धाः । शुक्लमधुरशीता एव रूपरसस्पर्शाः । स्नेहोम्भस्ये-

---

तत्र प्रमाणं सूचयति । एते चेति । पूर्ववदिति यथा पृथिव्यां सूत्रकारवचनाद् गन्धादयः सिद्धास्तथा अप्सु रूपादयः सिद्धा इत्यर्थः । तथा च सूत्रं रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाश्चेति । यथा च चाक्षुषवचनात् सप्त संख्यादयः पृथिव्यां तथा अप्स्वपि । यथा पतनोपदेशाद्गुरुत्वं पृथिव्यां तथा तोयेपि यथा चोत्तरकर्मवचनात् पृथिव्यां संस्कारस्तथा पायःस्वपीति । एवं गुणवत्त्वेन द्रव्यत्वे सिद्धे पृथिव्यादिभ्यो व्यवच्छेदहेतोरप्त्वस्य व्यवस्थाहेतून् गुणविशेषानाह । शुक्लमधुरशीता एव रूपरसस्पर्शा इति । सहस्रशो ऽग्निसंयोगेनाप्यपरावर्तमानमभास्वरशुक्लमेव रूपमप्सु न हि पार्थिवपटस्फटिकादौ वर्तमानं शुक्लमपि रूपमग्निसंयोगान्न परावर्तते अपरावृत्तमपि (१) वा तेजसि (२) भास्वरं तस्मादनेन विशेषेण रूपमप्त्वव्यवस्थाहेतुः एष च विशेषः (३) पृथिवीरूपस्य पाकजत्वप्रदर्शनेन तेजोरूपस्य भास्वरत्वख्यापनेन सूचितः । उक्तयुक्तेरेव जलादिरूपस्यापाकजत्वं पार्थिवा एव हि संसृष्टभागा(४)स्तत्र क्वाथेन पच्यन्ते । एतेन रसोपि व्याख्यातः । नहि पार्थिवे क्षीरशर्करादौ वर्तमा-

---

(१) अपरावर्तमानमपि—पा० २ पु० ॥

(२) तेजसो—पा० २ पु० ॥

(३) एष एव—पा० २ पु० ॥

(४) द्रव्यभागा—पा० २ पु० ॥

व । सांसिद्धिकं द्रवत्वं च । तास्तु पूर्ववद् द्विवि-

---

नमपि माधुर्यं पाकेन व्यावर्तते । इह तु सहस्रशः पच्यमानमपि माधुर्यमेव ईषत्स्वाभावं तु तत्तदपि तथैव । यत्पुनरम्बुधिसिन्धुभेदेन क्षारादिरपि रसः पाथस (१) उपलभ्यते स दशमूलकषायस्यैव पार्थिवद्रव्योपाधिकः कथमन्यथा तस्यैव घनपीतमुक्तस्य रसो मधुर एव । एवमपां स्पर्शोऽपि शीत एव । क्वचित्तु सन्नपि तेजःस्पर्शाभिभवान्नोपलभ्यते तदपगमे पुनरुपलब्धेरिति । तदेभिर्विशिष्टै रूपरसस्पर्शा अप्त्वव्यवस्थापका इत्युक्तम् । स्नेहस्तु स्वरूपत एवेत्याह । स्नेहोऽम्भस्येवेति । अत्र केचिदाहुः न स्नेहो जलधर्मस्तैलादिवज्जले ऽनुपलब्धेः नापि पृथिव्या विशेषगुणः सर्वपृथिव्यव्यापकत्वात् तस्मात् पार्थिवविशेषेषु घृततैलवसादिषूपलभ्यमानः सामान्यविशेषो ऽयं गव्यमाहिषादिषु दधित्ववदिति । तदसत् स्निग्धस्निग्धतरादिभेदेन सातिशयत्वात् न च गोमहिष्यादिषु गुणमनाश्रित्य तारतम्यमस्ति नहीषन्मधुरादिवदीषद्गौरतिशयेन गौरिति भवति तस्मादतिशयस्य गुणैकनिमित्तत्वात् सामान्यविशेषतया च स्नेहस्य सामान्ये ऽसम्भवाद् गुण एव स्नेहः किं च स्निग्धद्रव्यावयवपरम्पराया अपि स्निग्धत्वादापरमाणु स्नेहः स्यात् न च परमाणुषु पृथिवीत्वादेरन्या अपरा जातिरस्ति व्यवस्थापकाभावात् क्षीरत्वादिवद्भविष्यतीति चेत् न तस्यापि परमाणुष्वभावात् पाकजरूपरसस्पर्शविशेषव्यङ्ग्यं हि क्षीरत्वादि तथा च

---

(१) पयसि—पा० २ पु० ॥

पाकान्तरेण तन्निवृत्तौ क्षीरत्वादेर्निवृत्तिप्रसङ्गात्। न च सत्यां व्यक्तौ सामान्यनिवृत्तिरिष्यते न चाविवक्षितसत्ताकाः सम्भवमात्रेण तस्याभिव्यञ्जकाः सर्वपार्थिवपरमाणूनां क्षीरत्वापत्तौ तदारब्धसर्वकार्यस्य पृथिवीत्ववत् क्षीरत्वापत्तेः द्व्यणुकादौ क्षीरत्ववद् भविष्यतीति चेत् न तदारम्भकेषु परमाणुषु तद्व्यवस्थाहेतोः क्षीरत्ववद् गुणविशेषस्याभावात् भावे वा स एव स्नेहः न ह्यत्र रूपादयो (१) व्यवस्थाहेतवो नापि(२) तद्विशेषास्तेषां घृतत्वादिव्यवस्थापकत्वात् न च व्यवस्थाकारणं कारणसामान्यमस्ति तैलघृतवसानां बीजक्षीरमांसयोनित्वात्। अत एव नारिकेलस्नेहस्यापि (३) तैलत्वं रसादिसारूप्यादपि तु घृतव्यपदेशः तस्मात् परमाणुषु वर्तमानः कारणगुण(४)क्रमेणान्त्यावयविपर्यन्तं आयातो गुणविशेषः स्नेह इति युक्तम् (५)। न च घृतादिष्वेव स्नेहोपलब्धिः सातिशयः स्नेहस्तत्रोपलभ्यते गुरुत्वमिव सुवर्णे। वस्तुतस्तु सर्वजलधारिणी स्निग्धता अन्यथा जलावसेकेन सक्तुसिकतादीनां सङ्ग्रहो न स्यात् स हि स्नेहद्रवत्वकारितः संयोगविशेषो धारणाकर्षणहेतुः न वासौ (६) केवलद्रवत्वहेतुकः काचकाञ्चनादिभिरति द्रवीभूतै(७)रपि वालुकाद्यसङ्ग्रहात् नापि स्नेहमात्रकारितः

(१) रूपरसगन्धादयो—पा० २ पु० ॥
(२) न च—पा० २ पु० ॥
(३) नालिकेरफलस्यापि—पा० २ पु० ॥
(४) कारणपूर्व—पा० ३ पु० ॥
(५) स्नेह इत्युच्यते—पा० २ पु० ॥
(६) न चासौ—पा० २ पु० ॥
(७) अभिद्रवीभूतै—पा० २ पु० ॥

धाः नित्यानित्यभावात् । कार्य्यं पुनस्त्रिविधम् । श-

---

स्त्याने(१)घृतादिभिरप्यसंग्रहात् तस्मात् सकलजलहेतुकः स-
ङ्गहीभवंस्तत्र द्रवत्वमिव स्नेहमपि सांसिद्धिकमवस्थापयति(२)
तथापि नैमित्तिकद्रवत्वमिव नैमित्तिकः पृथिव्यामयं भविष्यति
पार्थिवेष्वपि घृतादिषूपलब्धेरिति चेत् तदन्वयव्यतिरेकाननु-
विधानात् न हि यथा जतुघृतादिष्वद्रवेषु पावकसम्पर्काद् द्र-
वत्वमुत्पद्यते तद्विरोधिसलिलावसेकाच्च निवर्त्तते तथा स्नेहः ।
तस्मात् पाकजतथाविधगन्धरसरूपादिमद्भिः परमाणुभिर्द्व्य-
णुकादिक्रमेण घृतादिद्रव्यमारभ्यते । तत्र चोपष्टम्भकतया
निमित्ततामापन्नाः पानीयावयवास्तेषां संयुक्तसमवायेन स्नेह-
स्तत्रोपलभ्यत इति स्थितम् । सांसिद्धिकं च द्रवत्वमम्भस्येवेत्य-
नुकर्षणार्थश्चकारः । तैलक्षीरादिषु पार्थिवत्वसिद्धिः संयुक्तसम-
वायात्तदुपलब्धिः । शैत्यस्नेहवतां तेषां पार्थिवत्वमेव कथमिति
चेत् तैलस्य भौमानलेन्धनत्वाद् घृतवत् । जतुक्षीरस्य च पिण्डी-
भावेपि प्रत्यभिज्ञानाद् घृतवदेवेत्यादि स्वयमूहनीयम् । तास्तु
पूर्ववदेव द्विविधाः । नित्यानित्यभावात् । तुशब्दोप्यर्थः । पृथि-
वी तावद् द्विविधा आपोपि तथैव (३) । पूर्ववदिति कार्य्यतया
परमाणुतया चेति । यथा पृथिवी नित्याऽनित्या च तथेत्यर्थः ।
ता इत्यत्र विभक्तिविपरिणामेन (४) तासां कार्य्यं त्रिविधं श-

---

(१) स्नेहमात्रहेतुकः स्नेहवद्भिरपि पिण्डीभूतै— पा० २ पु० ॥
(२) तस्मादुभयमपि व्यवस्थापयति— पा० २ पु० ॥
(३) आपोऽपि द्विविधाः—पा० ३ पु० ॥
(४) परिणामेन—पा० १ पु० ॥

रीरेन्द्रियविषयसञ्ज्ञकम् । तत्र शरीरमयोनिजमेव वरुणलोके पार्थिवावयवोपष्टम्भादुपभोगसमर्थम् । इन्द्रियं सर्वप्राणिनां रसोपलम्भकं

---

रीरेन्द्रियविषयसञ्ज्ञकम् । तदेतन्निगदव्याख्यानं पृथिव्यामिवात्रापि तात्पर्यमूहनीयम् । आपः क्वच(१)िच्छरीरारम्भिकाः द्रव्यारम्भकत्वात् पृथिवीवत् । द्रव्यस्य हि द्रव्यारम्भणयोग्यता शरीरेन्द्रियविषयभावेन व्याप्ता यदेतेष्वेकमप्यारभते तदन्यदपि यन्नैकं नैतदन्यदपीत्यन्वयव्यतिरेकाभ्यामुपलम्भात् । ततो यद्याप:शरीरं नारभेरन्नेन्द्रियविषयावपि नारभेरन् । न चैवम् । तस्मात् क्वचिच्छरीरमप्यारभन्त इति स्थिते कीदृक् शरीरमित्यपेक्षायामाह । शरीरमयोनिजमेवेति । शुक्रशोणितयोर्नियमेन पार्थिवत्वात् । पार्थिवेन च पाथसीयानामनारम्भात् तदयोनिजमेव । नन्वनुपलब्धिबाधितमेतदित्यत आह । वरुणलोक इति । व्यवहितविप्रकृष्टत्वान्नोपलभ्यते । न त्वभावात् । आगमादुपलब्धेरिति भावः । ननु भङ्गुरस्वभावत्वादपां (२) तदारब्धं कथमुपभोगायतनं तदित्यत आह । पार्थिवेति । यथा कठिनत्वात् पृथिव्यास्तदारब्धमप्यवयवोपष्टम्भादुपभोग(३)समर्थम् । तथाप्यप्त्वाद्द्रवमपि पार्थिवाद्यवयवोपष्टम्भात् तदप्युपभोगसमर्थम् । विजातीयारम्भकत्वमात्रं हि प्रतिषिद्धं ननु परस्परानुग्रहोपीत्यर्थः । इन्द्रियमिति । यद्र-

---

(१) क्व—पा० ३ पु० ।

(२) ननु स्वभावद्रवत्वादपां—पा० ३ पु० ॥

(३) अवयवोपष्टम्भाच्चोपभोग—पा० ३ पु० ॥

अन्यावयवानभिभूतैर्जलावयवैरारब्धं रसनम् । विषयस्तु सरित्समुद्रहिमकरकादिरिति ॥

तेजस्त्वाभिसम्बन्धात् तेजः । रूपस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसंस्कारवत् । पूर्ववदेषां सिद्धिः । शुक्लं भास्वरं च

---

सोपलब्धिसाधनमिन्द्रियं तदाप्यम् । तत्रापि (१) रसोपलब्ध्या स्वरूपसिद्धिः । आप्यत्वं च रूपाद्यव्यञ्जकत्वे सति रसाभिव्यञ्जकत्वात् । सक्तुरसाभिव्यञ्जकोदकवत् (२) । प्राणिभेदेनेन्द्रियप्रकृतिवैचित्र्यनिवारणाय सर्वप्राणिनामिति । अन्यावयवानभिभूतैरिति । वाताद्यभिभवे जडजिह्वत्वादिति भावः । किं नामधेयं तदित्यत आह । रसनमिति । तृतीयां विधामाह । विषयस्त्विति । आप्यत्वे हिमकरकयोः शिलीभावोपपत्तिं द्रवत्वे वक्ष्यतीति ॥

तेजसो लक्षणमाह । तेजस्त्वाभिसम्बन्धादिति । व्याख्यानं पूर्ववत् । तस्य द्रव्यत्वव्यवस्थितये गुणानाह । रूपस्पर्शेत्यादि । अत्र प्रमाणं सूचयति । पूर्ववदेषां सिद्धिरिति । तेजो रूपस्पर्शवदिति सूत्रकारवचनाद्रूपस्पर्शौ । चाक्षुषवचनात् सप्त संख्यादयः । अद्भिः सामान्यवचनाद् द्रवत्वं उत्तरकर्मवचनात् संस्कार इति । पृथिवीवदेते सिद्धाः । प्रसिद्धा इत्यर्थः । तेजस्त्वव्यवस्थापकान् विशेषानाह । शुक्लभास्वरं च रूपमिति ।

---

(१) अत्रापि—पा० ३ पु० ॥

(२) सक्तुरसाभिव्यञ्जकदन्तोदकवत्—पा० ३ पु० ॥

रूपम् । उष्ण एव स्पर्शः । नैमित्तिकं द्रवत्वं च । तदपि द्विविधम् । अणुकार्यभावात् । कार्यं शरीरादित्रयम् । शरीरेन्द्रियविषयसञ्ज्ञकम् । शरीरमयोनिजमेव आदित्यलोके पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम् । इन्द्रियं सर्वप्राणिनां रू-

---

चस्त्वर्थः पृथिव्यादिरूपाद् व्यवच्छिनत्ति । भास्वरत्वं च सामान्यविशेषः । स च रूपान्तरप्रकाशकत्वेन व्यज्यते । तद्रूपं तैजस एव तेन भास्वररूपं तेज इति लक्षणार्थः । शुक्लमिति स्वरूपकथनम् । पच्यमानेन्धनसन्निधिकृतस्तु लोहिताद्युपलम्भः । तद्विरहे चन्द्रतारकादिमहसि शुक्लस्यैवोपलम्भादिति प्रतिपादनार्थम् । न च तत्राप्यविन्धनतया तोयरूपसङ्क्रान्त्या धावल्यप्रतीतिरिति वाच्यम् । अपां रूपेण विजातीयानभिभवात् । न हि जलप्लाविता नीलादयः श्वेतन्त इति । उष्ण एव स्पर्श इति । एवकारश्चन्द्रचामीकरचक्षुरादिषु अनुपलम्भहेतुकां विप्रतिपत्तिमपनेतुम् । तेषां तैजसत्वेनोष्णत्वानुमानात् । अनुद्भूतत्वेनानुपलम्भः । न त्वभावात् । तदपि द्विविधमिति पूर्ववत्तात्पर्यम् । कार्यभेदमाह । शरीरादित्रयमिति । शरीरमादिर्यस्य तत्तथा । न पार्थिववत्तैजसं शरीरमुपलभ्यत इत्यत आह । शरीरमिति । तैजसोऽपि शरीरारम्भकत्वं तोयवत् साधनीयम् । ज्वलदनलकल्पेन कस्तेनोपभोग इत्यत आह । पार्थिवेति । इन्द्रियमाह । इन्द्रियमिति । यद्गन्धाद्यव्यञ्जकत्वे सति रूपस्य व्यञ्जकमिन्द्रियं तत्तैजसम् । सर्वप्राणिनामिति ।

प्राणिभेदेनेन्द्रियप्रकृतेर्वैचित्र्यशङ्कानिवारणार्थम् । तत्सद्भावे रूपोपलब्धिः प्रमाणम् । तैजसत्वे च स्पर्शाद्यव्यञ्जकत्वे सति रूपाभिव्यञ्जकत्वम् (१) । प्रदीपवत् । इह केचिदाहुः । अप्राप्यकारि चक्षुः अधिष्ठानासम्बद्धार्थग्राहकत्वात् (२) । यत्पुनः प्राप्यकारि न तदधिष्ठानासम्बद्धार्थग्राहि यथा रसनादि । पृथुतरग्रहणाच्च । यदि च प्राप्यकारि चक्षुः स्यात् स्वतोधिकपरिमाणं न गृह्णीयात् । न खलु नखरञ्जनिका परशुच्छेद्यं छिनत्ति । शाखाचन्द्रमसोस्तुल्यकालग्रहणाच्च (३) । यदि हि गत्वा गृह्णीयात् निकटस्थमाशु प्राप्नुयात् । दवीयस्तु (४) चिरेणेति । न तुल्यकालमुपलभेत् । अनुभवती तून्मीलन्नेव नयने शाखां शीतमयूखं चेति । काचाभ्रपटलस्फटिकाद्यन्तरितोपलब्धेश्च । यदि हि प्राप्य गृह्णीयात् प्रतिघातिना स्फटिकादिद्रव्येण विष्टम्भादप्राप्तं प्रसर्पत्तृणादिकं (५) नाददीत तस्मादप्राप्यकारि ततो न तैजसमिति । तदसत् । अधिष्ठानासम्बद्धार्थग्राहित्वस्य प्रदीपेनानैकान्तिकत्वात् । पृथुतरग्रहणस्यापि पृथ्वग्रतया तद्वदेवोपपत्तेः । तुल्यकालग्रहणं त्वसिद्धमेव । तदभिमानस्य कालसन्निकर्षेणोपपत्तेः । अचिन्त्यो हि तेजसो लाघवातिशयेन वेगातिशयो यत्प्राचीनाचलचूडावल-

---

(१) रूपाभिव्यञ्जकत्वात्—पा० १ पु० ॥

(२) ग्राहित्वात्—पा० ३ पु० ॥

(३) शाखेति । गतिक्रमे प्राप्यग्रहणे हि क्रमिकं ग्रहणं स्यात् तथा चानुभवविरोध इत्यर्थः । कि० भा० प० ॥

(४) दवीयाँस्तु—पा० ३ पु० ॥

(५) प्रसार्य तृणादिकं—पा० ३ पु० ॥

स्विन्येव भगवति मयूखमालिनि भवनोदरेषु आलोक इत्यभिमानो लौकिकानाम् । केचित्तु(१) संसर्गिद्रव्यतया निःसरदेव नायनं तेजो बाह्यालोकेनैकतां गतं युगपदेव तावदर्थेन संसृष्टमिन्द्रियमुत्पादितवदिति शाखाचन्द्रमसोस्तुल्यकालग्रहणमुपपद्यत एवेति समादधुः (२) । तदसत् । पृष्ठभागव्यवहितार्थोपलम्भ(३)प्रसङ्गात् । इन्द्रियप्राप्तये ह्यार्जवावस्थानमुपयुज्यत इति । स्फटिकाद्यन्तरितोपलब्धिरपि प्रसादस्वभावतया स्फटिकादीनां तेजोगतेरप्रतिबन्धकतया प्रदीपप्रभावदेवोपपन्नेति (४) । येषां त्वप्राप्यकारि चक्षुस्तेषामप्राप्तत्वाविशेषादव्यवहितवत् कुड्यादिव्यवहितमपि किं न गृह्णीयात् । न हि व्यवधायकं प्राप्तिविघातादन्यत्र सत्तयैव कार्यविरोधि तथात्वे तस्मिन् सति न क्वचित्कार्यं भवेत् योग्यं योग्येन गृह्यते । तत्त्वयोग्यत्वान्न गृह्यते न तु व्यवहितत्वादित्यपि वार्त्तं स्थैर्ये स्वरूपयोग्यतायास्तदानीमप्यपरावृत्तेः । क्षणिकत्वेपि प्रत्यासीदतां सहकारिणामतिशयजनकत्वात् । न ह्यप्रत्यासीदन्तः सहकारिप्रत्ययाः समासहस्रेणापि भावानतिशाययन्ति । प्रत्यासत्तिश्च बौद्धनये निरन्तरोत्पादः । अस्माकं च द्रव्ययोः संयोग एव स्यात् । न च क्षणसारस्यार्थेन निरन्तरोत्पादः । नापि संयोगः । ततस्तदाश्रयस्यातीन्द्रियस्य गतिक्रमेण निर-

---

(१) चक्षुर्बाह्यालोकाभ्यामारब्धेन चक्षुषा तावदर्थसंसृष्टेन युगपत् तावदर्थग्रहणमिति केषाञ्चिन्मतमाह केचित्त्विति । कि० भा० प० ॥

(२) समाधानमाहुः—पा० ३ पु० ॥

(३) व्यवस्थितार्थोपलम्भ—पा० ३ पु० ॥

(४) प्रभावदेवोपपत्तेरिति—पा० १ पु० ॥

**प्रव्यञ्जकमन्यावयवानभिभूतैस्तेजोवयवैरारब्धं चक्षुः । विषयसञ्ज्ञकं चतुर्विधम् । भौमं दिव्यमुदर्यमाकरजं च । तत्र भौमं काष्ठेन्धनप्रभवमूर्द्ध्वज्वलनस्वभावं (१) पचनस्वेदनादिसमर्थम् । दिव्य-**

---

न्तरोत्पादेन वा संयोगेन वेत्यवशिष्यते तदेतदग्रे निरूपयिष्यत इति दिक् (२) । कथमेतदेव तथा नान्यद्रूपादीत्यत आह । अन्येति । अन्येत्युपलक्षणम् । समानजातीयेन बलवता दुर्बलमभिभूयते । कथमन्यथा सौरेण तेजसा नयनमभिभूतं रूपग्रहणासमर्थं भवति । चक्षुरिति लोकप्रसिद्धमित्यर्थः । विषयविभागमाह । विषयसंज्ञिकमिति । विषय इति संज्ञा यस्य तच्चतुर्विधम् । भौमं भूमौ भवम् । दिव्यं दिवि भवम् । उदर्यमुदरे भवम् । आकरजं खनिराकरस्तस्माज्जातम् । काष्ठेनोद्भिद्विकारान् पार्थिवानुपलक्षयति तदेवेन्धनं दीपनं यस्य तत्तथोक्तम् । ऊर्ध्वज्वलनमेव स्वभावो यस्य तत्तथा । जातिनिबन्धनो (३) धर्मः स्वभाव इत्युच्यते । परार्थतामाह । पचनेति । पाको विक्लेदनं रूपपरावृत्तिर्वा । स्वेदनं वातश्लेष्मणोरपगमः । आदिग्रहणाच्छीतदुःखोपशमो दाहदुःखोत्पादनं च । दिव्यमबिन्धनं आप एवेन्धनं यस्य तत् । किं तदित्यत आह (४) ।

---

(१) स्वभावकं—पा० ३ पु०

(२) निराकरिष्यतीत्येषा हि दिक्—पा० ३ पु० ॥

(३) निबद्धो—पा० ३ । १ पु० ॥

(४) तदत आह—पा० ३ पु० ॥

मबिन्धनं सौरविद्युदादि। भुक्तस्याहारस्य रसा-
दिभावेन परिणामसमर्थमुदर्यम्। आकरजं सु-

---

सौरं सूरस्येदं सौरम्। विद्युदचिरप्रभा। आदिग्रहणाद्वडवानल इत्येतदपि दिव्यम्। भुक्तस्याहारस्येति। आह्रियत इत्याहार ओदनादिस्तस्य रसादिपरिणामनिमित्तमुदर्यम्। भुक्त एवाहारोऽस्य पार्थिवाप्यरूपं इन्धनं कार्यो रसः। आदिग्रहणान्मलधातुस्तद्विकारास्त एव परिणामास्तेषां निमित्तम्। आकरजं सुवर्णादि। आदिग्रहणाद्रजतताम्रकांस्याद्यष्टकम्। कथं पुनरेतत्तैजसम्। यद्यपि गुरुत्वादयः संयुक्तसमवायेनाप्युपपद्यन्ते। तथापि नैमित्तिकद्रवत्वादेव पार्थिवत्वमस्य सिध्यति घृतादिवत्। न च घृतादिद्रवत्ववदेवात्यन्ताग्निसंयोगादेतद्द्रवत्वं क्षीयेत। तथा प्रदर्शनात्। विशेषविरोधस्य चादूषणत्वात्। तथा च वक्ष्यामः। न चाक्षीयमाणेन द्रवत्वेन सप्रतिपक्षत्वमसाधारणत्वात्। किं च योऽपि तैजसमिच्छति सुवर्णं तेनाप्यत्र पार्थिवो भाग उपष्टम्भक एष्टव्यः। न चासौ द्रवत्वदशाया(१)मद्रव एवास्ते। तथा चाक्षीयमाणद्रवत्वं तत्राप्यस्तीति विपक्षैकदेशवृत्तित्वाद्विरुद्धो हेतुः। तस्मात् परिभावनीयमेतत् सूरिभिः। उच्यते। रूपवत्तया तावदेतत्क्षितयान्तर्भूतमिति स्थितम्। तत्र सांसिद्धिकद्रवत्वशैत्ययोरभावात्। स्नेहाविनाभूतद्रव्यान्तरसङ्ग्रहानुपपत्तेश्च न जलम्। न च नैमित्तिकद्रवत्ववत्त्वात् पार्थिवं विपक्षे बाधकाभावात्। न हि

---

(१) तद्द्रवदशाया—पा० ३ पु०॥

निमित्ताद् द्रव्यान्तरे द्रवत्वोपपत्तिं किञ्चिद्विरुणद्धि । न चोर्ध्व-ज्वलनतिर्यक्पवनवज्जातिनियतमेतत् एकदेशवृत्तित्वात् । न च तद्विशेषनियतं सर्पिरादीनां भिन्नजातीयत्वात् । तस्मा-त्तत्तद्भोगहेतुनियतादृष्टसहकार्यग्निसंयोगनिबन्धनं द्रवत्वमु-त्पद्यमानं कम्पवन्न पार्थिवत्वादिव्यवस्थाहेतुः किं च पार्थिवं रू-पमग्निसंयोगादसति विरोध्यन्तरे परावर्तते सति तु नेति नि-यमः । दह्यमानेषु घटादिषु दर्शनेन जलसम्बन्धाच्च तेष्वेवाद-र्शनेन कार्यकारणभावव्यवस्थितेः । तदिदं सुवर्णादि निरन्तरं ध्मायमानमपि न पूर्वरूपं जहाति । न च रूपान्तरमापद्यते । तेन जलवदपार्थिवत्वमवधार्यते । तेनैव च द्रव्यान्तरेण प्रति-बद्धत्वादुपष्टम्भकोपि पार्थिवभागः सदृशरूप एवानुवर्तते । य-त्तु पुटपाकादिना रक्तसारता दृश्यते तन्मिश्रीभूताभिभावकत-त्तद्द्रव्योपगमादिति युक्तमुत्पश्यामः । तदयं प्रयोगः । सुवर्णादि न पार्थिवं अत्यन्तानलसंयोगेप्यपरावर्त्तमानरूपवत्त्वात् जलव-त् । तैजसं चैतत् । पार्थिवाप्याभ्यामन्यत्वे सति रूपवत्त्वात् । सूर्यालोकवत् । एतेन पारदादि व्याख्यातम् । आप्यादन्यत्वस्य द्रव्यान्तरसंग्रहाभावादेव सिद्धेः । सांसिद्धिकद्रवत्वस्याग्निसयो-गाज्जायमानत्वेन बाधितत्वात् । अविन्धनतेजोवद्वैधर्म्योपप-त्तिः । तैजसत्वे आगमसत्त्वादिति । नन्वभास्वररूपवत्त्वान्न तैजसं इत्यपि स्यात् । न स्यात् असिद्धेः । न हि मध्याह्ने प्रदीपो बहिर्भास्वरो नोपलभ्यत इति न भास्वरः । उपष्टम्भकद्रव्यरूपा-भिभवेनैवानुपलम्भोपपत्तेः । अथ नयनरश्मिवदनुद्भवेनैवानुप-लम्भः किं न स्यात् । न स्यात् । तद्वत्सुवर्णादिद्रव्यस्याप्यनुपल-म्भप्रसङ्गात् । न ह्यनुद्भूतरूपं द्रव्यमुपलभ्यते । ग्रीष्मोष्मणोपि

वर्णादि । तत्र संयुक्तसमवायाद्रसाद्युपलब्धिरिति ॥

वायुत्वाभिसम्बन्धाद्वायुः । स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारवान् (१) ।

---

निशि दर्शनप्रसङ्गात् । अभिभवेपि मध्यन्दिनोल्काप्रकाशानुपलम्भवदनुपलम्भप्रसङ्गस्तुल्य इति चेत् । न । न हि रूपस्याभिभवेन द्रव्यं नोपलभ्यते । महारजनरूपाभिभूते धवलिम्नि पटानुपलम्भप्रसङ्गात् । तस्मादभिभूतत्वाद्रूपमेव न दृश्यते । स तु माषराशिप्रविष्टमशीवन्महाप्रकाशसमाहारान्नेक्ष्यत इति सर्वमवदातम् । कथं तर्हि सुवर्णादौ रसाद्युपलब्धिरित्यत आह । तत्रेति ॥

प्रतिनियतेन्द्रियग्राह्य(२)गुणाश्रयतया पृथिव्यादीनां सुप्रसिद्धत्वाद्गन्धादिह्रासक्रमेण च व्याख्यानात् तेजोनन्तरं वायुलक्षणमाह । वायुत्वाभिसम्बन्धादिति । लक्षणार्थः पूर्ववत् । तस्य द्रव्यत्वसिद्ध्यर्थं गुणानाह । स्पर्शेति । एवं गुणवत्तया द्रव्यत्वे सिद्धे वायुत्वव्यवस्थाविशेषमाह (३) । स्पर्शोऽस्येति । अस्य वायोरनुष्णः स्पर्श इति तेजोव्यावृत्तिरशीत इत्यद्भ्यः अपाकज इति पृथिव्याः । अत्रा(४)नुष्णाशीतत्वं अस्य प्रत्यक्षसिद्धम् । अपाकजत्वं त्वपार्थिवस्पर्शत्वात्तोयस्पर्शवत् । पाकजत्वं हि विशेषान्तरव्याप्तमुपलब्धम् । अन्यथा सर्वगुणानां पाकजत्व-

---

(१) वेगवान्—पा० ३ पु० ॥

(२) प्रतियतेन्द्रियग्राह्य—पा० १ पु० ॥

(३) वायुत्वव्यवस्थाहेतुविशेषमाह—पा० ३ पु० ॥

(४) तत्र—पा० ३ पु० ॥

स्पर्शोऽस्यानुष्णाशीतत्वे सत्यपाकजः । गुणविनिवेशात् (१) सिद्धेः । अरूपिष्वचाक्षुषवचनात् सप्त संख्यादयः । तृणकर्मवचनात् संस्कारः । स चायं

---

प्रसङ्गात् । तदितो व्यावर्तमानं स्वव्याप्यमुपादाय तद्विरहिणि पार्थिवे विश्राम्यतीति प्रतिबन्धसिद्धिः । सोस्ति वायावित्यत्र प्रमाणं सूचयति । गुणविनिवेशेति । तथा च सूत्रं वायुः स्पर्शवानिति । संख्यादिषु सूत्रकारसम्मतिमाह । अरूपिष्विति । रूपरहितेषु वर्तमानानामेषामचाक्षुषत्वं वदता सूत्रकारेण रूपरहिते वायौ सद्भावः स्वीकृतः प्रमाणं तु संख्यापरिमाणपृथक्त्वसंयोगविभागवत्तायां वायोर्द्रव्यारम्भकत्वम् (२) संख्यापरिमाणपृथक्त्वसंयोगैर्विना द्रव्यारम्भानुपपत्तेः । विभागेन विना संयोगविनाशानुपपत्तौ आरब्धद्रव्यस्य विनाशानुपपत्तेः परत्वापरत्वाभ्यां विना संयोगाल्पीयस्त्वभूयस्त्वासंभवे मूर्तत्वानुपपत्तेरिति । संस्कारे सूत्रकारानुमतिमाह(३) । तृणेति । तृणे कर्म वायुसंयोगादिति वचनादित्यर्थः । तथा च प्रयोगः एतद्रूपवद्द्रव्याभिघातमन्तरेण तृणे कर्म स्पर्शवद्वेगद्द्रव्याभिघातजं विशिष्टकर्मत्वात् नदीपूराभिहतकाशादिवनकम्पवदिति । तदेतत् कम्पलिङ्ग इत्यत्र स्फुटीभविष्यति । एतेनारूपस्पर्शवान् वायुरिति लक्षणमूहेत् । तथा च सत्यशीतानुष्णापाकजस्पर्शवान्

(१) गुणविनिवेशाधिकारे तत्सिद्धेः—पा० ३ । ४ पु० ॥
(२) द्रव्यत्वमेव—पा० १ पु० ॥
(३) सम्मतिमाह—पा० ३ पु० ॥

द्विविधोऽणुकार्यभावात् । तत्र कार्यलक्षणश्चतुर्विधः । शरीरमिन्द्रियं विषयः प्राण इति । तत्रायोनिजमेव शरीरं मरुतां लोके पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम् । इन्द्रियं सर्वप्राणिनां

---

वायुरिति सिद्ध्यति । सोयं यद्यनित्य एव अवयवानवस्था स्यात् । कस्यचिन्नाशे अनाश्रयं च कार्यमापद्येत । अथ नित्य एव तर्हि निष्प्रामाणिकः स्यात् परमाणुस्पर्शस्यातीन्द्रियत्वात् । स्थूलानां शब्दधृतिकम्पानां च परमसूक्ष्मद्रव्याभिघाताद्यहेतुकत्वादित्यत आह । स चायमिति । द्विविधो नित्यश्चानित्यश्चेति । यथासंख्यमणुकार्यभावादिति । तत्र तयोरणुकार्ययोर्मध्ये कार्यलक्षणश्चतुर्विधः । चतस्रो विधा आह । शरीरमिति । तत्र तेषु मध्ये शरीरमयोनिजमेव न तु पार्थिववद्योनिजमपि वायोर्द्रव्यारम्भकत्वेन तेजोवच्छरीरारम्भकत्वे स्थिते क्व तदित्यपेक्षायामाह । मरुतां लोक इति । ननु तस्य तात्वाद्यभावे वाग्व्यापाराभावात् करचरणाद्यभावे चाहारविहरणा(१)द्यभावात् संस्थानविशेषाभावे चेन्द्रियाश्रयत्वानुपपत्तिः कथं भोगायतन(२)मित्यत आह । पार्थिवेति । उपलक्षणं चैतत् । भूतान्तरानुग्रहस्यापि सम्भवात् । इन्द्रियमिति । रूपादिषु मध्ये स्पर्शस्यैवोपलम्भकं यदिन्द्रियं तद्वायवीयम् । सर्वप्राणिनामिति । पूर्ववदत्रापि स्पर्शोपलब्ध्या करणमात्रे सिद्धे सं-

---

(१) चाहरणविहरणा—पा० ३ पु० ॥
(२) भोगायतनत्व—पा० ३ पु० ॥

**स्पर्शोपलम्भकं पृथिव्याद्यनभिभूतैर्वाय्ववयवैरार-ब्धं सर्वशरीरव्यापि त्वगिन्द्रियम् । विषयस्तूपल-**

---

योगाश्रयतया च द्रव्यत्वे रूपादिषु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वाद्वायवीयत्वम् । अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनवदित्यूहनीयम् । कस्यचिदेव वायोरिन्द्रियारम्भकत्वं न सर्वस्येति नियमे हेतुमाह । पृथिव्यादीति । अत एव कुष्ठापहतायां(१) त्वचि न स्पर्शोपलम्भ इत्यभिसन्धिः । तस्याधिष्ठानमाह । सर्वशरीरव्यापीति । सर्वशरीरव्याप्तस्य स्पर्शोपलम्भादित्यवधातव्यम्(२) । तदवसानं शरीरं नखलोमकेशदशनानां संयोगिद्रव्यमात्रत्वं त्वगिन्द्रियानाश्रयत्वा(३)दित्यभिप्रायः । लोकप्रसिद्धां संज्ञामाह । त्वगिति । ननु बुद्धिचयवद्देहसहजावरणमात्रं त्वगित्युच्यते । तच्च पार्थिवं प्रत्यक्षसिद्धमिति नेन्द्रियं न च वायवीयमित्यत आह । इन्द्रियमिति । न त्वगेव मुख्यतो वायवीयमिन्द्रियं त्वगित्युच्यते किन्तु लक्षणया तत्रस्थमिन्द्रियं त्वगिति व्यवह्रियते लोकैरित्यर्थः । विषयस्त्विति । तुशब्देनोपलभ्यत्वात्(४) पृथिव्यादित्रयाद् व्यावर्तयति उपलभ्यमानस्पर्शाधिष्ठानभूतो न तूपलभ्यत इत्यर्थः । नन्वनुपपन्नमेतत् । स्पार्शनप्रत्यक्षत्वाद्वायोः त्वगिन्द्रियव्यापारानन्तरं वायुर्वातीति प्रतीतेः । न च स्पर्शमात्रमेव तत्र प्रतीयते वायुस्त्वनुमीयत इति

---

(१) कुष्ठापहृतायां—पा० ३ पु० ॥
(२) अवदातव्यम्—पा० ३ पु० ॥
(३) संयोगित्वमात्रमिन्द्रियानाश्रयत्वा—पा० ३ पु० ॥
(४) उपलभ्यमानात्—पा० ३ पु० ॥

युक्तम् । शीतो वायुरुष्णो वायुरिति तदीयस्पर्शाभिभवेऽपि वायुप्रत्ययात् । न च शीतोष्णद्रव्योपनायकत्वेनानुमितस्य पवनस्य तथाप्रतीतिरिति युक्तम् । बाधकाभावात् । अस्त्यचाक्षुषत्वं बाधकं द्रव्यस्य हि स्पार्शनत्वं चाक्षुषत्वेन व्याप्तम् । तदितो व्यावर्तमानं स्पार्शनत्वमपि व्यावर्तयतीति चेत् । न । विपक्षे बाधकाभावात् । न हि चक्षूरूपाभ्यां त्वचः स्पर्शस्य वाकिञ्चिदुपकर्तव्यम् । येन मिथोपेक्षा स्यात् । तथात्वे वा जात्यन्धेन घटादयोपि त्वचा नोपलभ्येरन् । रूपाभावेन(१) द्रव्यवत् स्पर्शोपि वा नोपलभ्येत । उष्णं जलं शीतलं शिलातलमित्यत्रोष्णशीतस्पर्शाधिष्ठानयोस्तेजःपयसोश्चक्षुषानुपलम्भेपि स्पर्शस्योपलब्धेः । द्रव्यस्य चक्षुषानुपलभ्यमानस्य स्पर्शनेन क्वचिदनुपलम्भान्नैवमिति चेत् । न । अपार्थिवे सर्वत्र त्वचा स्पर्शोपलब्धिरस्तु(२) द्रव्योपलब्धिस्तु चक्षुषैव क्वचिदनुमानेन वा भविष्यति । वायुवत् प्रत्यभिज्ञानमपि तद्वदेवोपपत्स्यते । अथ भ्रान्तौ यथा तथास्तु । प्रमाणचिन्तायां तु उपलभ्यमानः स्पर्श आश्रयसहित एवोपलभ्यते । अनुभवस्य दुरपह्नवत्वात् । अतस्तोयतेजसोः त्वचोपलम्भ इष्यते । गुणयोग्यतामाश्रित्य त्वक्चक्षुषोर्द्रव्यावगाहनादिति । यदि वायावपि समानमेतत् । तथा च प्रयोगः । वायुः प्रत्यक्षः उपलभ्यमानस्पर्शाधिष्ठानत्वाद् घटवदिति । अत्रोच्यते । द्रव्यग्रहणयोग्यतान्तर्भूतयोग्यताकानि खलु संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वानि कर्माणि । एवं ह्यमीषां

---

(१) रूपापायेन—पा० ३ पु० ॥
(२) स्पर्शमात्रोपलब्धिरस्तु—पा० ३ पु० ॥

**भ्यमानस्पर्शाधिष्ठानभूतः स्पर्शशब्दधृतिकम्पलिङ्गः**

---

द्वीन्द्रियग्राह्यता भवति(१) । तद्यदि त्वचा वायुरुपलभ्येत सं-ख्यादयोऽप्युपलभ्येरन् । न चैतद् द्रव्यमपि नोपलभ्येत तुल्योप-लम्भनयोग्यत्वात् । न च त्वचा वायोरेकत्वादिका संख्या वा ह-स्तवितस्त्यादिपरिमाणं वा पृथिव्यादिभ्यः सजातीयतो वा पृथ-क्त्वं संयोगविभागौ वा परत्वापरत्वे च कर्म चोपलभ्यते । न तु-ल्योपलम्भनयोग्यतैवासिद्धा दूरात् संख्यादीनामनुपलम्भेपि शा-लतालतमालादीनामुपलम्भादिति चेत् । न । दूरादिदोषेण संख्यादयो नोपलम्भिषत तथापि योग्यताया अनिवृत्तेर्दोषनि-वृत्तावुपलम्भात्(२) । तस्माद् द्रव्योपलम्भसहचरोपलम्भयोग्य-ताकानां संख्यादीनामनुपलम्भादवगच्छामो न स्पार्शनः पवन इति । तदेतत्तस्याप्रत्यक्षस्यापि नानात्वं संमूर्च्छनेनानुमीयत इत्यत्र स्फुटीभविष्यति । अत एवानुपलभ्यमानसंख्यादिके तोय-तेजसी अपि त्वचा नोपलभ्येते इति विनिश्चयः । तथा चोप-लभ्यमानस्पर्शाधिष्ठानत्वमप्यनैकान्तिकमिति सिद्धम् । कुतस्त-र्हि प्रत्येतव्य इत्यत आह । स्पर्शेति । स्पर्शः शब्दो धृतिः कम्प-श्च लिङ्गानि यस्य स तथोक्तः । तथाहि । योयं रूपवद्द्रव्यास-मवेतः स्पर्शः स क्वचिदाश्रितः स्पर्शत्वात् पृथिवीस्पर्शवत् न चायं जलाद्याश्रयः(३) अनुष्णाशीतत्वात् । न च पार्थिवः । रूपेणासमानाधिकरणत्वात् । यस्तु पार्थिवो नासावेवं यथा

---

(१) निर्वहति—पा० ३ पु० ॥

(२) उपलभ्यते—पा० ३ पु० ॥

(३) न चायं जलानलयोः—पा० ३ पु० ॥

**तिर्य्यग्गमनस्वभावकः मेघादिप्रेरणधारणादिसम-**

---

घटादिस्पर्शः। न च रूपेणासमानाधिकरणत्वमसिद्धं योग्यानुपलब्धेः। न चायोग्यरूपमिह भविष्यतीति युक्तम्। अभिभावकरूपान्तरस्यानुपलब्धेरभिभवानुपपत्तेः। पाकजत्वेन पार्थिव रूपस्पर्शयोः तुल्ययोगक्षेमत्वेन स्पर्शस्योद्भवे रूपस्यानुद्भवायोगात्। अन्यथा पृथिव्यां रूपोद्भवेपि स्पर्शानुद्भवप्रसङ्गात्। किं च अनुपलभ्यमानरूपस्य स्पर्शाधिष्ठानस्य पृथिवीत्वे गुरुत्वमपि स्यात्। न च पवनापूरितस्य चर्मपुटकादेरपूरणदशातोधिकमवनमनमनुमीयमानस्य धूमापूरितेनेदमनैकान्तिकमिति चेत्। न। अत्र धूमदशायां तत्रापि गरिमविशेषहेतोरवनतिविशेषस्य प्रतीतेः। तस्माद्विवादाध्यासितं द्रव्यं न पृथिवी रूपरहितत्वात् आकाशवत् गुरुत्वरहितत्वात् तेजोवदिति स्थिते(१) स्पर्शाश्रयतया चतुर्थं द्रव्यं सिद्ध्यति। एवमसति रूपद्रव्याभिघाते योयं पर्णादिषु शब्दसन्तानः स्पर्शवद्वेगवद्द्रव्यसंयोगप्रभवः(२) अविभज्यमानावयवद्रव्यसन्निधित्वे सति शब्दसन्तानत्वात् दण्डाभिहतभेरीशब्दसन्तानवदिति। एवं गुरुणो द्रव्यस्यापतनं धृतिः। ततोप्यनुमीयते वायुः। तथा च प्रयोगः। नभसि तृणतूलस्तनयित्नुविमानादीनां धृतिः स्पर्शवद्द्रव्यसंयोगहेतुका अस्मदाद्यनधिष्ठितद्रव्यधृतित्वात् नौकादिधृतिवत्। कम्पस्य लिङ्गत्वमुक्तम्। एवं चतुर्णामपि कार्यत्वान्निस्तरङ्गः प्रतिबन्धः तिर्य्यग्गमनस्वभावकः तिर्य्यग्गमनं स्वभावो यस्य स

---

(१) सिद्धे—पा० ३ पु० ॥

(२) द्रव्याभिघातजः—पा० ३ पु० ॥

र्थः । तस्याप्रत्यक्षस्यापि नानात्वं सम्मूर्च्छनेना-
नुमीयते सम्मूर्च्छनं पुनः समानजवयोर्विरुद्धदि-

———

तथोक्तः । अदृष्टवदात्मसंयोगनिबन्धनमस्य तिर्य्यग्गमनम् । तेन कः पुरुषार्थ इत्यत आह । मेघादीति । आदिग्रहणाद्वैहायसानां विमानादीनां भौमादीनां च यानपात्रपांसुपटलादीनां जलानलयोश्च परिग्रहः । धारणादीत्यादिशब्दात् स्पर्शाभिव्यक्तिदीपनिर्वापणादिपरिग्रहः (१) तेषु समर्थः । तस्याप्रत्यक्षस्यापीति । यद्यपि परमाणुगुणानामतीन्द्रियत्वात् स्पर्शस्य प्रत्यक्षसिद्धत्वादर्थादवयविवृत्तित्वे सिद्धे अवयविनश्च स्थूलस्य द्व्यणुकादिक्रमेणा(२)रम्भात् पवनजातीयस्य नानात्वं धर्मिग्राहकप्रमाणादेव सिद्धम् । शक्यते च स्पर्शवत्तयानुमातुम् । तथापि शिष्यव्युत्पादनाय बोधा(३)भासनिराकरणाय च नानात्वानुमानप्रपञ्चमाह । तस्येति । अथ किमिदं सम्मूर्च्छनं नामेत्यत (४) आह । सम्मूर्च्छनमिति । समानजवयोस्तुल्यवेगयोर्विरुद्धदिक्क्रिययोर्विरुद्धयोर्दिशोः क्रिये ययोस्तौ विरुद्धदिक्क्रियौ तयोः सन्निपातः परस्परमेलनं संयोगविशेष इति यावत् । वाय्वोरिति प्रकृतित्वेन स्पर्शवतोरिति तु विवक्षितम् । नन्वतीन्द्रियस्य नानात्ववद्वेगसंयोगावप्यतीन्द्रियावित्यत आह ।

---

(१) स्पर्शाभिव्यक्तिदीपनयोः परिग्रहः—पा० ३ पु० ॥

(२) प्रक्रमेणा—पा० ३ पु० ॥

(३) चोद्या—पा० ३ पु० ॥

(४) मूर्च्छनमित्यत—पा० ३ पु० ॥

**क्रिययोर्वाय्वोः सन्निपातः सोऽपि तृणादिगमनेनानुमितेन सावयविनोरूर्द्ध्वगमनेनानुमीयते ।**

---

सोपीति । सन्निपातोपीत्यर्थः । ऊर्ध्वगमनेनानुमीयते । नन्वतीन्द्रियस्य गमनमप्यतीन्द्रियं तत्कथं तेन सन्निपातोनुमीयत इत्यत आह । अनुमितेनेति । अथ केन लिङ्गेन तदनुमेयमित्यत आह । तृणादिगमनेनेति । अत्राप्यूर्ध्वेत्यनुषञ्जनीयम् । तेन तृणादीनामूर्ध्वगमनेन कार्येण प्रत्यक्षसिद्धेन कारणमूर्ध्वगमनं पवनस्यानुमेयम् । न चैतद्व्यणुकादिरूपस्य त्रसरेणुरूपस्य वा वायोस्तृणादीन्यूर्ध्वं नेतुं सामर्थ्यमित्यत आह (१) । सावयविनोरिति । अवयवानामवयवित्वेन तृणादिप्रेरणौपयिकं महत्त्वमभिप्रेति । एवमियता प्रबन्धेन संख्यादीनां कर्मपर्यन्तानां वायावतीन्द्रियत्वमुक्तं तिर्यग्गमनस्वभावस्य कथमूर्ध्वगमनमित्यत्रोपपत्तिर्दर्शिता । तथा च वायुतोप्यधिकमूर्ध्वगमनशीलं द्रव्यान्तरमिति नाशङ्कनीयमिति सूचितम् । निम्नाभिसर्पणस्वभावानामप्यपां यथा द्रव्यान्तरसंमूर्च्छनादूर्ध्वगमनं तथैव पवनस्याप्यूर्ध्वगमनोपपत्तिरिति । अत्रैवं प्रयोगः । प्रतिघात्या(२)-द्वायोः प्रतिहन्ता वायुरन्यः तत्प्रतिहन्तृत्वात् । देवदत्ताद्यज्ञदत्तवत् । अभेदे तु प्रतिघातानुपपत्तिः । संयोगस्य द्विनिष्ठत्वात् । प्रतिहन्यते चायं वायुस्तिर्यग्गमनस्वभावस्य प्रयत्नाद्यसंभवे सति ऊर्ध्वगमनवत्त्वात् । परस्पराहतनदीपयःपूरवत् । अन्यथा निमित्तान्तरासंभवे कारणं विना कार्योत्पत्तिप्रसङ्गः । ऊर्ध्वगति-

(१) नेतुमुत्सहत इत्यत आह—पा० ३ पु० ॥

(२) प्रतिहन्या—पा० २ पु० ॥

प्राणोन्तःशरीरे रसमलधातूनां प्रेरणादिहेतुरेकः सन् क्रियाभेदात् प्राणापानादिसंज्ञां लभत इति ॥

---

मानयं तृणादीनामूर्ध्वगमनासमवायिकारणसंयोगाश्रयत्वात् तृणाद्यूर्ध्वगमनासमवायिकारणसंयोगाश्रयज्वलदनलवत् । पूर्वक एव तर्कः(१) । तृणादीनामूर्ध्वगमनं स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यं अनूर्ध्वगमनशीलस्य प्रयत्नाद्यसंभवे सत्यूर्ध्वगमनत्वात् ज्वलत्पावकप्रेरिततूलाद्यूर्ध्वगमनवदिति नानुपपत्तिरिति । चतुर्थीं विधामाह । प्राणोन्तःशरीर इति । शरीराभ्यन्तरचारी वायुः प्राण इत्यर्थः । तत्किमयं स्थानभेदादेव विषयादिभ्यो भिद्यत इत्यत आह । रसेति । अशितपीतस्याहारस्य सारो विकारो रसः । मला मूत्रपुरीषस्वेददूषिकादयः । धातवो रुधिरादयः शुक्रान्ताः । उपलक्षणं चैतत् । दोषौ च पित्तकफौ । उदर्यस्याग्निस्तेषां प्रेरणमितस्ततो नयनम् । आदिग्रहणाद्धारणं विकारश्चैतेषां हेतुः । एतेन विषयादसाधारणक्रियाभेदाद्भेदो दर्शितः । मूर्तयोः समानदेशत्वविरोधभिया शारीराः पञ्च वायव इत्यागमप्रसिद्धिमन्यथा समर्थयति । एकः सन् क्रियाभेदादिति । एक एव प्राणस्तेषां मलादीनां कार्यभेदात् पञ्चसंज्ञाः लभते । न तु संज्ञाभेदात् संज्ञी भिद्यत इत्यर्थः । मुखनासिकाभ्यां निष्क्रमणप्रवेशनात् प्राणः । तेषामेव मलादीनामधो नयनादपानः । समं नयनात्(२) समानः । ऊर्ध्वं

(१) पूर्वक इति । कारणं विना कार्योत्पत्त्यसम्भव इत्यर्थः । कि०प्र०व० ॥

(२) समन्तान्नयनात्—पा० ३ पु० ॥

# इहेदानीं चतुर्णां महाभूतानां (१) सृष्टिसं-

नयनादुदानः । नाडीमुखेषु विततनाद् व्यान इति ॥

तेमी पृथिव्यादयः शरीरेन्द्रियविषयानारभमाणाः किमवि-च्छेदेन आहोस्विद् विच्छेदोप्यस्ति(२)। यदापि विच्छेदेनारभन्ते तदापि किमित एव किं वा अदृष्टमप्यपेक्षन्ते । यदाप्यदृष्टमपेक्षन्ते तदापि किमनधिष्ठिताः किं वा केनाप्यधिष्ठिता इति । कस्मात्र विशेषः । अविच्छेदे तद्वचनादाम्नायस्य प्रामाण्यमिति (३)व्याकुप्येत । लोकसन्तत्यविच्छेदे वेदसम्प्रदायस्याप्यविच्छेदात् । विच्छेदे वा आद्यव्यावहारे व्युत्पत्त्यनुपपत्तौ (४) सर्वलोकव्यवहारविलोपप्रसङ्गः मूलाभावात् । एत एवेति पक्षे वैचित्र्यानुपपत्तिः । तेषां साधारण्यात् । अदृष्टापेक्षायां सर्वादृष्टवृत्तिनिरोधे कार्यानुत्पत्तिप्रसङ्गः । अदृष्टानां प्रथमं वृत्तिलाभे कारणाभावात् । अनधिष्ठितानामेव प्रवृत्तावचेतन्यानुपपत्तिः प्रवृत्त्यनुपपत्तिर्वा । अचेतनप्रवृत्तेः पराधिष्ठानकार्यत्वनियमात् । अधिष्ठातृत्वं च नास्मदादीनामुपादानाद्यनभिज्ञत्वात् नेतरस्य प्रयोजनाभावादिति समाकुलितानन्तेवासिनः समाश्वासयन्नाह । चतुर्णामिति । सृष्टिसंहारयोः सर्गप्रलययोर्विधिः प्रकारः द्व्यणुकादिक्रमेण सृष्टिः क्रियाविभागादिन्यायेनापरमाण्वन्तः प्रलय इति कथ्यते । सृष्टिसंहारयोरनिदंप्रथमता

(१) चतुर्णामपि महाभूतानां—पा० ४ पु० ॥

(२) विच्छेदेनेति—पा० ३ पु० ॥

(३) तद्वचनादाम्नायप्रामाण्यमिति—पा० ३ पु० ॥

(४) आद्यव्यवहारानुपपत्तौ—पा० ३ पु० ॥

हारविधिरुच्यते । ब्राह्मेण मानेन वर्षशतस्यान्ते वर्तमानस्य ब्रह्मणोपवर्गकाले संसारे खिन्ना-

---

प्रतिपादयितुं सृष्टिक्रममुपक्रम्य संहारप्रक्रमेण प्रतिपादयति(१) । ब्राह्मेण मानेनेति ॥

क्षणद्वयं लवः प्रोक्तो निमिषस्तु लवद्वयम् ।
अष्टादश निमिषास्तु काष्ठास्त्रिंशत्तु ताः कलाः ॥
त्रिंशत्कलो मुहूर्त्तः स्यात्त्रिंशद्रात्र्यहनी च ते ।
अहोरात्राः पञ्चदश पक्षो मासस्तु तावुभौ ॥
ऋतुर्मासद्वयं प्रोक्तमयनं तु ऋतुत्रयम् ।
अयनद्वितयं वर्षो मानुषोयमुदाहृतः ॥
एष दैवस्त्वहोरात्रस्तैः पक्षादि च पूर्ववत् ।
दैववर्षसहस्राणि द्वादशैव चतुर्युगम् ॥
चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते ।
रात्रिश्चैतावती तस्य ताभ्यां पक्षादिकल्पना ॥

तथा च वर्षशतान्ते वर्तमानस्य ब्रह्मणोपवर्गकाले मोक्षकाले ये ह्यसङ्कल्पितफलकर्मकर्तारः साकारोपासनापरिवासितचेतसो यतयोऽतस्ते हिरण्यगर्भपदवीमनुप्राप्यापवृज्यन्त इत्यागमात् यदा त्वीश्वर एव कार्यवशाद् गृहीतदिव्यदेहो ब्रह्माद्यवस्थामापद्यत इति पक्षः तदा ब्रह्मणोपवर्गकाले देहापवर्गकाले(२) इति व्याख्येयम् । तस्यात्यन्तदुःखाभाववतो

---

(१) संहारक्रमं व्युत्पादयति—पा० ३ पु० ॥
(२) देहावसर्जनकाले—पा० ३ पु० ॥

नां सर्वप्राणिनां निशि विश्रामार्थं सकलभुवनपतेर्महेश्वरस्य सञ्जिहीर्षासमकालं शरीरेन्द्रियमहाभूतोपनिबन्धकानां सर्वात्मगतानामदृष्टानां वृत्तिनिरोधे सति महेश्वरेच्छात्माणुसंयोगजक-

---

नित्यमुक्तत्वादिति । संसारे जन्ममरणप्रबन्धान्धकारे खिन्नानां नानाविधैर्दुःखैर्निःसहीभूतानां निशीव निशि प्रलये विश्रामार्थं कियत्कालं दुःखोपशमार्थं सकलभुवनपतेः कालाग्निरुद्रादिपरमेश्वरपर्यन्तानां भुवनानां पत्युः स्वामिनो यथेष्टं विनियोक्तुरिति यावत् । अत एव महेश्वरः । अन्ये हीश्वरा जगदेकदेशपतय इन्द्रवरुणयमादयः । स पुनः कृत्स्नस्यैव जगतः अतो महानीश्वरस्तस्य सञ्जिहीर्षासमकालं संहरणेच्छासमनन्तरकालम् । यद्यपि भगवत इच्छास्तीत्येवमाकारा एकैव । तथाप्युपाधिभेदात् सञ्जिहीर्षा चिकीर्षेत्युच्यते । उत्पत्तिरपि तस्या उपाध्युत्पत्तिरेव । स च कालविशेषो वर्षशतान्तादिशब्दवाच्यः। शरीरेन्द्रियमहाभूतोपनिबन्धकानामुत्पत्तिस्थितिहेतूनाम् । परमाणुभ्योऽधिकपरिमाणतयोपचाराद् द्व्यणुकमपि महाभूतमुक्तम्। सर्वात्मगतानामदृष्टानां सर्वेष्वात्मसु समवेतानामदृष्टानाम् । सर्गहेतूनामिति शेषः । वृत्तिनिरोधे सति प्रलयहेतुना अदृष्टेन प्रतिबन्धे सति। महेश्वरेच्छात्माणुसंयोगजकर्मभ्य इति। महेश्वरेच्छया सहिता ये आत्माणुसंयोगा आत्मपरमाणुसंयोगास्तेभ्यो जातानि यानि कर्माणि तेभ्यः। शरीरेन्द्रियकारणाणुविभागास्तेभ्यस्तत्संयोगनिवृत्तौ शरीरेन्द्रि-

र्म्भ्यः शरीरेन्द्रियकारणाणुविभागेभ्यस्तत्संयोगनिवृत्तौ तेषामापरमाण्वन्तो विनाशः तथा पृथिव्युदकज्वलनपवनानामपि महाभूतानामनेनैव क्रमेणोत्तरस्मिन्नुतरस्मिंश्च सति पूर्वपूर्वस्य विनाशः ततः प्रविभक्ताः परमाणवोवतिष्ठन्ते धर्माधर्मसंस्का-

---

यमूलपरमाणुसंयोगनिवृत्तौ तेषां शरीरेन्द्रियाणामापरमाण्वन्तो विनाशः । यद्यपि परमाण्वन्त इति वक्तुमुचितं तथाप्यन्तशब्दस्यावयववचनत्वभ्रमनिरासेन परमाणूनामवधित्वमाविष्कर्तुमापरमाण्वन्त इत्युक्तम् । तेनैतदुक्तं भवति । तावदयं विनाशो यावत्परमाणवोवसानमिति । न तु यथा दृष्टान्तः पट इति । तथा तेनैव प्रकारेण महेश्वरेच्छादिना पृथिव्युदकज्वलनपवनानामपि महाभूतानामनेनैव क्रमेण क्रियाविभागादिनोत्तरस्मिन्नुत्तरस्मिन् सति पूर्वस्य पूर्वस्य विनाशः । जलादौ सति पार्थिवस्य महाभूतस्य ज्वलनादौ सति जलादेः । अयं च क्रमविशेषनिश्चय आगमादनुसर्तव्यः । एवमापरमाण्वन्तो विनाश इति वचनादेव परमाणूनामेवावस्थाने प्रतिपादिते सांख्यादिमतनिराकरणाय पुनस्तदवस्थानमाह । तत इति । तदित्यर्थः । प्रविभक्ताः कार्यद्रव्यरहिताः प्रचयाख्यसंयोगरहिताश्चेत्यर्थः । तत्किमेत एवावतिष्ठन्ते । नेत्युच्यते । किं तर्हि धर्मश्चाधर्मश्च संस्कारश्च भावनाख्यस्तैरनुविद्धाः सम्बद्धाश्चात्मानः । उपलक्षणं चैतत् । अन्योपि नित्यवर्गः । अनित्येष्वपि पाकजा रूपादयो गुणाः कालावच्छेदोपाधितया वर्तमानानि च म-

रानुविद्धा आत्मान(१)स्तावन्तमेव कालम् । ततः पुनः प्राणिनां भोगभूतये महेश्वरस्य सिसृक्षानन्तरं सर्वात्मगतवृत्तिलब्धादृष्टापेक्षेभ्यस्तत्संयोगेभ्यः पवनपरमाणुषु कर्मोत्पत्तौ तेषां परस्परसंयोगेभ्यो द्व्यणुकादिप्रक्रमेण महान् वायुः समुत्पन्नो

---

महाभूतसंक्षोभप्रभववेगजानि च कर्माणि सन्तन्यमानान्यवतिष्ठन्ते। अन्यथा कालावच्छेदानुपपत्तौ पुनः सर्गानुपपत्तेः। तदिदमुक्तं तावन्तमेव कालमिति। ब्राह्मेण मानेन वर्षशतान्तं यावदित्यर्थः। एवं संहारक्रमं प्रतिपाद्य सृष्टिक्रमं प्रतिपादयन्नाह। ततस्तदनन्तरं पुनरित्यभ्यासमाह। तेन सर्गप्रलययोरनादित्वमभिव्यनक्ति। अथ किमर्थं पुनर्भगवान् स्रक्ष्यतीत्यत आह (२)। प्राणिनां भोगभूतय इति। प्राणिनां प्राणसम्बन्धयोग्यानां संसारिणामिति यावत्। भोगस्य स्वसमवेतसुखदुःखानुभवस्य भूतये निष्पत्तये(३) महेश्वरस्य सिसृक्षायाः सर्जनेच्छाया अनन्तरं सर्वेष्वात्मसु संसारिषु गताः समवेताश्च ते वृत्तिलब्धा लब्धवृत्तयश्च(४) ये अदृष्टविशेषास्तदपेक्षेभ्यस्तत्संयोगेभ्य आत्माणुसंयोगेभ्यः पवनपरमाणुषु कर्मोत्पत्तौ सत्यां तेषां पवनपरमाणूनां परस्परसंयोगेभ्यो द्व्यणुकमादिर्यस्य प्रक्रमस्य तेन

---

(१) संस्कारानुविद्ध आत्मनस्तावन्तमेव—पा० ३ पु० ॥

(२) भगवान् सृजतीत्यत आह—पा० ३ पु० ॥

(३) स्वसमवेतस्य साक्षात् सुखदुःखानुभवस्य निष्पत्तये—पा० ३ पु० ॥

(४) पूर्वप्रयोगानुरोधेनाह। लब्धवृत्तय इति। भाष्यं त्वार्षमिति भावः। कि० भा० प०॥

भनसि दोधूयमानस्तिष्ठति । तदनन्तरं तस्मिन्ने-वाप्येभ्यः परमाणुभ्यस्तेनैव क्रमेण महान् सलिल-निधिरुत्पन्नः पोप्लूयमानस्तिष्ठति। तदनन्तरं तस्मि-न्नेव जलनिधौ पार्थिवेभ्यः परमाणुभ्यो द्व्यणुका-दिप्रक्रमेण महापृथिवी समुत्पन्ना संहतावतिष्ठ-ते । तदनन्तरं तस्मिन्नेव महोदधौ तैजसेभ्योऽणु-भ्यो द्व्यणुकादिप्रक्रमेणोत्पन्नो महांस्तेजोराशिर्दे-दीप्यमानस्तिष्ठति। एवं समुत्पन्नेषु चतुर्षु महाभू-तेषु महेश्वरस्याभिध्यानमात्रात् तैजसेभ्योऽणुभ्यः

---

महान् वायुः समुत्पन्नो नभस्याकाशे दोधूयमानो भृशं कम्पमा-नः द्रव्यान्तरानुत्पत्तेरप्रतिहतवेगत्वात् पवनजातिनियतत्वाच्च तिर्य्यग्गमनस्वभावस्य । तदनन्तरं पवनोत्पत्तेरनन्तरं तस्मिन्नेव पवने सर्व्वदेगवत्तया गुरुत्वप्रतिबन्धकत्वादाधारभूत इत्यर्थः। आप्येभ्यः परमाणुभ्यस्तेनैव द्व्यणुकादिक्रमेण महान् सलिल निधिरुत्पन्नो भृशं प्लवमानस्तिष्ठति पवनवेगात् । तदनन्तरं सलिलनिधेरुत्पत्तेरनन्तरं तस्मिन्नेव महोदधौ पार्थिवेभ्यः पर-माणुभ्यस्तेनैव द्व्यणुकादिक्रमेण महापृथिवी महती प्राथम्या-त् संपूर्णतया संहता निविडावयवा अविशीर्णतया। तदनन्तरं पृथिव्युत्पत्तेरनन्तरं तेजःपरमाणुभ्यः तेनैव द्व्यणुकादिप्रक्रमे-ण महांस्तेजोराशिः समुत्पन्नस्तिष्ठति अनभिभवादतिशयेन दीप्यमानः। एवमनेन क्रमेणाभिध्यानं संकल्पस्तन्मात्रात्। म तु

पार्थिवपरमाणुसहितेभ्यो महदण्डमुत्पद्यते (१) तस्मिंश्चतुर्वदनकमलं सर्वलोकपितामहं ब्रह्माणं सकलभुवनसहितमुत्पाद्य प्रजासर्गे विनियुङ्क्ते । स च महेश्वरेण विनियुक्तो ब्रह्मातिशयज्ञानवैराग्यैश्वर्यसम्पन्नः प्राणिनां कर्मविपाकं विदित्वा कर्मानु-

---

कुलालादिवत्काय(२)व्यापारादित्यर्थः । तैजसानां परमाणूनां पार्थिवाणुसाहित्येन अण्डस्य हिरण्मयत्वं विवक्षितम् । तस्मिन्नण्डे चत्वारि वदनानि कमलानीव यस्य तं सर्वेषां लोकानां पितामहं शरीरिणामाद्यं ब्रह्माणं सकलभुवनसहितं सकलैरधस्तनैर्भूतलादिभिः उपरितनैर्भूर्भुवादिलोकैः सहितमुत्पाद्य प्रजासर्गे विनियुङ्क्ते त्वमेवं कुर्विति । स चेति । चशब्दः समुच्चये द्विकर्तृकेषु कार्येषु महेश्वरस्यापि कर्तृत्वात् । न च महेश्वरे कर्तरि किं ब्रह्मणेति वाच्यम् । शरीरान्वयव्यतिरेकानुविधायिकार्येण तस्याकथ्यमाणत्वात् । अतिशयेन ज्ञानवैराग्यैश्वर्यैः सम्पन्नः । यद्यज्ञः स्यात् समर्थोऽपि न कुर्यात् । यदि विरागी(३) न भवेत् । न कर्माण्यनुरुन्ध्यात् । तथा च प्राणिनां कृतहानमकृताभ्यागमश्च स्यात् । यद्यनीश्वरो भवेत् जानतोऽप्यस्यापेक्षितं न सिद्ध्येत् । यतस्तु त्रितयसम्पन्नः अतः प्राणिनां यानि कर्माणि तेषां विविधं पाकं विदित्वा । सुता-

---

(१) महदण्डकमारभ्यते—पा० ३ पु० ॥

(२) कार्य—पा० ३ पु० ॥

(३) विरागवान्—पा० ३ पु० ॥

रूपज्ञानभोगायुषः सुतान् प्रजापतीन् मानसान् मनुदेवर्षिपितृगणान् मुखबाहूरुपादतश्चतुरो वर्णानन्यानि चोच्चावचानि भूतानि सृष्ट्वाशयानुरूपैर्धर्मज्ञानवैराग्यैश्वर्यैः संयोजयतीति ॥

---

निति प्रत्येकमभिसम्बध्यते । मानसानिति चायोनिजान् । प्रजापतीन् दक्षादीन् मनून् स्वायम्भुवप्रभृतीन् । देवानादित्यादीन् । ऋषीन् गोतमभरद्वाजादीन् । पितॄन् कव्यवाहनादीन् । गणान् कूष्माण्डादीन्(१) । गणशब्दः प्रत्येकं वाभिसम्बध्यते । अत्र प्रजापतयस्तत्तत्प्रतिनियतप्रजास्रष्टारः । मनवो राजधर्मप्रवर्तयितारः । देवा हविर्भोक्तारः । ऋषयः प्रथमं वेदाध्येतारः । पितरः स्वधाधिकारिणः(२) । गणा बलिभागिनः । मुखेति । मुखाद् ब्राह्मणं बाहुभ्यां राजन्यं ऊरुभ्यां वैश्यं पद्भ्यां शूद्रम् । अन्यान्यपि तिर्यङ्नारकिप्रभृतीनि । उच्चावचान्युत्कृष्टापकृष्टानीति । आशयानुरूपैरिति । फलज्ञानपर्यन्तमाशेरत इत्याशयाः कर्मज्ञानवासनाः तदनुरूपैस्तत्सदृशैर्धर्मज्ञानवैराग्यैश्वर्यैरित्युपलक्षणम् । अधर्माज्ञानावैराग्यानैश्वर्यैस्तत्फलैश्च सुखादिभिः सम्यग् योजयति । यदा त्वीश्वर एव कार्यवशाद् ब्रह्मादिशरीरमुपादत्त इतिपक्षस्तदा नियोगः कायवाङ्मनोव्यापारसिद्धये तत्प्रेरणं प्रयत्नवदात्मसंयोगलक्षणम् । मुखेत्यादिना ब्राह्मणत्वाद्यभिव्यञ्जकव्यक्तिविशेषनिमित्ततत्तददृष्टोपनिब-

---

(१) कूश्माण्डादीन्—पा० ३ पु० ॥

(२) स्वधाभागाधिकारिणः—पा० ३ पु० ॥

द्भूतभेदप्रतिपादनम् । तदेवमियता प्रबन्धेन प्रलयविच्छित्त्यावदृष्टापेक्षैः परार्थप्रवृत्तेन परमेश्वरेणाधिष्ठितैः पृथिव्यादिभिर्विश्वमारभ्यत इति वदता सर्वे पूर्वाक्षेपाः परिहृता बोद्धव्याः । तथाहि । विच्छेदे तद्वचनादाम्नायस्य प्रामाण्यमप्रत्यूहमूहेत । मानसमन्वादिसृष्ट्या चाद्यव्यवहारमुपपादयेत् । अदृष्टापेक्षया वैचित्र्यं समर्थयेत् । परार्थप्रवृत्त्या च निष्प्रयोजनशङ्का(१)मुत्सारयेत् । परमेश्वराधिष्ठानेनाचैतन्यप्रवृत्तिचैतन्यप्रवृत्तिनियमौ च समञ्जसयेदिति (२) । स्यादेतत् । सर्वमेतदीश्वरसद्भावसिद्धौ सम्भवेत् तत्सिद्धावेव किं प्रमाणमिति चेत् । तद्बहुत्वेपि किञ्चिदुच्यते । शरीरानपेक्षोत्पत्तिकं बुद्धिमत्पूर्वकं कारणवत्त्वात् । यत्कारणवत् तद्बुद्धिमत्पूर्वकं यथा रथः । तथा चैतत् तस्माद्बुद्धिमत्पूर्वकमिति । नन्वनुपलब्धपूर्वकोटिकेषु पर्वतादिषु कारणवत्त्वस्याप्रतीतेर्भागासिद्धमिति चेत् न द्रव्येषु सावयवत्वेन तद्गुणेषु कार्यगुणत्वेन कर्मसु कर्मत्वेनैव तदनुमानात् । कारणवत्त्वस्यासर्वज्ञपूर्वकत्वेन सह दृष्टान्ते घटादौ दर्शनात् तद्विपरीतस्य पक्षे विवक्षितत्वात् विरुद्धमिदमिति चेत् न साहचर्यमात्रेणाविरोधात् । कार्यत्वेनानित्यत्वानुमाने रूपसाहचर्यवद्रूपस्याविनाभावाभ्युपगमे त्वसर्वज्ञत्वाद्युपेतकर्तृपूर्वकत्वमुपस्थापयति । हेतौ कस्तद्विपरीतमभिप्रेयात् । यतो विरोधस्सोद्येत । असर्वज्ञस्य शरीरिणः प्रमाणनिरस्तत्वात् । त्वमेव तद्विपरीतमभिप्रैषीति चेत् । नन्वेवमसर्वज्ञेन शरीरिणा

---

(१) निष्प्रयोजनत्वात् शङ्का—पा० ३ पु० ॥

(२) सम्पादयेत्—पा० ३ पु० ॥

हेतोरव्यापनात् कुतस्तद्विपरीतेन विरोधः । तथाविधस्यानुपलब्धेरिति चेत् । सुतरां तर्हि विरोधसिद्धेरसम्भवो जात्यन्धेन रूपस्पर्शयोरिव परस्परधर्मिपरिहारेणाप्रतीतेः । प्रतीतौ वा एकत्र धर्मिणि सहोपलम्भेन विरोधस्य बाधितत्वात् । दर्शनस्पर्शनाभ्यां वायावनुपलम्भेऽपि पृथिव्यादौ रूपसहचरस्पर्शवत् । स्यादेतत् । न हेतुसाध्यविशेषयोर्विरोधं विशेषविरोधमाचक्ष्महे किं नाम व्याप्तिपक्षधर्मताभ्यामानीयमानयोर्विशेषयोरेव विरोधः । तथाहि । व्याप्तिस्तावद्दर्शनबलप्रवृत्ता(१) यथादृष्टं विशेषमुपस्थापयति(२) । नालौकिकमशरीरित्वादि । पक्षधर्मतापि शरीरिणा किञ्चिज्ज्ञेन अनित्यज्ञानादिमता नोपपद्यत इति तद्विपरीतमुपस्थापयति । न चानयोर्विरोधे किञ्चित् सिध्यति । सोऽयं विशेषविरोध इति । तदपि नास्ति । स्वरूपेणानयोरविरोधात् । परस्परानपेक्षायां विशेषानुपस्थापनात् । न हि यो धूमवान् स वह्निमानिति केवलया व्याप्त्या किञ्चिदुपनीयते । तथा सति पक्षधर्मतावैयर्थ्यात् नाप्ययं धूमवानित्यनया पक्षधर्मतया नियमानपेक्षया किञ्चिदुपस्थाप्यते । तथा सति व्याप्तिवैयर्थ्यादिति । किन्तु परस्परसहकारितया । तथा च निरपेक्षतादशायां विशेषानुपस्थानादेव विरोधासिद्धिः । सापेक्षतादशायां सहोपलम्भादेवेति(३) । नन्वलौकिकं विशेषमुपस्थापयति पक्षधर्मता । न चासौ लौकिकं व्याप्त्या-

(१) दर्शनवशात् प्रवृत्ता—पा० ३ पु० ॥

(२) विशेषमुपनयति—पा० ३ पु० ॥

(३) धूमवानित्यनया पक्षधर्मतया विशेषस्योपस्थापितत्वात् क्व विरोधः—इत्यधिकं ३ पु० । सापेक्षदशायां तूभयापेक्षतयार्थसमर्थकत्वादेव न विरोधः—पा० २ पु० ॥

नुस्मारितं(१) सहत इति ब्रूमः। ततः किम्। स(२) न सिद्धेर-दिति चेत्। कोनु तं साधयितुमुद्यतः। अनेनैव(३) विरोधेना-न्योपि न सिद्धेरदिति चेत्। तदिदमायातं द्व्यणुकगतं कार्यत्वं कार्यसमवायिकारणत्वं न सहत इत्यकार्यमपि न भविष्यतीति। स्यादेतत्। साध्यांशविशेषयोर्विरोधं विशेषविरोधमाचक्ष्महे। तथाहि। नित्यत्वं आकाशादौ ज्ञानत्वपरिहारेण सिद्धं ज्ञानत्वं च नित्यत्वपरिहारेणास्मदादिज्ञाने तथा कर्तुः शरीरित्वं कुविन्दादेरशरीरस्याकर्तृत्वं मुक्तस्य। तदनयोर्ज्ञानत्वनित्यत्वयोः कर्तृत्वाशरीरित्वयोश्चैकधर्मिसंसर्गो विरुध्यते इति। एतदपि नास्ति। उपसंहारस्थानस्यै(४)कस्य धर्मिणो ऽप्रतीतेः। न ह्युष्णत्वशीतत्वे पयःपावकयोरेव विरुद्धे। किन्त्वेकत्र पयसि तेजसि वा पृथिव्यां वा एकत्रोपसंह्रियमाणे तदेते अपि नित्यत्वज्ञानत्वे धर्मिभेदेनाविरुद्धे ऽपि अस्मदादिबुद्धौ गगने चोपसंहाराद्विरुद्धे इति विवक्षितमायुष्मतः। अशरीरित्वकर्तृत्वे वा कुलालादौ शुकादौ चोपसंहाराद्विरुद्धे इत्यभिमतं चिर-

---

(१) व्याप्त्यनुस्मारितमिति प्रकाशकारसम्मतः पाठः। व्याप्त्यनुस्मरणाविषयीकृतमित्यर्थः। कि० प्र० व० ॥

(२) स इति। लौकिको विशेष इत्यर्थः। कि० प्र० व० ॥

(३) अनेनैवेति। लौकिकविशेषविरोधेनालौकिकोपि विशेषोशरीरित्वादिर्न सिद्ध्येदित्यर्थः। कि० प्र० व० ॥

(४) उपसंहारस्थानस्येति। ननु न व्याप्तिपक्षधर्मतोपस्थाप्यमानेन विरोधं ब्रूमः। किन्तु ज्ञानमनित्यमिति व्याप्तिग्राहकमानेन। एतेन व्याप्त्योर्न विरोधः। कार्यं सकर्तृकमिति व्याप्तिः पक्षधर्मतासाचिव्यात् बलीयसी कर्ता शरीर्येवेत्यत्र व्याप्तौ तदभावान्न सा तथेति तुल्यबलत्वाभावादिति निरस्तम्। कि० प्र० व० ॥

जीविनो न नः किञ्चिदनिष्टमापद्यते । न हि नित्यत्वमूर्त्तत्वे नभसि घटादौ वा विरुद्धे इति परमाणुसाधनस्य किञ्चिदपि हीयते । अथेश्वरात्मनि तज्ज्ञाने चोपसंहारादनयोर्विरोधोऽभिधातुमभिलषितः । स तर्हि मूर्तत्वनित्यत्वयोः परमाणाविव धर्मिसाधकेनैव बाधित इति बुद्ध्यस्वेति नास्ति विरोधगन्धोऽपि विशेषविरोधोदाहरणं(१) तु चन्दनदहनवानयं सुरभिधूमवत्त्वादिति द्रष्टव्यम् । स्यादेतत् । व्यापका(२)नुपलब्धिबाध एव विशेषविरोध इत्युच्यते । तथाहि । कर्तृत्वव्यापकं शरीरादि तच्चातो व्यावर्तमानं कर्तारमपि व्यावर्तयति । तृणादिविकारकारित्वेन हिमस्य वह्निमत्त्वसाधने तद्व्यापकमौष्ण्यमिव व्यावर्तमानं अग्निसत्त्वमिति चेत् । नैतदपि साधीयः । कस्य हि किमत्र व्यापकं किं कर्तुः शरीरित्वादिकम् आहोस्वित्कार्यस्य शरीरादिमत्कर्तृपूर्वकत्वं प्रथमे नेश्वरः कर्ता शरीरादिरहितत्वादिति प्रमाणार्थः स्यात् । तथा चाश्रयासिद्धिः । धर्मिग्राहकप्रमाणबाधो वा । सावयवाः परमाणवो मूर्तत्वादितिवत् । द्वितीयस्तु नियमः प्रत्यग्रजायमानाङ्कुरादाविव शरीरिणः कर्तुरनुपलम्भेन निरस्तः । दृष्टान्तस्तु सर्वथैवानुपपन्नः । तृणादिविकारो हि यदि रूपादिपरावृत्तिमात्रहेतुः स नूनमौष्ण्यापितेन तेजसा कर्तव्यः । तादृशे च पाकेऽनिमित्तं हिममिति । न किञ्चिदनिष्टमापद्यते । न हि सौ-

(१) विशेषविरुद्धेति । यत्र साध्यसाधनविशेषणयोर्विरोध इत्यर्थः । कि० प्र० व० ॥

(२) व्यापकेति । कर्तृव्यापकशरीरस्य यानुपलब्धिस्ततो बाध इत्यर्थः । कि० प्र० व० ॥

रस्य तैजसस्त्रैलोक्यपाकहेतोर्हिमादपगमः क्षमते(१) । अथ विकारो भस्मादिरूपो विवक्षितः सोऽसिद्ध एव हिमहतेषु तृणादिषु क्व विरोधी बाधो वा । अथ रूपादिपरावृत्तिमात्रेणैवाग्निः साध्यते तदशक्यम् । तस्य दर्शनस्पर्शनग्राह्यस्य योग्यानुपलम्भबाधितत्वात् अतादृशस्य तैजोमात्रस्य निवृत्तेरशक्यत्वादनिष्टत्वाच्च । तस्माद् व्यापकानुपलब्ध्या अनुमानं बाध्यत इति रिक्तं वचः । सत्प्रतिपक्षस्तु कथं चित् स्यात् । अग्निमद्धिमं तृणादिविकारहेतुत्वात् । निरग्निकं हिमं तथाविधोष्णरहितत्वादिति । अस्तु तर्हि तदेव प्रकृतं । शरीरानपेक्षोत्पत्तिकं अकर्तृपूर्वकं शरीरानपेक्षोत्पत्तिकत्वात् गगनवदिति । नैतदेवं शरीरानपेक्षाया उत्पत्तेरसाधारणत्वात् सकर्तृकाद्घटादेरिवाकर्तृकादाकाशादेरपि (२) व्यावृत्तत्वात् उत्पत्तिव्यावृत्तिमात्रस्य चासिद्धेः । शरीरादनुत्पत्तेश्चासमर्थविशेषणत्वात् । सपक्षे गगनादावनुत्पत्तिमात्रस्यैव व्याप्यत्वनिश्चयात् । निश्चितव्याप्तेश्च पक्षोपनयनात् । अन्यथातिप्रसङ्गात् । स्यादेतत् । यथा ज्ञानस्य नित्यत्वे शरीरापेक्षा नास्ति ज्ञानगतकार्यत्वप्रयुक्तत्वाच्छरीरसम्बन्धस्य । तथा प्रयत्नस्य नित्यत्वे ज्ञानापेक्षापि न स्यात् प्रयत्नगतकार्यत्वप्रयुक्तत्वात् ज्ञानसम्बन्धस्येति । तर्कापरिशुद्धिरस्तु दूषणमिति चेत् । तदप्यसारम् । ईश्वरमधिकृत्य तर्काणामाश्रयसिद्ध्यसिद्धिभ्यामनवसरदुःस्थत्वात् । य-

---

(१) क्रियत—पा० २ पु० ॥

(२) आकाशादेरिति । तत्रोत्पत्तिरेव न कुत्र शरीरानपेक्षेत्यर्थः । ननु शरीरापेक्षोत्पत्तिराहितत्वं हेतुः स चाकाशादावस्त्येवेत्यत आह । शरीरादनुत्पत्तेश्चेति । कि० प्र० व० ॥

दीश्वरः कर्त्ता स्यात् शरीरी स्यात् अनित्यज्ञानवांश्च भवेत् । यदीश्वरस्य प्रयत्नः स्यादनित्यः स्यात् । यदीश्वरप्रयत्नो नित्यः स्यात् ज्ञानानपेक्षः स्यात् । यदीश्वरस्य बुद्धिः स्यात् असर्वविषया भवेदित्यादयो हि ते क्षित्यादिकमधिकृत्य विपर्ययापर्यवसानात् । यदि विवादाध्यासितं बुद्धिमद्धेतुकं अभविष्यत् अनित्यप्रयत्नहेतुकतामापत्स्यत । शरीरजन्यं वाऽभविष्यत् असर्वज्ञकार्यं चेत्यादयो हि ते तद्विपर्ययाश्च(१)समर्थविशेषणत्वेन प्रागेव निरस्ताः । न च प्रयत्नेन बुद्धिरिह साध्यते बुद्ध्या वा प्रयत्नः इतरव्यावृत्त्या वान्यतरव्यावृत्तिर्येनैतत्सम्बन्धौपाधिकत्वं चोद्यमवकाशमासादयेत् । किन्तु धूमवत्त्वेनार्द्रेन्धनप्रभवदहनवत्त्वमिव कार्यत्वेन परिदृष्टसामर्थ्यकारकचक्रप्रयोक्तृमत्त्वम् । तथा च साध्यांशयोर्ज्ञानप्रयत्नयोर्दहनार्द्रेन्धनयोरिव सोपाधिरपि सम्बन्धो हेतुं न दूषयति । तस्य साध्यसम्बन्धे निरुपाधिकत्वादिति । ननु कारणविशेषादवश्यं(२) कार्ये विशेषेण भवितव्यम् । अस्ति च केषुचिच्छरीरादि कारणं ततोपि विशेषः स्यात् । अवश्यं चैतदभ्युपगन्तव्यम् । अन्यथा शरीरिकर्तृत्वानुमानं न स्यात् । स च विशेषोपदृष्टेरक्रियादर्शिनोपि कृत-

---

(१) तद्विपर्ययाश्चेति । क्षित्यादिकं न बुद्धिमद्धेतुकमानित्यप्रयत्नाजन्यत्वादित्यादौ व्यर्थविशेषणत्वमजन्यत्वस्यैव साध्यव्याप्यत्वादित्यर्थः । न चेति । यदि प्रयत्नेन बुद्धिं बुद्धिनिवृत्त्या वा प्रयत्ननिवृत्तिं साधयेत् तदा ज्ञानसम्बन्धे प्रयत्नगतं कार्यत्वमुपाधिः स्यात् । न चैवमपि तु यथा धूमेनैकदैवार्द्रेन्धनप्रभववह्निमत्त्वं साध्यते तथा कार्यत्वेनैकदैव प्रयत्नबुद्धिसाधनमित्यर्थः । कि० प्र० व० ॥

(२) अवश्यमिति । कार्ये विशेषस्याकस्मिकत्वापत्तेरित्यर्थः । कि०प्र०व० ॥

बुद्धिरुत्पद्यते । तदित्यदूरविप्रकर्षेणोच्यते । ततः स एव कर्तारं प्रयोजयति । कार्यत्वसामान्यं तु तत्प्रयुक्तां व्याप्तिमुपजीवतीति न विशेषस्य विशेषं प्रत्येव प्रयोजकत्वे सामान्यं प्रत्यनुपाधित्वात् । अन्यथा घटादिष्ववान्तरविशेषेषु सत्सु यद्दृष्टेरित्याद्युपलब्धितोपि विशेषस्तु तत्प्रयुक्तां व्याप्तिमुपजीवतीत्यप्रयोजकः स्यादिति यत्किञ्चिदेतत् । तर्कस्तु(१) यदि कार्यं कर्तारमतिपतेत् तत् कारणान्तरमप्यतिपतेत्(२) । तथा च कार्यत्वादेव हीयत इति संक्षेपः । विस्तरस्तु(३) न्यायकुसुमाञ्जलावात्मतत्त्वविवेके चाध्यवसेय इति । अस्तु तावदेवं विशेषस्य तु कुतः सिद्धिः । यथा ह्यप्रतीतेन विरोधादि प्रत्येतुमशक्यम् । तथा तस्य साधनमप्यशक्यम् । लब्धरूपं हि क्वचित् किञ्चिद्विधीयत इति चेत् । न । साधनसामान्यसम्बन्धबलेन साध्यसामान्यविधावुपक्रान्ते तत्सहकारिपक्षधर्मताबलेनाप्रतीते विशेषे

---

(१) तर्कस्त्विति । विवादपदं कर्तृजन्यं यदि न स्यात् जन्यं न स्याद् व्योमवदित्यर्थः । कि॰ प्र॰ व॰ ॥

(२) अतिक्रामेत् – पा॰ ४ पु॰ ॥

(३) ननु शरीरजन्यत्वमुपाधिरस्तु । न च पक्षमात्रव्यावर्तकविशेषणकत्वात् साधनविशेषितत्वात् साधनतुल्ययोगक्षेमत्वाच्च तन्नोपाधिः । प्रकृते तादृशानुपाधिताबीजस्य साध्यव्यापकताग्राहकमानाभावस्य भावात् । शरीरसहकृतस्यैव कर्तुः कार्यजनकतया कार्यकारणभावस्य साध्यव्यापकताग्राहकत्वात् । अत एव बाधोन्नीतः पक्षेतरवह्निमत्त्वे आर्द्रेन्धनप्रभववह्निमत्त्वसम्बन्धेन जलस्य गन्धवत्त्वे पृथिवीत्वमुपाधिर्भवति तेषां साध्यव्यापकताग्राहकतामानसत्त्वादित्यत आह । विस्तरस्त्विति । शरीरजन्यत्वं नोपाधिः हस्तादिजन्यकार्ये साध्याव्यापकत्वात् । साक्षात्प्रयत्नाधिष्ठेयजन्यत्वस्य च साधनव्यापकत्वात् । अदृष्टपरमाण्वादीनामीश्वरेण साक्षात् प्रयत्नाधिष्ठानादित्याद्यन्यत्र विस्तर इत्यर्थः । कि॰ प्र॰ व॰ ॥

पर्यवसानात् । सामान्यसङ्गतिबलप्रवृत्तानां पदानामाकाङ्क्षादिसहकारिलब्धेऽलौकिक इव वाक्यार्थ इति प्रमाणवृत्तम् । अन्यथा न किञ्चित् क्वचिदप्रतीतं प्रतीयेतेति । अत्र कश्चिदाह । कृतं तर्हि केवलव्यतिरेकिणा अन्वयिन एवाष्टद्रव्यातिरेकादेरपि सिद्धेः । तदसत् । आकाङ्क्षानुपपत्तिभ्यां विशेषव्यवस्थापनात् । शाब्दो ह्यर्थो यावता विना नान्वयमुपैति तावन्तमनालभ्य प्रतीतेरपर्यवसानमत्राकाङ्क्षेत्युच्यते । तावानवधिरन्वयिनस्तत्प्रतीतौ पर्यवसितायां क्वचिद्विशेषे प्रमाणान्तरबाधोनुपपत्तिश्च तावती सीमा व्यतिरेकिणः । तदत्र नगादिद्व्यणुकपर्यन्तपक्षीकरणे तत्कारणपरमाण्वादिविषयं ज्ञानं यदि न स्यात् कः शब्दार्थो नगसागरादि सकर्तृकमिति । परिदृष्टसामर्थ्यकारकचक्रप्रयोक्तुः कर्तृशब्दवाच्यत्वात् । एवं सर्गादिकार्यपक्षीकरणे तत्काले यदि न शरीराद्यनपेक्षं ज्ञानं कोऽर्थः सर्गादि कार्यं बुद्धिमत्पूर्वकमिति । सर्गसन्निहितो हि शरीरेन्द्रियविषयग्रामविरहोपलक्षितः कालः सर्गादिरित्युच्यते । तस्माद्विशेषप्रतीत्या सामान्यप्रतीत्यपर्यवसानादिह पक्षधर्मतासहायात् कार्यत्वादेव नित्यसर्वज्ञकर्तृत्वसिद्धिः । इच्छादयः क्वचिदाश्रिताः कार्यत्वाद्गुणत्वाद्वेत्यत्र त्वष्टद्रव्यातिरिक्तपारतन्त्र्यमप्रतीत्य शब्दार्थो न प्रतीयत इति नास्ति । न ह्याश्रयादिशब्दाः क्षित्याद्यतिरिक्तार्थाः(१) क्षित्यादिविरुद्धार्था वा येन तत्प्रतिक्षेपनियमेनेच्छादिपदार्थानामन्वयः । प्रमाणान्तरबाधपर्यालोचनादनुपपत्तिरि(२)त्यन्यदेतदिति ॥

---

(१) क्षित्यादिव्यतिरिक्तार्थाः — पा० ४ पु० ॥

(२) पर्यालोचनयानुपपत्ति — पा० ४ पु० ॥

**आकाशकालदिशामेकैकत्वादपरजात्यभावे सति पारिभाषिक्यस्तिस्रः संज्ञा भवन्ति। आकाशं कालो दिगिति। तत्राकाशगुणाः शब्दसंख्याप-**

---

आकाशनिरूपणप्रसङ्गेन(१) कालदिशोरुपन्यासः । आकाशकालदिशामिति । पारिभाषिक्यो निमित्तमन्तरेण शृङ्गग्राह्िकतया तिस्रः संज्ञा भवन्ति। आकाशं कालो दिगिति। कुतो हेतोरित्यत आह। अपरजात्यभावे सतीति। अपरजातीनामाकाशत्वादीनामभावादित्यर्थः । तदेव कुत इत्याह। एकैकत्वाद् व्यक्तिभेदाभावात् । नित्यमेकमनेकव्यक्तिवृत्ति (२) सामान्यमितिलक्षणव्याघातेन स्वरूपव्याघातप्रसङ्गादिति भावः । तथापि पारिभाषिकत्वमनुपपन्नमतीन्द्रियत्वेन स्वरूपनिर्देशानुपपत्तेः । यः शब्दाश्रयस्तदाकाशमित्येवं तु शब्दाश्रयत्वमेवोपाधिः स्यात्। न । शब्दाश्रयत्वस्योपलक्षणतया तटस्थत्वात्। अयमसौ देवदत्त इत्यत्रेदंतावत् । अन्यथा शब्दगुणमाकाशमिति सहप्रयोगो न स्यात्। यद्येवमाकाशादिशब्देभ्यः परस्य त्वतलादेर्निरर्थकत्वमापद्येत इति चेत्। न। आकाशस्य स्वरूपमितिवदौपचारिकत्वाद् व्यावृत्तिपरत्वाद्वेति। तस्य द्रव्यत्वव्यवस्थितये स्वरूपस्थितये(३) च गुणानाह। तत्रेति। तास्वाकाशकालदिक्षु मध्ये तत्र आकाशस्य शब्देन स्वरू-

---

(१) प्रसङ्गात् – पा० ४ पु० ॥

(२) अनेकवृत्ति – पा० ३ पु० ॥

(३) तस्य स्वरूपस्थितये द्रव्यत्वसिद्धये – पा० ४ पु० ॥

रिमाणपृथक्त्वसंयोगविभागाः। तत्र शब्दः प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वादयावद्द्रव्यभावित्वा-

---

पं संख्यादिना द्रव्यत्वं च व्यवस्थाप्यते। अरूपतया चक्षुषस्तत्राप्रवृत्तेः(१) तस्य रूपयोग्यतामुपादायैव द्रव्यग्राहकत्वात् अन्यथा आत्मनोपि चाक्षुषत्वप्रसङ्गात्। कथं तर्हीह पक्षी नेह पक्षीति प्रत्यय इति चेत्। आलोकमण्डलमाश्रित्येति ब्रूमः तथापीहालोको नेहालोक इति कथमिति चेत्। तदवयवानाश्रित्येति यत्किञ्चिदेतत्(२)। कथं पुनः शब्दस्तत्स्वरूपव्यवस्थापक इत्यत आह। शब्द इति। शब्दो न स्पर्शवद्विशेषगुणः प्रत्यक्षत्वे सति अकारणगुणपूर्वकत्वात्। योपि हि स्पर्शवद्विशेषगुणं शब्दमिच्छति सोऽपि स्थूलवीणाद्याश्रय(३)मिच्छेत्। न तु(४) परमाण्वाद्याश्रयमप्रत्यक्षत्वप्रसङ्गात्। परमाणुगुणानामतीन्द्रियत्वात्। तथा च स्थूलाश्रयस्य सामान्यवतः कार्यत्वेन सामान्यादित्रयव्यवच्छेदे स्पर्शरहिततया च कार्यद्रव्यत्वव्यावृत्तौ(५) प्रतिनियतेन्द्रियग्राह्यतया च सामान्यगुणत्वकर्मत्वानुपपत्तौ विशेषगुणत्वमुभयवादिसिद्धम्। स्पर्शवद्द्रव्यं प्रति शब्दस्य तत्प्रतिषेधः प्रतिज्ञायते। न स्पर्शवद्विशेषगुण इति। अत्र हेतुरकारणगुणपूर्वकत्वादिति। स्पर्शवतां शङ्खादी-

---

(१) अचाक्षुषस्तत्राप्रतीतेः—पा० ४ पु० ॥

(२) किञ्चिदिदम्—पा० ४ पु० ॥

(३) वीणाशङ्खाद्याश्रय—पा० ४ पु० ॥

(४) न च—पा० ४ पु० ॥

(५) बहिरिन्द्रियप्रत्यक्षद्रव्यत्वव्यावृत्तौ—पा० ४ पु० ॥

दाश्रयादन्यत्रोपलब्धेश्च न स्पर्शवद्विशेषगुणः ।

---

नां यानि समवायिकारणानि तेषां ये गुणास्तदनपेक्षत्वात् । ये पुनः स्पर्शवद्विशेषगुणा न ते तदनपेक्षाः यथा रूपादय इति केवलव्यतिरेकी । अत्र च पिठरपाकानभ्युपगमात् न तद्विशेषगुणैर्विरोधः । परमाणुगुणैस्तु स्यात् । तन्निषेधार्थमाह । प्रत्यक्षत्वे सतीति । हेत्वन्तरमाह । अयावद्द्रव्यभावित्वादिति । सत्स्वेव वंशशङ्खादिषु तन्निवृत्तेः(१) ये पुनस्तेषां विशेषगुणाः न ते तेषु सत्सु निवर्तन्ते । यथा रूपादयः। अत्रापि पूर्ववत् प्रत्यक्षत्वे सतीत्यनुषञ्जनीयम् । अन्यथा परमाणुगुणैरेव विरोधः स्यात् । सुखादीनामात्मगुणत्वसिद्धावन्वयोऽपि द्रष्टव्यः । अनयोस्तर्कं सूचयति । आश्रयादन्यत्रोपलब्धेरिति । आश्रयाभिमताच्छङ्खादेरन्यत्र कर्णशष्कुल्यवच्छिन्ने नभस्युपलब्धेः। यदि हि शङ्खाद्याश्रयः शब्दः स्यात् तत्पिधाने नोपलभ्येत कर्णविवरापिधान इव सर्वदैवाप्राप्तेः अप्राप्तस्य च ग्रहणे सर्वत्र सर्वदैव सर्वैः सर्वशब्दोपलम्भप्रसङ्गः । न च शङ्खश्रवसोः प्राप्तिरस्ति । न चाश्रयानपेक्षा एव गुणाः परेण प्राप्यन्ते तस्माच्छङ्खादीनि निमित्तान्यपहाय द्रव्यान्तरे वर्तमानो वीचीतरङ्गन्यायेन कर्णशष्कुल्यवच्छिन्नमाकाशादिदेशं प्रत्यासन्न उपलभ्यते(२) । अन्यथा त्वनुपलब्धिप्रसङ्गः । ननु वायुगुणोपि भविष्यतीति । अन्यथापि भेर्यादिषु ताडितेषु यावद्वेगमभिप्रतिष्ठमानः पवनो निमित्तीभविष्यतीत्यभ्युपगमः(३) । वदन्ति च केचिद्वायुरापद्यते शब्द-

---

(१) सत्स्वेव शङ्खादिषु निवृत्तेः – पा० ४ पु० ॥

(२) आपन्न उपलभ्यते – पा० ४ पु० (३) भविष्यतीत्युपगमः – पा० ४ पु० ॥

**वाह्येन्द्रियप्रत्यक्षत्वादात्मान्तरग्राह्यत्वादात्मन्यस-**

---

तामिति । न । श्रोत्रस्य प्रतिनियतार्थग्राहकत्वेन वहिरिन्द्रियत्वात् । वहिरिन्द्रियस्य च प्रतिनियतग्राह्यजातीयविशेषगुणवत्त्वनियमात् । अन्यथा सर्वस्य सर्वार्थत्वेऽन्धबधिराद्यभावप्रसङ्गात् । एकस्य सर्वार्थत्वे तद्व्यावृत्तौ गुणान्तरानुपलम्भप्रसङ्गात् । तथा च शब्दस्य वायवीयत्वे श्रोत्रस्यापि वायवीयत्वप्रसङ्गः । ततः किमिति चेत् । एकस्य स्पर्शशब्दग्राहकत्वे ऽनेकार्थतया वाह्यत्वव्यघातः(१) वाह्यत्वे चानेकार्थत्वानुपपत्तिः । वायवीयत्वाविशेषेपि त्वक्श्रोत्रयोर्व्यक्तिभेदात् प्रतिनियतार्थत्वाविरोध इति चेत् । न । प्रतिशरीरं घ्राणादीनां व्यक्तिभेदेपि विषयवैचित्र्यादर्शनात् अदृष्टवैचित्र्यादेवमपि स्यात् । को विरोध इति चेत् तर्हि पार्थिवैकप्रकृतीनामेवादृष्टवैचित्र्यादुत्पादकवैचित्र्यं विषयव्यवस्थायै भविष्यतीति कृतं रसनादीनां प्रकृत्यन्तरकल्पनया । वाह्यानुसारेण तत्र तथेति चेत् समः समाधिः । तस्माद्यथोक्तहेतुभ्यां शब्दो न स्पर्शवद्विशेषगुण इति । आत्मगुणो भविष्यतीत्यत आह । नात्मगुणः । कुत इत्यत आह । वाह्येन्द्रियप्रत्यक्षत्वात् । मनसोऽन्यदिन्द्रियं वाह्येन्द्रियं तत्प्रत्यक्षत्वात् गन्धादिवदित्यन्वयी । वाह्येन्द्रियत्वं श्रोत्रस्य प्रतिनियतविषयत्वाच्चक्षुर्वत्(२) । आत्मगुणानां वाह्येन्द्रियेण ग्रहीतुमयोग्यत्वात् । अन्यथा बुद्ध्यादीनामपि तथात्वप्रसङ्गः । हेत्वन्तरमाह । आत्मान्तरग्राह्यत्वादिति । यत्रस्थः शब्दस्ततोऽन्य आ-

---

(१) व्याघातप्रसङ्गात् – पा० ४ पु० ॥

(२) नियतार्थग्राह्यत्वात् सिद्धम् – पा० ४ पु० ॥

# मवायादहङ्कारेण विभक्तग्रहणाच्च नात्मगुणः ।

---

त्मा आत्मान्तरं तद्ग्राह्यत्वादित्यर्थः। वीणाद्याश्रयो हि(१) शब्दः प्रतीयते तत्सन्तानद्वारेण(२) श्रोत्रस्थो वा तस्मादन्यश्चास्य ग्राहकः। ये त्वात्मगुणा गृह्यन्ते ते च(३) ग्राहकस्था एव गृह्यन्ते। यथा सुखादयः। गृह्यमाणस्तु शब्दो न ग्राहकस्थ इति। तदेव कुत इति चेदत आह । आत्मन्यसमवायात् ग्राहकासमवायात् (४) । इदमप्यसिद्धमत आह । अहङ्कारेण विभक्तस्य व्यधिकरणस्य ग्रहणात् । वीणा वाद्यते वेणुः पूर्यते न त्वहं वाद्ये अहं पूर्ये वेति कस्यचित्प्रत्ययः । अहङ्कारेण व्यधिकरणस्याप्यात्मसमवायेन गन्धादीनामपि तथात्वप्रसङ्गः। अन्ये(५) त्वात्मान्तरग्राह्यत्वादिति अनेकप्रतिपत्तृसाधारणत्वादिति हेत्वर्थं वर्णयन्ति स तु सन्दिग्धासिद्धः । सन्तानानुमानेन मूलप्रत्यभिज्ञानान्नैष दोष इति चेत्। तर्हि सुखादीनामप्यनुमानेनानेकप्रतिपत्तृसाधारणप्रत्यभिज्ञानविषयत्वादनैकान्तिको हेतुः स्यात् । आत्मसमवेतस्यैव वीचीतरङ्गन्यायेन मूलप्रत्यभिज्ञानोपपत्तौ विपक्षे बाधकाभावाच्च । तस्माद्यथाव्याख्यातमेवास्तु। न दिक्कालमनसां विशेषगुण इति शेषः। तत्र हेतुः श्रोत्रग्राह्यत्वादिति। अत्र श्रोत्रेति स्वरूपकथनमात्रम्। ग्राह्यत्वात् प्रत्यक्षत्वादित्येव हेतुः गन्धादिवदिति । आ-

---

(१) वीणाद्याश्रयतया – पा० ४ पु० । (२) न्यायेन – पा० ४ पु० ॥

(३) आत्मस्था – इत्यधिकम् – पा० ४ पु० ।

(४) ग्राहके ऽसमवायात् – पा० ४ पु० ॥

(५) न्यायकन्दल्यां मतमिदं दृश्यते ॥

**श्रोत्रग्राह्यत्वाद्वैशेषिकगुणभावाच्च(१) न दिक्कालमनसाम्। पारिशेष्याद्(२) गुणो भूत्वा आकाशस्याधिगमे लिङ्गम्। शब्दलिङ्गाविशेषादेकत्वं सिद्धम्।**

---

तद्गुणत्वे शब्दस्य मनसः श्रोत्रस्य साङ्कर्यप्रसङ्गः। दिक्कालमनोगुणत्वे च शब्दस्य विशेषगुणत्वव्याघातः। हेत्वन्तरमाह। विशेषगुणभावाच्चेति (३)। दिक्कालमनसामिति वाक्यशेषः। प्रयोगस्त्वयं शब्दो न दिक्कालमनसां गुणः विशेषगुणत्वाद् गन्धादिवदिति तद्गुणत्वे शब्दस्य तेषां तत्त्वव्याघातः। धर्मिग्राहकेण प्रमाणेन तेषां विशेषगुणप्रतिक्षेपादिति। ननु यदि नाम शब्दः पृथिव्यादीनामष्टानां गुणो न भवति माभूत् आकाशं तु नवममस्तीति किं प्रमाणमत आह। पारिशेष्याद्गुणो भूत्वा आकाशस्याधिगमे लिङ्गमिति। अयमर्थः। शब्दस्तावद्द्रव्याश्रितो गुणत्वाद्रूपवदिति। सामान्यतो द्रव्यत्वसिद्धौ शब्दाश्रयत्वेनाकाशसंज्ञायां विनिवेशितायां तदाकाशं पृथिव्यादिभ्यो व्यावर्त्तते(४) शब्दाश्रयत्वात् यः पुनः न पृथिव्यादिभ्यो भिद्यते नासौ शब्दाश्रयो यथा पृथिव्यादय एव। न च नायं शब्दाश्रयः तस्मादितरेभ्यो भिद्यते। यथा च पृथिव्यादिषु शब्दो न समवैति तथोक्तमधस्तादिति निरवद्यम्। सोऽयं परिशेषो व्यतिरेकः तदिदमुक्तं गुणो भूत्वेति। एवमाकाशस्य स्वरूपे सिद्धे शब्दगुणत्वे च गुणान्तराण्यस्यैवाह। शब्दलिङ्गाविशेषादिति।

---

(१) वैशेषिकगुणभावाच्च इति क्वचित् (२) परिशेषात् — पा० २ पु०।
(३) वैशेषिकगुणभावात् — पा० ३ पु०। (४) भिद्यते — पा० ४ पु०॥

तदनुविधानात् पृथक्त्वम् । विभववचनात् परम-

---

यद्यपि द्रव्यत्वादेव सामान्यतः संख्यायां सिद्धायामेकत्वमपि सिद्धं न ह्येकत्वमन्तरेणासमवायिकारणनिरपेक्षं(१) द्वित्वादिकमपि सिध्यति । भवितव्यं च तत्र द्वित्वादिना पृथिव्यादीनां नवानां षण्णां त्रयाणामित्यादेर्व्यवहारस्य(२) बाधकं विना संख्यादिनिमित्तकत्वात् (३) । अन्यथा पृथिव्यादिष्वपि सा न स्यात् । तथापि शब्दाश्रयस्य द्रव्यस्यानेकत्वव्यवच्छेदेन नियतमेकत्वं(४) साधयितुमयमारम्भः तच्च वैभवे सति शब्दलिङ्गमविशिष्टं सत्साधयति । सर्वेषामेव शब्दानां तदेकाश्रय(५)-तयैवोपपत्तौ आश्रयान्तरकल्पनायां कल्पनागौरवप्रसङ्गात् श्रोत्रव्यवस्थाप्यदृष्टव्यवस्थयैवोपपद्यत इति वक्ष्यमाणत्वादिति । तदनुविधानात् पृथक्त्वमिति । एतदपि पूर्ववत् । द्रव्यत्वेन सामान्यतः परिमाणसिद्धौ सत्यामाह । विभववचनादिति । विभवान्महानाकाशस्तथा चात्मेति सूत्रकारवचनात् । विभवो विभुत्वं सर्वैर्मूर्त्तिमद्भिः सह संयोगः । तस्मात् परममहत्परिमाणम् । परिमितस्य सर्वसंयोगानुपपत्तेः (६) । परममहदिति भावप्रधानो निर्देशः । अथवा परममहतो द्रव्यस्य परिमाणं परममहत्परिमाणमिति षष्ठीसमासः(७) । सामानाधिकरण्ये हि परममहापरिमाणमिति स्यात् । अथ विभुत्वस्य कुतः सिद्धिः ।

---

(१) कारणानपेक्षं – पा० ४ पु० । (२) इत्यादिव्यवहारस्य – पा० ४ पु० ।
(३) निमित्तत्वात् – पा० ४ पु० । (४) नियमेनैकत्वं – पा० ४ पु० ।
(५) अभिन्नाश्रय – पा० ४ पु० । (६) अपरिमितस्य संयोगानुपपत्तेः – पा० ४ पु० ।
(७) षष्ठीतत्पुरुषः – पा० ४ पु० ।

**महत्परिमाणम्। शब्दकारणत्ववचनात् संयोग-विभागाविति। अतो गुणवत्त्वादनाश्रितत्वाच्च द्रव्यम्। समानासमानजातीयकारणाभावाच्च नि-**

---

स्पर्शशून्यत्वे सति प्रत्यक्षगुणाश्रयत्वादात्मवत्। अन्यथा परमाणुत्वे प्रत्यक्षगुणाश्रयत्वविरोधात् अवयवित्वे स्पर्शशून्यत्वविरोधात्। शब्दकारणवचनात् संयोगविभागौ संयोगाद्विभागाच्छब्दाच्च शब्दनिष्पत्तिरिति(१) सूत्रकारवचनात् संयोगविभागौ। यद्यपि द्रव्यत्वेनैव संयोगविभागयोः सिद्धिः। तथापि विपक्षे बाधकं वक्तव्यमिति तदुच्यते। यदि संयोगविभागौ नभसि न स्याताम् असमवायिकारणाभावाच्छब्दो नोत्पद्येत (२)। यद्यपि धर्मिग्राहकादेव प्रमाणात् द्रव्यत्वमस्य सिद्धम् तथापि संख्यादिना गुणेनापि तत्साधयितुं शक्यमिति तदप्याह। अत इति। गुणवतोऽप्यद्रव्यत्वे तल्लक्षणव्याघातादिति। अनाश्रितत्वादिति। आश्रयैकस्वभावत्वादित्यर्थः (३)। अन्यथा समवायेन व्यभिचारः स्यादिति। आश्रयैकस्वभावस्याप्यद्रव्यत्वे गुणत्वाद्यापत्तौ स्वरूपव्याघातादिति। यद्यप्येकत्वादेव नित्यत्वाकार्यत्वे सिद्धे अनित्यत्वे कार्यत्वे च ततः पूर्वं पश्चाज्जायमानाः शब्दा आकाशान्तरे वर्त्तेरन् तस्मादेकत्वादेव पूर्वापरकोटिविकलं नभस्तथापि प्रपञ्चार्थमाह। समानेति। तथाहि नास्यारम्भकं नभ एव तेनैव तस्यानारम्भात्। नापि नभोन्तरमसत्त्वात्। नापि विजातीयं पृथिव्यादि कारणगुणपूर्वक्रमेण कार्ये रूपादिमत्त्व-

---

(१) शब्दाच्च तस्य निष्पत्तिरिति – पा० ४ पु०।

(२) नोपपद्येत – पा० ४ पु०।

(३) आश्रयैकस्वभावात् – पा० ४ पु०

त्यम्। सर्वप्राणिनां च शब्दोपलब्धौ निमित्तं श्रोत्र-भावेन। श्रोत्रं पुनः श्रवणविवरसंज्ञको नभोदेशः। शब्दनिमित्तोपभोगप्रापकधर्माधर्मोपनिबद्धस्तस्य च नित्यत्वे सत्युपनिबन्धकवैकल्याद्बाधिर्यमिति ॥

---

प्रसङ्गात्। नाप्यात्मदिक्कालमनांसि स्पर्शशून्यतया तेषामनारम्भकत्वादिति शब्दाश्रयतया परार्थत्वमस्योक्तम्। सम्प्रति तदुपलम्भकतया परार्थतामाह। सर्वप्राणिनामिति। तर्हि सर्वेषां सर्वशब्दोपलब्धिः स्यात् तस्य सर्वसाधारणत्वाद्व्यापकत्वाच्चेत्यत आह। श्रोत्रभावेनेति। ननु किमिदं श्रोत्रम् नहि पृथिव्यादेर्घ्राणादिवदाकाशस्यापि किञ्चित्कार्यमस्तीत्यत आह। श्रोत्रं पुनरिति। अत्र पुनःशब्देन पृथिव्यादिकार्येभ्यो घ्राणादिभ्यो व्यवच्छिनत्ति। श्रवणे कर्णशष्कुल्यौ तयोर्विवरं तत्संज्ञको नभोदेशः। अव्याप्यवृत्तिसंयोगोपचारात् देशव्यपदेशः। ननु बधिरस्या(१)-स्तीत्यत आह। शब्देति। शब्देन निमित्तेन विषयतया य उपभोगः सुखदुःखानुभवस्तत्प्रापकाभ्यां तत्संपादकाभ्यां धर्माधर्माभ्यामुपनिबद्धो विशिष्ट इत्यर्थः। एवं सति च विशेष्यस्य सद्भावेपि विशेषणांशस्य वैकल्यात् कस्यचिद्बाधिर्यम्। यथा शरीरसद्भावेप्युपभोगहेत्वदृष्टवैकल्यात् सुखज्ञानाद्यनुपपत्तिरित्यत आह। तस्य चेति। उपलक्षणं चैतत् कर्णमलादिना शुषिरव्याघातादपि (२) बाधिर्यं भवति। अन्यथा भेषजादिप्रयोगवैयर्थ्यापत्तिरिति(३)॥

---

(१) नन्वसौ बधिरस्य—पा० ४ पु०। (२) शुषिरव्याघातात् तैरेव—पा० ४ पु०।
(३) खं समाप्तमिति—अधिकं ४ पु०।

**कालः परापरव्यतिकरयौगपद्यायौगपद्यचि-**

---

काललक्षणमाह। काल इति। अत्र परापरेति भावप्रधानो निर्देशः परत्वापरत्वयोर्व्यतिकरः परापरव्यतिकरः दिक्कृताभ्यां परत्वापरत्वाभ्यां विपरीते परत्वापरत्वे इत्यर्थः। परापरव्यतिकरश्च(१) यौगपद्यादिप्रत्ययाश्चेति समासः ते लिङ्गानि यस्य स तथोक्तः। परत्वापरत्वयोरुत्पत्तिर्गुणे वक्ष्यते। ते युवस्थविरयोर्वर्तमाने कालमनुमापयतः। कथम् बहुतरतपनपरिस्पन्दान्तरितजन्मनि हि स्थविरे युवानमवधिं कृत्वा परत्वमुत्पद्यमानमसमवायिकारणवत् कार्यत्वादिति स्थिते च रूपादीनां च व्यभिचारे तपनपरिस्पन्दानां च वैयधिकरण्ये तदवच्छिन्नद्रव्यसंयोगोऽसमवायिकारणमिति विज्ञायते न चाविभुनो द्रव्यस्य संयोग(२)स्तथा भवितुमर्हति व्यभिचारादिति तद्द्रव्यं विभु स्यात्। न चात्माकाशौ तथा भवितुमर्हतो विशेषगुणवत्त्वात् पृथिव्यादिवदित्याचार्याः(३)। अत्रैवमालोचनीयम्। पृथिव्यादीनां संयोगस्यातद्धेतुत्वे विशेषगुणवत्त्वमप्रयोजकं सूर्यादिगतिप्राप्तिविरहस्योपाधेः सत्त्वात्(४)। अन्यथा मनसस्तथाभावप्रसङ्गात् विशेषगुणविरहिणस्तस्याकारणत्वेऽप्राप्तेरन्यस्य कारणस्याभावात् तस्माद्विशेषगुणवत्त्वाविशेषे पृथिव्यादीनामव्यापकत्वात्

---

(१) परत्वापरत्वव्यतिकरस्य – पा० ४ पु०।

(२) अविभुद्रव्यसंयोग – पा० ४ पु०।

(३) "आचार्या व्योमशिवाचार्याः" इति किरणावलीप्रकाशे वर्द्धमानोपाध्यायाः।

(४) गतिविरहस्योपाधेः सत्त्वात – पा० ४ पु०।

परत्वाद्यकारणत्वं व्यापकत्वाच्चात्माकाशयोस्तत्कारणत्वं भविष्यतीति को विरोधः। विप्रकृष्टबुद्धिमपेक्ष्योत्पद्यमानं विप्रकृष्टबुद्धिं निमित्तीकरोति अल्पतरसूरसञ्चरणापेक्षया बहुतरतपनपरिस्पन्दान्तरितत्वं विप्रकर्षः। न चैष स्थविरशरीरे स्वरूपतः(१) संभवति तपनसमवेतेन कर्मणास्य सम्बन्धाभावात् अतो यद्द्वारेण संयुक्तसंयुक्तसमवायलक्षणया प्रत्यासत्त्या आदित्यगतिः स्थविरमुपावर्त्तते तद्द्रव्यमस्ति न च तत् पृथिव्यादि तथा भवितुमर्हति अप्राप्तेर्व्यभिचाराच्च। अतः सकलमूर्त्तद्रव्यसंयुक्तेन तेन भवितव्यम् न चाकाशात्मानौ(२) तथा भवतः विशेषगुणवत्त्वात् पृथिव्यादिवदित्याचार्याः। नन्वप्रयोजकमेतत् (३) अप्राप्त्युपाधिकत्वात्। अन्यथा मनसस्तथाभावप्रसङ्गात् विशेषगुणरहितस्य तस्याकारणत्वे अप्राप्तेरन्यस्य कारणस्याभावात् तस्माद्विशेषगुणवत्त्वाविशेषेऽपि पृथिव्यादीनामव्यापकत्वात् परत्वाद्यकारणत्वं व्यापकत्वाच्चात्माकाशयोस्तत्कारणत्वं भविष्यतीति को विरोधः न आकाशस्य स्वप्रत्यासत्तिमात्रेण संयुक्तसमवायिनं धर्ममन्यत्र संक्रामयितुमसमर्थत्वात्। तथात्वे चैकत्र भेर्यामभिहतायां सर्वभेरीषु शब्दोत्पत्तिप्रसङ्गात् सूर्यक्रियावद्भेरीसंयोगस्यापि संयुक्तसंयुक्तसमवायाविशेषात् कालस्य तु तत्स्वभावत्वात्(४) अयमदोषः। असिद्धिदशायां प्रसङ्गस्याश्रयासिद्धेः सिद्धिदशायां च बाधितत्वात् आत्मनोऽपि द्रव्यान्तरधर्मेषु द्रव्यान्तरावच्छेदाय स्वप्रत्या-

(१) शरीरस्य स्वरूपतः - पा० ४ पु०। (२) न चात्माकाशौ — पा० ४ पु०।

(३) न चाप्रयोजकमिति गुरवः।

(४) स्वभावात् – पा० ४ पु०।

सत्यतिरिक्तसन्निकर्षापेक्षितत्वात्(१)। अन्यथा वाराणसीस्थितेन नीलेन पाटलिपुत्रस्थितस्य स्फटिकमणेरुपरञ्जनप्रसङ्गात्। कालस्य तु विप्रकृष्टक्रियोपसंक्रमणशक्ततयैव (२) सिद्धेर्नायं प्रसङ्ग इत्यवदातव्यम् (३) तदयं प्रमाणार्थः। स्थविरादौ परत्वं तपनपरिस्पन्दप्रकर्षबुद्धिजन्यं तदनुविधायित्वात् पटकुविन्दवत्। ते च तपनपरिस्पन्दाः स्थविरशरीरप्रत्यासत्तिमपेक्षन्ते स्वभावतोऽप्रत्यासन्नत्वे सति तदवच्छेदकत्वात् पटावच्छेदकमहारजनरागवत् सा च प्रत्यासत्तिर्द्रव्यद्वारकता प्रकारान्तरासंभवे सति प्रत्यासत्तित्वा(४)देव ( पटे महारजनप्रत्यासत्तिवत्। अन्यथा प्रत्यासत्त्यभावे सन्निकर्षविप्रकर्षयोरसंभवादपेक्षणीयानुपपत्तौ परत्वाद्यनुत्पत्तिप्रसङ्गेन तद्व्यवहारलोपप्रसंङ्गः) (५)तच्च द्रव्यमितरेभ्यो भिद्यते विशिष्टपरत्वाद्यनुमेयत्वात् (६)। यत्पुनर्नेतरेभ्यो भिद्यते तन्नैवं यथा पृथिव्यादि। एतेनापरत्वं लिङ्गतया व्याख्यातम्। यौगपद्यमेककालता अयौगपद्यमनेककालता चिरत्वं दीर्घकालता क्षिप्रत्वमल्पकालता। अत्र कालशब्देन कालोपाधयः सूर्यगत्यादयः उच्यन्ते तेषां प्रत्ययैः कालोऽनुमीयते। ननु प्रत्ययाः कारणतया विषयतया वा कालं व्यवस्थापयेयुः। न प्रथमः आत्मेन्द्रियादीनां तत्कारणत्वात्। न द्वितीयः तस्या-

(१) पेक्षत्वात्—पा० ४ पु०।
(२) संक्रमेण तयैव सिद्धेः—पा० ३ पु०।
(३) इति सर्वमवदातम्—पा० ४ पु०।
(४) प्रत्यासन्नत्वात्—पा० ४ पु०।
(५) ( ) एतन्मध्यस्थः पाठो नास्ति ४ पु०
(६) विशिष्टपरत्वाद्यनुमेयत्वाच्च—पा० ४ पु०।

रच्चिप्रप्रत्ययलिङ्गम् । तेषां विषयेषु पूर्वप्रत्ययविलक्षणानामुत्पत्तावन्यनिमित्ताभावाद्यदत्र नि-

---

तीन्द्रियतया ऐन्द्रियकप्रत्ययविषत्वविरोधात् अत आह । तेषामिति । विषयेषु घटपटादिषु युगपद्भवन्ति युगपत्कुर्वन्ति युगपद्वर्तन्ते इत्यादीनां पूर्वप्रत्ययविलक्षणानां द्रव्यगुणादिप्रत्ययविलक्षणानां द्रव्यादिप्रत्ययव्यावृत्ताव(१)प्यनुवृत्तेस्तदनुवृत्तावपि तेषां व्यावृत्तेर्विलक्षणत्वेन विनिश्चितानामुत्पत्तावन्यस्य निमित्तस्यासम्भवात् कालमन्तरेणेति शेषः । एते युगपज्जायन्ते कुर्वन्त्यवतिष्ठन्ते विनश्यन्ते इत्यादीनामेकस्मिन् काले एकस्यां सूर्यगतावेकसूर्यगत्यवच्छिन्ना इत्यर्थः । न चाप्राप्ताः सूर्यगतयो विषयान्तरमवच्छेत्तुमुत्सहन्ते । न च स्वरूपेण तासां प्राप्तिरस्ति तस्माद्विशिष्टप्रत्ययाद्यनुपपत्त्या (२) विशेषणप्रापकं द्रव्यमुपकल्प्यते अन्यथा निमित्तमन्तरेण नैमित्तिकस्याप्रत्ययस्यासंभवप्रसङ्गः । न च वाच्यं सम्बन्धस्य प्रतीतौ विशिष्टप्रत्ययो विशिष्टप्रत्ययेनैव च तत्प्रतीताावितरेतराश्रयत्वमिति । नहि सम्बन्धोऽत्र विशेषणमपितु क्रिया सा च प्रतीतैवेति सुष्ठु(३)। विशेषणसम्बन्धो हि विशेष्यप्रतीतौ सत्तयैवोपयुज्यते न तु स्वज्ञानेन अन्यथा समवायस्यातीन्द्रियत्वात् गुणकर्मसामान्यविशिष्टप्रतीति(४) वैशेषिकनये दत्तजलाञ्जलिः स्यात् । परेषामप्यहं शरीरीत्यादेरदृष्टस्य नियामकस्याप्रतीतौ विशिष्टप्रत्ययो न स्यात् । तस्माद्विशिष्टप्रत्ययान्यथानुपपत्त्या विशेषसम्बन्धः-

---

(१) द्रव्यव्यावृत्ता – पा० ४ पु० । (२) प्रत्ययानुपपत्त्या – पा० ४ पु० ।
(३) प्रतीतैवेति सर्वं सुस्थम् – पा० ४ पु० । (४) प्रतिपत्तिः – पा० ४ पु० ।

मित्तं स कालः। सर्वकार्याणां चोत्पत्तिस्थितिवि-
नाशहेतुस्तद्व्यपदेशात्। क्षणलवनिमेषकाष्ठाक-
लामुहूर्तयामाहोरात्रार्द्धमासमासत्र्ययनसंवत्सरयु-
गकल्पमन्वन्तरप्रलयमहाप्रलयव्यवहारहेतुः। तस्य
गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागाः।

---

प्रतीयते न तु सम्बन्धाप्रतीतौ विशिष्टप्रतीतिरेव न सिध्यतीति स्थितिः(१)। यत्तत्साधर्म्यमुक्तं सर्वोत्पत्तिमतां निमित्तकारणत्वमिति तदाह। सर्वकार्याणामिति। उत्पत्तिरात्मलाभः स्थितिराविनाशात् क्रमवत्सहकारिसम्बन्धः विनाशः प्रध्वंसः एतेषां हेतुः। अत्र प्रमाणमाह। तद्व्यपदेशादिति। तेन कालेनोत्पत्त्यादीनां व्यपदेशात् अद्योत्पन्नः श्वः परश्वो वेति इदानीमत्रास्यद्य नष्टः श्वः परश्वो वेति व्यपदिश्यते यथा चैतत्तथोक्तम्। व्यवहारहेतुमाह। क्षणेति। उत्पन्नं द्रव्यं यावद्गुणमुत्पद्यते अन्त्यतन्तुसंयोगे यावन्न पट उत्पन्ने कर्मणि यावन्न विभागस्तावत्कालः क्षणः। अथवा सामग्री कार्यरहिता क्षण इति संक्षेपः। अक्षिपक्ष्मकर्मैकं निमेष इत्यादि गणितशास्त्रानुसारेण ग्राह्यम्। यद्यपि धर्मिग्राहकादेव प्रमाणात् संख्यादयः सिद्धास्तथाप्याकाशादिव्यवच्छेदार्थविशेषगुणविरहमाविष्कर्तुं (२) सामान्यगुणानाह। तस्य गुणा इति। अत्राप्येकत्वादिसमस्तसंख्यायोगे सिद्धे (३)विशिष्टपरत्वाद्यनुमेयस्यानेकत्व(४) व्यवच्छेदेन नियत-

(१) नियमः – पा० ४ पु०।
(२) व्यवच्छेदार्थविशेषगुणमाविष्कर्तुं – पा० ४ पु०।
(३) संख्यायोगित्वे सति – पा० ४ पु०। (४) अनुमेयस्य सतोऽनेकत्व – पा० ४ पु०।

काललिङ्गाविशेषादेकत्वं सिद्धम्। तदनुविधानात् पृथक्त्वम्। कारणे काल इतिवचनात् परममहत्परिमाणम्। कारणपरत्वादितिवचनात् संयोगः। तद्विनाशकत्वाद्विभाग इति। तस्याकाशवद् द्रव्य-

मेकत्वं(१) विवक्षन्नाह। कालत्विङ्गाविशेषादिति। व्यापकतयैकस्यैव सर्वत्र सूर्यादिगत्युपनायकतया संनिकृष्टविप्रकृष्टबुद्ध्युत्पादकद्वारेण विश्ववर्त्तिपरत्वापरत्वोत्पत्तिनिमित्तस्योपपत्तेरनेकत्वकल्पनायां कल्पनागौरवप्रसङ्गादित्यर्थः। तदनुविधानात् पृथक्त्वमित्येतदपि पूर्ववत्। कारणे काल इतिवचनात् कारणे कालाख्या इति सूत्रकारवचनात् परममहत्परिमाणम्। विशिष्टपरत्वाद्यसाधारणकारणद्रव्ये अविभोर्विश्ववर्तिमूर्तगतपरत्वाद्युत्पत्तौ सूर्यादिगत्युपाद्युपनयनशक्तेः परममहत्त्वाभावे च वैभवानुपपत्तेः(२) परममहत्त्वं कालस्य सिद्ध्यतीत्यर्थः। कारणपरत्वादितिवचनात् संयोग इति। कारणपरत्वात् कारणापरत्वाच्च परत्वापरत्वे इति सूत्रकारवचनादित्यर्थः। कारणं परत्वादेः कालस्तस्य परत्वापरत्वे तदुत्पादकौ मूर्तसंयोगावुपचारात्। तद्विनाशकत्वाद्विभागः तस्य संयोगस्योत्पन्नस्य सत्याश्रये विनाशको विभागस्तद्विनाशादेव सिद्ध इत्यर्थः। एतेन धर्मिग्राहकप्रमाणस्य द्रव्यत्वस्य वा संख्यादिपञ्चकसाधकस्य सहायास्तर्का दर्शिताः। तथाह्येकत्वाभावे द्वित्वाद्यसिद्धिरसमवायिकारणाभावात् पृथक्त्वाभावे एकत्वानुपपत्तिः व्यापक-

(१) नियमेनैकत्वं—पा० ४ पु०। (२) विभवानुपपत्तेः—पा० ३ पु०।

# त्वनित्यत्वे सिद्धे कालत्विङ्गाविशेषादञ्जसैकत्वेपि सर्वकार्याणामारम्भक्रियाभिनिर्वृत्तिस्थितिनिरो -

---

निवृत्तेः द्विपृथक्त्वासिद्धिश्च । परममहत्त्वपरिमाणाभावे वैभवानुपपत्तिः संयोगाद्यसिद्धौ परत्वाद्यसिद्धिरसमवायिनिमित्तयोरभावात् । विभागाभावे कार्यस्य संयोगस्य नित्यत्वप्रसङ्गः । तस्याकाशवदिति । यथाकाशस्य धर्मिग्राहकादेव द्रव्यत्वं सिद्धं(१) गुणवत्त्वादपि सिद्ध्यति तथा कालस्यापि यथाकाशस्यैकत्वादेव नित्यत्वं सिद्धं समानासमानजातीयकारणाभावादकार्यतयापि सिद्ध्यति तथा कालस्यापीत्यर्थः। स्यादेतत् यद्येकः कालः कथमतीतानागतवर्त्तमानभेदेन(२) व्यवह्रियते न हि क्षणलवादिवद्वर्षादिवद्वातीतानागतादयोप्युपाधिभेदाः सन्ति(३) किं तु त एव भावाः भावे वा त एव सन्तु क्षतमन्तर्गडुना कालेनेत्यत आह । कालत्विङ्गेति । अञ्जसा मुख्यया वृत्त्या आरम्भ इति सन्निकृष्टं प्रागभावमाह (४) । क्रियेति व्यापारः अभिनिर्वृत्तिरिति(५) फलसिद्धिः निरोध इति विनाशः तेन प्रत्येकमनागतादित्रिकं धर्मधर्मिभेदात् त्रिविधमुक्तं भवति । तथाहि भविष्यति पट इति पटस्य धर्मिणः प्रागभावास्तिता भविष्यत्ता तदुपलक्षितः कालो भविष्यन् पटं भावयिष्यति कुविन्द इत्यत्र धर्मिणो वर्त्तमानत्वेपि पटो-

---

(१) सिद्धमिति – नास्ति ४ पु० । (२) वर्तमानतया – पा० ४ पु० । (३) स्युः – पा० ४ पु० ।

(४) सन्निकृष्टमिति । यद्यपि प्रागभावमात्रस्य भविष्यत्ताव्यवहारहेतुत्वम् तथापि प्रतियोगिव्याप्तधर्मिग्रहं विना प्रागभावो न गृह्यत इति दर्शनार्थं सन्निकर्षोऽप्युक्तः । कि० प्र० व०॥

(५) अभिनिवृत्तिरपि – पा० २ पु० ।

**धोपाधिभेदान्मणिवत् पाचकवद्वा नानात्वोपचार इति ॥**

---

त्पत्त्यनुगुणव्यापारप्रागभाववत्ता कुविन्दस्य भविष्यत्ता तदुपलक्षितः कालोपि भविष्यन् । एवमुत्पत्स्यते घटः स्मारयति पूर्वानुभवोनुभूतमर्थमनुभावयति पूर्वकर्म स्वानुरूपं फलमिति धर्मिणोऽभावेपि व्यापारसत्ता वर्त्तमानता तदुपलक्षितः कालोपि वर्त्तमानः अस्त्यात्मा विद्यते व्योम वर्तते पट इत्यादौ तु धर्मिसत्तयैव वर्तमानता(१) तदुपलक्षितः कालोऽपि वर्त्तमानः । एवमभूत्पट अकार्षीत्पटमित्यादौ धर्म्यवस्थानेऽपि फलसिद्धौ तदुत्पादानुगुणव्यापारप्रध्वंसस्थितिरतीतत्वं तदुपलक्षितः कालोऽप्यतीत उच्यते नष्टो घट इत्यादौ धर्मिस्वरूपनिवृत्तिरेवातीतत्वं तदुपलक्षितः कालोऽप्यतीत इति । न चैष(२) व्यवहार उपाधिमात्रेण शक्यते यदा भारतवर्षेषु मध्याह्नस्तदोत्तरेषु कुरुष्वर्द्धरात्र इत्यादौ सम्बन्धाभावात् । बौद्धः सम्बन्धो भविष्यतीति चेत् सत्यम् तदर्थमेव निमित्तमनुसराम इत्यलं विस्तरेण । स एकोप्युपाधिभेदादनेकव्यवहारमातनोतीत्यत्र दृष्टान्तमाह । मणिवदिति । यथा स्फटिकादिरेकरूपोपि उपाधिभेदान्नीलः पीत इत्यादि व्यवह्रियते तथा कालोपीत्यर्थः । ननु किं मणौ

(१) विद्यमानता – पा० ३ पु० ।

(२) न चेति । यदेह मध्याह्नस्तदोत्तरकुरुष्वर्द्धरात्रमिति वर्तमानयोः सामानाधिकरण्यमसति काले ऽनुपपन्नमिति तद्घटकः कालो मन्तव्य इत्यर्थः । बौद्ध इति । विशिष्टधीजनकत्वसम्बन्धः । तदर्थमेवेति । सैव सम्बन्धं विना नेति तदर्थं कालमपेक्ष्यत इत्यर्थः । कि० प्र० व० ॥

दिक् पूर्वापरादिप्रत्ययलिङ्गा। मूर्तद्रव्यमवधिं कृत्वा मूर्तेष्वेव द्रव्येष्वेतस्मादिदं पूर्वेण दक्षिणेन पश्चिमेनोत्तरेण पूर्वदक्षिणेन दक्षिणापरेण अपरोत्तरेण उत्तरपूर्वेण चाधस्तादुपरिष्टाच्चेति दश प्रत्यया यतो भवन्ति सा दिगिति। अन्यनिमित्तास-

---

पीतादिव्यवहारवत् काले ऽनागतादिव्यवहारो भ्रान्त इत्यत आह। पाचकवदेति। न चौपाधिक इत्येतावतैव भ्रान्तः माभूत्पाचकादिव्यवहारोपि भ्रान्तः किं त्वतस्मिंस्तदितिग्रहो न चैवं प्रकृत इत्यर्थः (१)॥

गुणे(२) परत्वापरत्वलिङ्गत्वं दिशः स्फुटीभविष्यतीत्यभिप्रायवांस्तदुपेक्ष्य पूर्वापरादिप्रत्ययलिङ्गतामाह। दिगिति। एतदेव स्फुटयति। मूर्तद्रव्येति। अमूर्त्तद्रव्यस्य अवधित्वं नास्ति व्यापकत्वादत उक्तं मूर्त्तद्रव्यमवधिं कृत्वेति। व्यापकत्वादेव तेषां पूर्वापरादिप्रत्ययविषयत्वं नास्तीत्यत आह। मूर्तेष्ववेति। पूर्वेण दक्षिणेनेत्यादौ तृतीयाविधाने(३) प्रकृत्यादिभ्य उपसंख्यानमिति तृतीया पूर्वं दक्षिणमित्याद्यर्थे। ननु प्रत्ययात्(४) निमित्तं सिद्ध्यति दिशस्तु कुतः सिद्धिरत आह। अन्यनिमित्तासंभ-

---

(१) इति समासः कालः – इत्यधिकं ४ पु०।

(२) ननु कालकृतपरत्वापरत्वविजातीये परत्वापरत्वे अपि दिशो लिङ्गे तत्कुतो नोक्ते इत्यत आह। गुण इति। कि० प्र० व०॥

(३) ननु पूर्वेणेति तृतीया न युक्ता कर्तृकरणयोस्तदर्थयोरभावादित्यत आह। तृतीयाविधानमिति। कि० प्र० व०॥

(४) प्रत्ययेन – पा० ४ पु०।

वात् । अन्येषां गुणादीनां (१) व्यभिचारात् प्रथमचरमा(२)-दित्यसंयोगो ह्यत्र निमित्तं न च तेऽपि द्रव्यान्तरवर्त्तिनो द्रव्यान्तरेनुपसंक्रान्ता (३) विशिष्टप्रत्ययानुत्पादयन्ति ततो भवितव्यम् (४) परममहता द्रव्यान्तरेण । न चाव्यापकसम्बन्धमाश्रित्य सूर्यसंयोगा विशिष्टप्रत्ययानुत्पादयन्ति न चाकाशात्मानौ तथा भवितुमर्हतः पूर्वकादेव न्यायात् कालो भविष्यतीति चेत् न कालस्य क्रियामात्रोपाधिनिबन्धनव्यवहारहेतुत्वात् । अन्यथा जगति वर्त्तमानैकत्ववत्प्राच्यादेरेकत्वप्रसङ्गात् । अस्माकं प्राच्या अन्येषां प्रतीचित्वात् । न चैवं कालेऽपि नहि कालोप्यन्यधर्मोपाधिकं व्यवहारमन्यत्र कुर्वाणः प्रमातृनियममपेक्षते नन्वपेक्षत-एव यो ह्यत्र दिवसस्तस्यान्यत्र रात्रित्वात् सत्यम् दिक् व्यवहारमन्तर्भाव्या न तु वर्त्तमानादिस्तथा वर्तमानस्य सर्वत्र वर्त्तमानत्वात् । ननु प्राच्याः सर्वान् प्रति प्राचीत्वं तस्माद्विलक्षणेन व्यवहारेण च विलक्षणमेव निमित्तमाकर्षणीयम् उपाधिरेव तथास्त्विति चेत् न सूर्यसंयोगस्य साधारणत्वात् कथं तर्हि व्यवहारवैलक्षण्यं दिग्वादिनापि समर्थनीयमिति चेत् न उपनायकस्वभाववैलक्षण्येनैव तदुपपत्तेः दिशो ह्ययं स्वभावभेदः यत्प्रमातृभेदमाश्रित्य पक्षधर्मोपनायकत्वम् न त्वन्यस्येति

(१) द्रव्यगुणादीनां – पा० ४ पु० ।

(२) प्रथमचरमेति । यदपेक्षया सूर्योदयाचलसंयोगसन्निहिता दिक् सा प्राची । यदपेक्षया सूर्यास्ताचलसंयोगसन्निहिता सा प्रतीची । सन्निधिस्तु सूर्यसंयुक्तसंयोगाल्पीयस्त्वमिति तत्संयोगघटकतया दिक् सिद्ध्यतीत्यर्थः । तेपीति । आदित्यसंयोगा अपि द्रव्यान्तरे घटादावनुपसंक्रान्ता असम्बद्धा इत्यर्थः । कि० प्र० व० ॥

(३) द्रव्यान्तरमसंक्रान्ता – पा० ४ पु० ।

(४) प्रत्ययानुत्पादयितुमीशते ततो भवितव्यं – पा० ४ पु० ।

म्भवात्। तस्यास्तु गुणाः संख्यापरिमाणपृथक्त्व-संयोगविभागाः। कालवदेते सिद्धाः। दिग्लिङ्गा-

---

कालस्यैवं स्वभावभेदः किं न कल्प्यत इति चेत् न क्रियां प्रत्यन्यथादर्शनात्। अपि चान्यधर्ममात्रमन्यत्रोपदध्यादिति कालस्य स्वभावः क्रियामात्रं वा। आद्ये सर्वधर्मान् सर्वत्रोपसंक्रामयेदिति अतिप्रसङ्गः। द्वितीये संयोगोपधायकमन्यत् कल्पनीयम्। अन्यथा प्राच्यादिव्यवहारानुपपत्तेः। न च तत्क्रियासंयोगयोरेकजातीयत्वमस्ति यतोन्यत्रोपदधातीत्युपपद्यते तस्मात् क्रियोपसंक्रान्तिरिव रविसंयोगोपसंक्रान्तिरपि नियतस्वभावं द्रव्यमुपस्थापयतीति साधूक्तम्(१) अन्यनिमित्तासंभवादिति। तदिदं दिगितरेभ्यो भिद्यते उपाध्युपनयनद्वारेण पूर्वापरादिप्रत्ययहेतुत्वात् यन्नैवं न तदितरेभ्यो भिद्यते यथा पृथिवीत्वादि। तद्गुणानाह। तस्यास्त्विति। अत्रापि संख्यादीनां धर्मिग्राहकप्रमाणात् सिद्धौ द्रव्यत्वाद्वा विशेषगुणव्यवच्छेदे तात्पर्यम्(२)। तर्ककर्त्ता सूचयति(३)। कालवदेते सिद्धा इति। यथा काललिङ्गाविशेषादेकत्वं तथा दिग्लिङ्गाविशेषादेकत्वं यथा तदनुविधानात् पृथक्त्वं काले तथा दिश्यपि यथा कारणे काल इति वचनात् परममहत्त्वं तथा दिश्यपि यथा कारणपरत्वादितिवचनात् काले संयोगास्तथा दिश्यपि यथा तत्र तद्विनाशकत्वाद्विभागः तथा दिश्यपीत्यर्थः। यद्येकैव

---

(१) युक्तं – पा० ४ पु०॥ (२) विशेषव्यवहारोच्छेदे तात्पर्यम् – पा० ४ पु०।
(३) तर्कान् सूचयति – पा० ४ पु०।

**विशेषादञ्जसैकत्वेऽपि दिशः परममहर्षिभिः श्रुतिस्मृतिलोकसंव्यवहारार्थं मेरुं प्रदक्षिणमावर्तमानस्य भगवतः सवितुर्ये संयोगविशेषाः लोकपालपरिगृहीतदिक्प्रदेशानामन्वर्थाः प्राच्यादिभेदेन दशविधाः संज्ञाः कृताः अतो भक्त्या दश दिशः**

---

दिक् कथं दश दिश इति प्रसिद्धिरित्यत आह । दिग्लिङ्गेति । अञ्जसा मुख्यया वृत्त्येति परमर्षिभिः सर्गादिप्रभवैर्मरीच्यादिभिर्दशविधाः संज्ञाः कृताः । किमर्थं श्रुतिस्मृतिलोकसंव्यवहारार्थम् । प्राचीप्रवणे यजेत न प्रतीचीशिराः शयीतेति श्रौतो व्यवहार आयुष्यं प्राङ्मुखो भुङ्क्ते इत्यादिस्मार्त्तः दक्षिणेन याहीत्यादिलौकिकस्तदर्थम् । ताः किं पारिभाषिक्यो नेत्याह । अन्वर्थाः अनुगतार्थाः केषां भगवतः सवितुर्ये संयोगविशेषास्तेषां किं भूतस्य सवितुर्मेरुं प्रदक्षिणमावर्त्तमानस्य परितो भ्रमतः पुनः केषामन्वर्था इत्यत आह । लोकपालपरिगृहीतानां दिक्प्रदेशानां दिक्पालाः(१) इन्द्रादयः । कथं ताः सवितृसंयोगविशेषार्थानुगमेन दशविधाः संज्ञा इत्यत आह । प्राच्यादिभेदेनेति । तथाहि प्रथममस्या(२)मञ्चति सवितेति प्राची

---

(१) लोकपालाः — पा० ४ पु० ।

(२) प्रथममस्यामिति । ननु प्राथम्यं रविसंयोगस्य विभुना अविभुना वा । नाद्यः । सामान्यतोऽसम्भवात् । न च तद्दिने प्रथमः संयोगो राचौ तदव्यवहारापत्तेः । नान्त्यः । प्रतीच्यामपि प्राचीव्यवहारापत्तेः । अत्राहुः । सूर्योदयसन्निहिता दिक् प्राची । तदव्यवहिता दिक् प्रतीची । प्राच्यभिमुखस्थितपुरुषवामदेशावच्छिन्ना दिगुदीची । तादृशपुरुषदक्षिणप्रदेशावच्छिन्ना दिग्दक्षिणा । वामत्वदक्षिणत्वे च शरीरावयववृत्तिजातिविशेषौ । गुरुत्वासमवायिकारणक्रियाजन्यसंयोगाश्रया दिगधः । अदृष्टवदात्मसंयोगजाग्निक्रियाजन्यसंयोगाश्रया दिगूर्ध्वमिति

सिद्धाः। तासामेव देवतापरिग्रहात् पुनर्दश संज्ञा भवन्ति। माहेन्द्री वैश्वानरी याम्या नैर्ऋती वारुणी वायव्या कौवेरी ऐशानी ब्राह्मी नागी चेति॥

---

अवागस्यामञ्चतीत्यवाची प्रतीपमस्यामञ्चतीति प्रतीची उदगस्यामञ्चतीत्युदीची एवं प्रागवाची अवाक्प्रतीची प्रत्यगुदीची उदक्प्राची सूर्यापेक्षया यतः पृथिवी साधस्तात् पृथिव्यपेक्षया यतो नक्षत्राणि सोर्ध्वा ततो भक्त्योपचारेण दश दिशः सिद्धा इत्येकत्वाविरोध इत्यर्थः। ननु लोकपालपरिग्रहनिबन्धनादिभिर्दशभिः सह भक्त्यापि विंशतिर्दिशः स्युरित्यत आह। तासामेवेति। या चास्माकं प्राची सैव माहेन्द्री निमित्तमात्रं भिद्यते न तु नैमित्तिकमित्यर्थः। उपलक्षणं चैतत् पूर्वापरादिसंज्ञा अपि तत्समानार्था न तु भिन्नार्था इति भक्त्यापि दशैव दिश इति (१)॥

---

संक्षेपः*। कि॰ प्र॰ व॰॥

(१) इति समाप्ता दिशः – इत्यधिकम् ४ पु॰।

---

*सूर्येति। सूर्योदयाचलसंयुक्तसंयोगाल्पीयस्त्वं सन्निधानं तद्भूयस्त्वं व्यवधानमन्येति द्रष्टव्यम्। वामत्वेति। न चकरत्वादिजातिभिः शङ्करमयेन वामत्वदक्षिणत्वयोर्नानात्वे कथमनुगम इति वाच्यम्। दक्षिणत्वाभावकूटसमानाधिकरणशरीरावयववृत्तिजातित्वेन नानावामत्वानामनुगमात्। एवं वामत्वाभावकूटमादाय नानादक्षिणत्वानुगमनात्। केचित्तु तदुत्तरत्वं तदवच्छिन्नत्वेन व्यवह्रियत इत्याहुः।

अदृष्टेति। न च क्रियामात्रस्यादृष्टवदात्मसंयोगजन्यतया वातादिजन्याग्निक्रियामादाय तिर्यग्गादावतिव्याप्तिरिति वाच्यम्। जन्येत्यन्तेन स्वाभाविकत्वाभिधानात्। तज्जन्यत्वेन तदसमवायिकारणकत्वस्योक्तत्वाद्वा। अग्निपदं तु वायुक्रियामादाय तिर्यग्गतिव्याप्तिवारणाय। ननु प्राच्यादेः सूर्येण निर्वचने रात्रौ तद्व्यवहारापत्तिरित्यत आह। संक्षेप इति। कि॰ प्र॰ व्या॰ भगीरथठक्कुरः॥

आत्मत्वाभिसम्बन्धादात्मा । तस्य सौक्ष्म्याद-प्रत्यक्षत्वे सति(१) करणैः शब्दाद्युपलब्ध्यनुमितैः श्रोत्रादिभिः समधिगमः क्रियते । वास्यादी-

---

उद्देशक्रमानुसारेण दिग्लक्षणानन्तरमात्मलक्षणमाह । आत्मत्वेति । आत्मत्वं नाम सामान्यविशेषः तदभिसम्बन्धादात्मा इतरेभ्यो भिद्यते इति पूर्ववद्व्याख्येयम् । ननु शरीराद्यतिरिक्तमात्मानं नोपलभामहे । गौरोऽहं स्थूलोऽहं ब्राह्मणोऽहं मानुषोऽहं गच्छाम्यहं जातोऽहं पितुः पुत्रः पुत्रस्य पिता ज्येष्ठस्य कनीयान् कनीयसो ज्यायानिति गुणकर्मसामान्यविशेषजन्माद्यधिकरणमात्मानं चक्षुरादिनैव सर्वः प्रत्येति । न त्वरूपं विभुमचलमनन्तमजमपूर्वमपरमात्मानं कश्चित् स्वप्नेऽप्यनुभवतीत्याश्रयासिद्धमात्मत्वं यथा प्रसिद्धाश्रयं च पृथिव्यादिना गतार्थम् तथाहं जाने यते भुञ्ज इति ज्ञानाद्यधिकरणतया मनसात्मानुभूयत एव । अहङ्कारस्य शरीरादिविषयत्वं चाग्रे निषेत्स्यते इत्यभिप्रायः । तथाप्यात्मत्वं स्वरूपासिद्धं परात्मनोऽप्रतीतेर्व्यक्तिभेदासिद्धौ सामान्यविशेषासिद्धेरित्यत आह । तस्येति । सौक्ष्म्यम् बाह्येन्द्रियग्रहणयोग्यताविरहः तस्मादप्रत्यक्षत्वे तस्य करणैः श्रोत्रादिभिः समधिगमः क्रियते । ननु करणान्यप्यप्रत्यक्षाणीत्यत आह । शब्दाद्युपलब्ध्यनुमितैः । शब्दाद्युपलब्धयः करणसाध्याः क्रियात्वात् छिदादिक्रियावदित्यनुमितैः । कथं पुनः करणैरात्मा समधिगम्यत

---

(१) ऽपि—पा० ५ पु० ।

नामिव(१) करणानां कर्तृप्रयोज्यत्व(२)दर्शनात् शब्दादिषु प्रसिद्ध्या च प्रसाधकोऽनुमीयते । न शरीरेन्द्रियमनसामज्ञत्वात्(३) । न शरी-

---

द्द्यत आह । वास्यादीनामिवेति । अनेन व्याप्तिर्दर्शिता। प्रयोगस्त्वेवं श्रोत्रादीनि कर्तृव्यापार्याणि करणत्वाद्वासीवत् । करणत्वं चामीषां धर्मिग्राहकप्रमाणसिद्धम् । ननु कस्यचित्कारणस्य वास्यादेः पाण्यादिकरणप्रयोज्यत्वदर्शनेऽपि यथा न सर्वं कारणं करणप्रयोज्यमनवस्थाप्रसङ्गात् तथा कस्यचित्कारणस्य कर्तृप्रयोज्यत्वेपि न सर्वं तथा भविष्यतीति को विरोधः । उच्यते । कारकेषु समानजातीयकारकापेक्षानियमो नेष्यते अनवस्थाप्रसङ्गात् विजातीयकारकापेक्षानियमस्त्विष्यत एव अन्यथा लक्षणव्याघातात् । चक्षुरादीनां च कर्त्रनपेक्षत्वे तत्साध्यक्रियाप्रतिसन्धानानुपपत्तिप्रसङ्गात् तस्माद्योसौ श्रोत्रादीनामधिष्ठाता असावात्मेति । प्रमाणान्तरमाह । शब्दादिष्विति । प्रसिद्धया ज्ञानेन प्रसाधको ज्ञातानुमीयते । तथाहि शब्दज्ञानं क्वचिदाश्रितं कार्यत्वात् गन्धवत् कार्यत्वमेषामभूत्वा भावित्वलक्षणं प्रत्यक्षसिद्धं कार्यस्याप्यनाश्रितत्वे समवायिकारणव्यावृत्ताविंतरयोरपि व्यावृत्तेरकारणत्वप्रसङ्गः । तथापि शरीरेन्द्रियमनसामन्यतमस्मिन्नाश्रितं भविष्यतीत्यत आह । न शरीरेन्द्रि-

---

(१) वाश्यादीनां—पा० १ पु० । (२) प्रयोज्यत्व—पा० १ पु० ।

(३) अज्ञानत्वात्—पा० ५ पु० । न शारीरेन्द्रियमनसां चैतन्यसङ्गरत्वात्—पा० १ पु० ।

रस्य चैतन्यं घटादिवद्भूतकार्यत्वात् मृते चासम्भवात् । नेन्द्रियाणां करणत्वात् उपहतेषु-

---

यमनसां चैतन्यमग्रे वक्ष्यतीति कुतः अन्नत्वव्याहततयैव तेषां सिद्धत्वादित्यर्थः । एतदेव दर्शयति न शरीरस्य चैतन्यं शरीरं न चैतन्याश्रयमित्यर्थः । घटादिवद्भूतकार्यत्वादिति भूतत्वात्कार्यत्वाच्चेत्यर्थः । अन्यथा असमर्थविशेषणो हेतुः स्यात् । ननु चैतन्याश्रयत्वेकार्यत्वस्य भूतत्वस्य वा को विरोध इत्यत आह । मृते चासंभवादिति । यदि हि शरीरविशेषगुणश्चैतन्यं भवेद्रूपादिवद्यावद्द्रव्यभावि भवेत् चकाराद्यावत्पृथिव्यादिव्यक्तिवृत्ति भवेत् पृथिव्यादिविशेषगुणस्य यावद्द्रव्यभावित्वनियमात् । पृथिव्यादिचतुष्टयविशेषगुणस्य च यावत्पृथिव्यादिव्यक्तिभावित्वात् । अत्राप्यनियमे को विरोध इति चेत् शरीरस्य कार्यतयोत्पत्तेः प्रागनुभवाभावेन संस्काराभावात् स्मृत्यनुसन्धानानुपपत्तिरित्येतत्तर्कप्रदर्शनार्थमेव कार्यत्वस्योपादानमित्यवधातव्यम् । नेन्द्रियाणामिति चैतन्यमित्यनुवर्तते तत्कुतः करणभावात् कुठारवदिति शेषः । तर्कमाह । उपहतेष्विति । अनुभवानुविधायितया तावदनुभवकार्या स्मृतिः सोऽपि यद्यन्तरा किञ्चिदतिशयं नादध्यात् चिरध्वस्तो न स्मृतिं जनयेत् अनुत्पन्ननिरन्वयध्वस्तयोरविशेषात् अतिशयमप्यादधानः स्वसमानाश्रयमेवादधीत अन्यथाधानेऽतिप्रसङ्गात् तस्मात् स्मृतिसंस्कारानुभवाः समानाश्रया इति नियमः । तथा चेन्द्रियेषु चैतन्याश्रयेषु

विषयासान्निध्ये चानुस्मृति(१)दर्शनात्। नापि मनसः करणान्तरानपेक्षित्वे युगपदालोचनस्मृति(२)प्रसङ्गात् स्वयं करणभावाच्च परिशेषा(३)-

---

स्वीक्रियमाणेषु तेषामुपघातेऽन्धादिभिः पूर्वानुभूतानां रूपादीनामस्मरणप्रसङ्गात् घटादीनां विषयाणां कुठारादीनां च करणानामचैतन्ये जीवनविरहो हेतुः तत्राप्याध्यात्मिकवायुविरहः तथात्रापि बाह्यधातूपग्रहाभावः तत्रापि वृद्ध्यादे(४)रभावः। अत्रार्थे तर्कं सूचयति। विषयासान्निध्ये चेति। यदि हि विषयाश्चेतयेरंस्तेषामसन्निधानेऽनुस्मृतिर्नोदियात् असन्निधिश्च नाग्रहेतुको द्रष्टव्यः न ह्यसत्यनुभवितरि स्मरणमुपपद्यते कारणाभावादिति भावः। अनुभवस्य पश्चाद्भावेन स्मृतिरेवानुस्मृतिरुच्यते अस्तु तर्हि नित्यत्वात् सर्वविषयत्वादभूतत्वाच्च मनसश्चैतन्यमत आह। नापि मनस इति। अयमभिसन्धिः। ज्ञानाश्रयतया मनोऽनुमीयमानं कर्तृ स्यात् न तु तत्करणं तथा च युगपदनेकविषयसन्निधौ अनेकचक्षुरादिकरणाधिष्ठानेन युगपदनेकान्यालोचनान्यनेकाश्च स्मृतीरारभेत नहि करणवत् कर्तुरयं धर्मो यदेकामेव क्रियामभिनिर्वर्तयते तथात्वे वा व्यासङ्गो न स्यात् करणान्तरापेक्षायां च संज्ञाभेदमात्रम् अथ करणतयैव तदनुमाने ज्ञानाश्रयतया तदनुमास्यत इत्यत आह। स्वयं करणभावाच्चेति। सिद्धे हि

---

(१) चात्र स्मृति—पा० १ पु०।
(२) युगपदालोचनानुस्मृति—पा० ५ पु०।
(३) पारिशेष्या—पा० ५। ६ पु०। (४) तृष्ण्यादेः—पा० ३ पु०।

दात्मकार्यत्वात्(१) तेनात्मा समधिगम्यते । शरीरसमवायिनीभ्यां च हिताहितप्राप्तिपरि-

---

चैतन्याश्रये कर्तरि करणं मनोनुमीयते तथा च धर्मिग्राहकप्रमाणबाध इति भावः । दिक्कालाकाशानां च प्रसक्तिरेव नास्ति तेषां बुद्ध्याश्रयत्वप्रतिक्षेपेणैव शब्दादिभिरुपस्थापनादतः पारिशेष्यात् प्रसक्तप्रतिषेधे ऽन्यत्राप्रसङ्गात् शिष्यमाणतयात्मकार्यत्वात् पृथिव्याद्यसमवायित्वे सति कार्यत्वादित्यर्थः । तदयं प्रयोगः ज्ञानं पृथिव्याद्यतिरिक्तद्रव्याश्रितं तदनाश्रितत्वे सति कार्यत्वात् यत् पुनः पृथिव्याद्यतिरिक्तद्रव्याश्रितं न भवति तत्तदनाश्रितत्वे सति कार्यमपि न भवति यथा गन्धादिरिति केवलव्यतिरेकीति । स्यादेतत् आत्मत्वहेतुसिद्ध्यर्थं परात्मप्रसाधनार्थं चायमारम्भः यथा च परात्मा परोक्षस्तथा तद्बुद्धिरपि परोक्षैव तथा च किं केन साध्यत इत्याशङ्क्याह । शरीरसमवायिनीभ्यामिति । विग्रहस्याधिष्ठातानुमीयते अधिष्ठातेत्यस्य विवरणं प्रयत्नवानिति संयोगीति शेषः । लिङ्गमाह । प्रवृत्तिनिवृत्तिभ्यामिति । प्रवृत्त्या निवृत्त्या चेत्यर्थः । अनयोः प्रत्येकमेव लिङ्गत्वात् क्रियामात्रस्य चानैकान्तिकत्वमित्याशङ्क्याह । हिताहितप्राप्तिपरिहारयोग्याभ्यामिति । हितं सुखसाधनम् दुःखसाधनमहितम् । तयोर्यथासंख्यं प्राप्तिपरिहारौ तद्योग्याभ्यामिति योग्यग्रहणं क्वचिदन्तरायसम्भवेन प्राप्तिपरिहारयोरसिद्धावपि चेष्टात्वस्य प्रयोजकत्वमादर्शयितुम् ।

---

(१) आत्मकार्यं ज्ञानं कार्यत्वात्—पा० ५ पु० ।

हारयोग्याभ्यां प्रवृत्तिनिवृत्तिभ्यां(१) रथकर्मणा सारथिवत् प्रयत्नवान् विग्रहस्याधिष्ठातानुमीयते प्राणादिभिश्चेति । कथं शरीरपरिगृहीते(२) वायौ विकृतकर्मदर्शनाद्भस्त्राध्मापयितेव निमेषो-

---

एवं प्रवृत्तिनिवृत्ती प्रायेण शरीरतदवयवसमवायिन्याविति शरीरसमवायिनीभ्यामिति स्वरूपमुक्तम् यथा च लतादीना-मपि शरीरित्वं तथोक्तमधस्तात् वक्ष्यते चात्र दृष्टान्तो रथ-कर्मणा सारथिवदिति । अत्र प्रयोगः विवादाध्यासितं शरीरं प्रयत्नवदधिष्ठितं हितप्राप्तियोग्यक्रियावत्त्वात् अहितपरिहा-रयोग्यक्रियावत्त्वाद्वा रथवत् विपक्षे प्रयत्नवद्व्यतिरेकेण प्रवृ-त्त्यनुपपत्तिप्रसङ्गो बाधकम् तत्कार्यत्वादिति । प्राणादिभि-श्चेति । अनेन प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रि-यान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानी-ति सूत्रं स्मारयति । कथमिति । केन प्रकारेणात्र-व्याप्तिर्ग्राह्येत्यर्थः । उत्तरं शरीरेति । लिङ्गत्वमभिव्यनक्ति । विकृतेति । शरीरपरिगृहीतः शरीराभ्यन्तरचारी मनःसहचर इति यावत् । तस्मिन् विकृतं स्वभावसिद्धात् तिर्यग्गमना(३)द-न्यादृशं कर्मोर्ध्वाधोगतिलक्षणं तस्य दर्शनादिति व्याप्तिग्राहकं प्रमाणमुक्तम् । भस्त्राध्मापयितेति दृष्टान्तः । प्रयोगस्त्वेवं जीव-

---

(१) प्रवृत्तिनिवृत्तिभ्यां—इत्यधिकम् ५ पु० ।

(२) विगृहीते—पा० ५ पु० ।

(३) तिर्यक्पवना—पा० ३ पु० ।

**न्मेषकर्मणा नियतेन दारुयन्त्रप्रयोक्तेव देहस्य वृद्धि-क्षतभग्नसंरोहणादिनिमित्तत्वात्(१) गृहपतिरिव**

---

च्छरीरं भोक्तृप्रयत्नवदधिष्ठितं संमूर्छनाभावे सति विकृत-क्रियपवनाश्रयत्वात् भस्त्रादिवदिति। अथवा प्राणाख्यो(२) वा-युर्भोक्तृप्रयत्नवत्प्रेरितो ऽसति मूर्छने विकृतक्रियवायुत्वात् भस्त्रा-वायुवत्। लिङ्गान्तरं विवृणोति । निमेषेति। अक्षिपक्ष्मणोः संयोगहेतुः कर्म निमेषो विभागहेतुरुन्मेषः तेनापि प्रयत्न-वाननुमीयते । नन्वेतद्वायुविकारजनितेन नयनस्पन्देनानैका-न्तिकमत आह । नियतेनेति। दृष्टनियमेन यादृङ्निमेषोन्मेष-कर्म प्रयत्नवदन्वयव्यतिरेकानुविधायि दृष्टं दृष्टान्ते तादृशेने-नेत्यर्थः। अथ किमिदं तादृशत्वम् इच्छापूर्वकत्वमिति चेत् न तस्या अप्यसिद्धतया साध्यत्वात् हिताहितप्राप्तिपरिहारार्थ-त्वस्य विवक्षितत्वात् इति चेन्न प्रवृत्तिनिवृत्तित्वाभ्यामेव गता-र्थत्वात् सत्यं प्रपञ्चार्थमुपन्यासः । अत्रापि प्रयोगः जीवच्छरीरं भोक्तृप्रयत्नवदधिष्ठितं विशिष्टनिमेषोन्मेषक्रियावत्त्वात् दारुय-न्त्रवत्। विशिष्टं वा निमेषोन्मेषकर्म प्रयत्नवत्पूर्वकं विशिष्टनि-मेषोन्मेषकर्मत्वात् दारुयन्त्रनिमेषोन्मेषकर्मवत् । जीवनलिङ्ग-कमनुमानमाह। देहस्येति । वृद्धिरवयवोपचयः भग्नक्षतयोर्वि-घटितविश्लिष्टयोरस्थिचर्ममांसभागयोः संरोहणं पुनः सङ्घटनं तयोर्निमित्ततयाधिष्ठातानुमीयते शरीरावयववृद्धिक्षतभग्नसं-

---

(१) संरोहणाभ्याम्—पा० ६ पु० ।

(२) शारीरो—पा० ४ पु० ।

**अभिमतविषयग्राहककरणसम्बन्धनिमित्तेन मनः-कर्मणा गृहकोणेषु पेलकप्रेरक इव(१)**

---

रोहणे प्रयत्नवन्निमित्तके वृद्धिलात् संरोहणत्वाच्च गृहकुड्यवृद्धिवत्तत्संरोहणवच्चेति। सूत्रे च जीवनशब्दो जीवनकार्ये वृद्धिसंरोहणे लक्षयति मुख्यतया हि स्वकर्मोपार्जितशरीरावच्छिन्नेनात्मना मनःसंयोगो जीवनमिति। क्वचित्संरोहणादीत्यादिपदं श्रूयते तेनाहारोपादानमलोत्सर्गौ गृह्येते। तथाहि जीवच्छरीरं भोक्तृप्रयत्नवदधिष्ठितमभिमतानभिमतोपादानोत्सर्गवत्त्वाद् यन्त्रधारागृहवदिति। न चैतद्वृक्षादिगतवृद्ध्यादिनानैकान्तिकं तत्रापि भोक्तृविशेषाधिष्ठानस्येष्टत्वात्। लिङ्गान्तरमाह। अभिमतेति। अभिमतो विषयो रूपादिस्तद्ग्राहकं करणं चक्षुरादि तेन संयोगः सम्बन्धः तस्य निमित्तं कारणं यन्मनःकर्म तेनात्माऽनुमीयते। गृहकोणेषु व्यवस्थितो गृहकोणव्यवस्थितः तत्रैव पेलकमुद्दिश्य पेलकस्य जतुगुलकस्य प्रेरको दारको बालक इवेति। अयमाशयः प्रयत्नज्ञानायौगपद्यान्मनस्तावत्प्रतिशरीरमेकमणु गतिमच्चेति सिद्धं तत्पक्षयित्वेदमुच्यते मनः प्रयत्नवदधिष्ठितं गुरुत्वद्रवत्वादिकारणान्तराभावे सति गतिमद् दारकप्रेरितपेलकवदिति। अदृष्टोपग्रहादेव तत्र क्रिया स्यादिति चेत् क्वचिदेवमपि। यद्यपि चैवमप्यात्मसिद्धिस्तथापि अभिमतेत्यादिना इच्छानुविधायिनः कर्मणो लिङ्गत्वेन विवक्षितत्वात् प्रयत्नवदधिष्ठातृसिद्धिः।

---

(१) गृहकोणव्यवस्थितपेलक इव प्रेरक इव—पा० ५, पु०।

द्वारकः नयनविषयालोचनानन्तरं रसानुस्मृतिक्रमेण रसनविक्रियादर्शनादनेकगवाक्षान्तर्गतप्रेरक(१)वदुभयदर्शी कश्चिदेको विज्ञायते ।

---

यद्यपि च ज्ञातमिच्छया विषयीक्रियते इच्छाविषयश्च प्रयत्नस्य विषयः स्यात् मनस्त्वतीन्द्रियं सदज्ञातं कथमेवं भविष्यतीति तथापि स्पर्शनेन्द्रियेण रसमलधातुदोषवहनाडीवत् मनोवहानां नाडीनामुपलम्भात् तद्गोचराविच्छाप्रयत्नावदूरविप्रकर्षेण तदपि व्यापृत(२) इत्युच्यते अदृष्टस्य नियामकत्वाच्च तत्रैव तदा तत्प्रत्यक्षं न हि जलाद्यभ्यवहरणहेतवो मलाद्युत्सर्जनहेतवो वा नाड्यश्चक्षुषोपलभ्यन्ते न वा तद्विषयेच्छा न च प्रयत्नः अनाद्यभ्यासवासनावशाददृष्टविशेषनियतं तु स्पार्शनप्रत्यक्षमेव तत्र कारणमेषितव्यम् तथा प्रकृतेपीति । इन्द्रियान्तरविकारं विवृणोति । नयनेति । नयनस्य चक्षुषो विषयश्चिरबिल्वरूपः तस्यालोचनं ग्रहणं तदनन्तरं रसस्यानुस्मृतिस्तदनन्तरं व्याप्त्यनुस्मृतिस्तदनन्तरं तथाविधरसानुमानमित्यनेन क्रमेणेन्द्रियान्तरस्य रसनस्य विकारो दन्तोदकसंप्लवलक्षणस्तस्य दर्शनादुभयदर्शी अनुमीयते उभाभ्यामुभयं द्रष्टुं शीलमस्येत्युभयदर्शी अनेकगवाक्षान्तर्गतप्रेक्षकवदिति दृष्टान्तः । प्रयोगस्तु नयनादीन्द्रियमचेतनं नियतविषयत्वात् गवाक्षवत् । यद्वा चेतनो नियतविषयेभ्यो

---

(१) प्रेक्षक—पा० ५ पु० ।

(२) प्राप्त—पा० ३ पु० ।

सुखदुःखेच्छाद्वेषप्रयत्नैश्च गुणैर्गुण्यनुमीयते ते च न शरीरेन्द्रियगुणाः(१) कस्मादहङ्कारेणैकवा-

भियते प्रतिसन्धातृत्वात् प्राक्प्रत्यग्गवाच्च(२)दर्शीवदिति अन्यथा अन्येन दृष्टस्यान्येनास्मरणात् प्रतिसन्धानानुपपत्ताविच्छानुपपत्तेर्विकारानुपपत्तिः कारणाभावादिति भावः। ननु भस्त्रादिषु सर्वत्र प्रयत्नवानधिष्ठाता शरीरी उपलब्धस्तथा च यथा सिद्धदृष्टान्तबलेन विग्रहस्यापि तथाभूत एवाधिष्ठातानुमातुमुचितः। अनवस्थाभयात् नैवमिति चेत् तर्हि विग्रह एव प्रयत्नवानस्तु कृतं ततोऽप्यधिकेनाधिष्ठात्रेति न प्रतिसन्धातुस्तथाभावात् शरीरस्य च भेदेन तथाभावानुपपत्तेः भूतत्वकार्यत्वादिना च प्रागेव तस्य चैतन्यप्रतिषेधात् प्रतिषेत्स्यमानत्वाच्चेति। एवं कार्येण कारणमनुमाय गुणैर्गुणिनमनुमिनोति। सुखेति। तथाहि सुखादयो द्रव्याश्रिताः गुणत्वाद्रूपवदिति प्रयोगः अनाश्रितत्वे द्रव्यादन्यत्राश्रितत्वे वा गुणत्वव्याघातात् सिद्धं च गुणत्वमेषां कार्यत्वे सत्यव्यापकत्वे सति वैकेन्द्रियग्राह्यत्वात् रूपवत् शब्दवच्च कार्यस्य द्रव्यत्वे निरवयवत्वामूर्तत्वव्याघातात् कर्मत्वे संयोगविभागानपेक्ष्यकारणत्वप्रसङ्गात् सामान्यादित्वे स्वलक्षणव्याघातादित्यादयस्तर्का ऊहनीयाः। ननु भवत्वमीषां गुणत्वाद्द्रव्याश्रितत्वं तथापि शरीराश्रितत्वमिन्द्रियाश्रितत्वं वा भविष्यतीत्यत आह। ते चेति। कस्मादिति

(१) विशेषगुणाः—पा० ५ पु०।

(२) प्रत्येकगवाक्ष—पा० ३ पु०।

मिथ्याकाङ्क्षायां हेतुमाह(१)। अहङ्कारेणैकवाक्यताभावादिति सामानाधिकरण्येनावबोधादित्यर्थः। योऽहं सुखसाधनं स्रक्चन्दनादिकमुपलभ्य तदुपादित्सुः प्रयतमानस्तदुपात्तवान् सोऽहं सुखी योऽहं दुःखसाधनमहिकण्टकादिकमुपलभ्यापि न परिहृतवान् सोऽहं दुःखी योऽहं सुखं दुःखं चानुभूतवानस्मि सोऽहं तत्साधनमिदानीमुपलभ्याऽदातुमिच्छामि द्वेश्मि चेत्यनेन क्रमेण प्रतिसन्धीयमानाः खल्विमे गुणाः दुःखसुखादयोऽनुमीयन्ते इदं च प्रतिसन्धीयमानत्वममीषामनेकाश्रयतया विरुध्यते चैत्रमैत्रादिसुखादिषु प्रतिसन्धानादर्शनात्। तथा च शरीरेन्द्रियाणामपि प्रत्यहं परिणतिभेदेन भिन्नत्वात् तद्गुणानाममीषामप्रतिसन्धानप्रसङ्गः भिन्नाश्रयाणामपि च प्रतिसन्धाने चैत्रमैत्रादिगुणानामपि प्रतिसन्धानापत्तिः। ननु शरीरगुणा अपि प्रतिसन्धीयन्त एव तद्यथा योऽहं गौरः स्थूलो ह्रस्व आसं सोऽहमिदानीं श्यामः कृशो दीर्घ इति। न तस्य भ्रान्तत्वात्। प्रकृतमपि प्रतिसन्धानं भ्रान्तमेव भविष्यति किं नः छिन्नमिति चेत् न स्मर्तुरभ्रान्तेः अन्येन दृष्टस्य चान्येनास्मरणात्। अन्यथा अतिप्रसङ्गात्। तस्मात् प्रतिसन्धातुर्देहादिभ्योऽन्यत्वे सिद्धे तदधिकरणत्वे च सुखादीनामनुभूयमाने प्रयोगः। सुखादयो न शरीरेन्द्रियगुणाः अहंकारेण समानाधिकरणत्वात् स्मृतिवदिति। स्यादेतत् प्रतिसन्धानबलेन स्मृतिबुद्ध्योर्देहाद्यनधिकरणत्वं सिद्ध्यतु देहादीनां भेदेन प्रतिसन्धातुं स्मर्तुं चासमर्थत्वात्। सुखादयस्तु गौरत्वादिवद् देहधर्मा एव भ्रान्तिव-

(१) हेतूनाह—पा० ३। ४ पु०।

# क्यताभावात् प्रदेशवृत्तित्वादयावद्द्रव्यभावित्वाद्

---

प्रादहंकारेण समानाधिकरणतया प्रतिसन्धास्यन्त इति चेत् न ज्ञानेन भिन्नाधिकरणानां कार्यकारणभावनियमानुपपत्तेः। न ह्यन्यो जानात्यन्य इच्छति अन्यः प्रयतत इति सम्भवति तथात्वे च चैत्रे द्रष्टरि मैत्रे चैषितरि जैत्रो यतते तस्मादैकाधिकरण्येनैवामीषां कार्यकारणभावनियमो नान्यथेति। हेत्वन्तरमाह। प्रदेशवृत्तित्वादिति। देहाद्यव्यापकत्वादित्यर्थः। प्रयोगस्तु बुद्ध्यादयो(१) न स्पर्शवद्विशेषगुणास्तद्व्यापकत्वात् ये पुनस्तद्विशेषगुणास्ते तद्व्यापकाः यथा रूपादय इति व्यतिरेकः तत्संयोगवदित्यन्वयः। हेत्वन्तरमाह। अयावद्द्रव्यभावित्वादिति। सत्येव स्पर्शवति द्रव्ये निवर्तमानत्वादित्यर्थः। ये पुनः स्पर्शवद्विशेषगुणा(२)स्ते यावद्द्रव्यभाविनो भवन्ति यथा रूपादय इति व्यतिरेकः। संयोगवदिति वा पूर्ववदन्वयः। अनयोस्तर्कः यदि सुखादयः स्पर्शवद्विशेषगुणा भवेयुः न नियतबुद्धिकार्या भवेयुर्नियामकाभावात् विषयविषयीभावस्य नियामकत्वे चैत्रस्य बुद्ध्या मैत्रविषयिण्या मैत्रसमवेतस्य सुखादेरुत्पादनप्रसङ्गादिति। स्यादेतत् तथापि ताभ्यां हेतुभ्याम् इन्द्रियगुणत्वममीषां न निषिद्धं शब्देन व्यभिचारात्। न हि शब्दो यावद्द्रव्यभावी(३) नापि श्रोत्रं व्याप्य वर्त्तते निमित्ताभिमुख्येन तत्सन्नि-

---

(१) सुखादयः—पा० ३ पु०।

(२) पुनस्तद्विशेषगुणा—पा० ३ पु०।

(३) यावद्द्रव्यं भवति—पा० ३। ४ पु०।

**बाह्येन्द्रियाप्रत्यक्षत्वा(१)च्च तथाहंशब्देनापि पृथिव्यादिशब्दव्यतिरेकादिति ॥**

---

भिमपेच्योत्पत्तेः यावति गगने पवनसम्बन्धः तावत्येव शब्दो जन्यते नान्यत्र अन्यथा प्राच्यां शब्दः प्रतीच्यां शब्द इति देशावच्छेदेन प्रत्यक्षानुपपत्ति(२)रित्याशङ्क्य हेत्वन्तरमाह । बाह्येन्द्रियाप्रत्यक्षत्वादिति । मानसप्रत्यक्षत्वादित्यर्थः । न शरीरेन्द्रियगुणा इच्छादयः मानसप्रत्यक्षत्वात् बुद्धिवत् ज्ञानवैयधिकरण्येऽमीषामप्रत्यक्षत्वप्रसङ्गः । तथापि(३) प्रत्यक्षत्वे चैत्रेण मैत्रसमवेतानाममीषामिच्छादीनामुपलम्भापत्तिः शरीरादिगुणानाममीषां चक्षुरादिग्राह्यत्वेनान्धादिभिरनुपलम्भप्रसङ्गः । मनोग्राह्यत्वे च तद्धर्माणामन्धादिभिरपि रूपाद्युपलम्भापत्तिः इन्द्रियसामर्थ्यनियमात् रूपरसादिवद् विषयनियमो भविष्यतीति चेत् न मनसः सर्वविषयत्वात् नियतबाह्यविषयत्वे च मनस्त्वव्याघातादिति । अहं युवा कामी यते सुखी दुःखी वा स्पर्शनसुखी वायुः कर्णे कटु रटति मनो मे दुःखितं मनसि मे हर्षः पादे मे सुखं शिरसि मे वेदनेत्यादिप्रत्ययात् । शरीरेन्द्रियगुणत्वममीषां शङ्कास्पदमिति तदेव प्रतिषिद्धम् अन्यगुणत्वे तु शङ्कैव नास्तीत्युपेक्षितवान् । संप्रति पूर्वहेतूनां चेष्टादीनां रथकर्मणा सारथिवदित्यादि-

(१) ग्राह्यत्वा—पा० ३ पु० ।
(२) प्रत्ययानुपपत्तेः—पा० ३ पु० ।
(३) तथात्वे—पा० ३ पु० ।

दृष्टान्तेषु विशेषविरोधाभासपरिहाराय(१) प्रत्यक्षसिद्धं पृथि-व्याद्यतिरिक्तं स्वात्मानमेव दर्शयिष्याम इत्यभिसन्धाय(२) प्र-त्यक्षमाह। तथाहंशब्देनेति। अहंशब्देन प्रत्यक्षमुपलक्षयति यथा परात्मा(३)नुमीयते तथा प्रत्यक्षतोप्यहंप्रत्ययेन आत्मा विषयीक्रियत इत्यर्थः। नन्वयमहंप्रत्ययो लिङ्गजः शब्दजो वा तदनुसन्धानमन्तरेणोपजायमानत्वात्। ननु च पृथिव्यादिविषय एवायमहंप्रत्ययो भविष्यतीत्याशङ्का तर्कमाह। पृथिव्यादिशब्दव्यतिरेकादिति। पृथिव्यादि-प्रत्ययवैयधिकरण्यादित्यर्थः। यदि ह्ययमहंप्रत्ययः पृथि-व्यादौ भवेत् अहं पृथिवी अहमाप इत्याद्याकारो भवेत् द्रव्यप्रत्ययवत् न चैवम्। स्यादेतत् सामान्यतो माभूत् विशे-षतस्तु भविष्यति। तथा कश्चित्पार्थिवो गोघटादिर्नतु सर्वस्तथा कश्चित्पार्थिवोऽहं भवेय इह को विरोधः न अहङ्कारस्य प्रतिसन्धातृविषयत्वात् शरीरस्य च भेदेनाप्रतिसन्धातृत्वा-दित्युक्तत्वात् तन्मूलाः परमाणवः स्थिरत्वात् प्रतिस-न्धातृत्वेनाहंकारविषया भविष्यन्तीति चेत् न तेषा-मतीन्द्रियत्वात्। अपि च शरीरगोचरत्वे तस्य बाह्येन्द्रि-यजन्यत्वमापद्येत तथा च चक्षुरादिव्यापारोपरमे अहमिति प्रत्ययो न स्यात् मानसत्वे वास्य शरीरस्य तद्गुणानां च गौरत्वादीनामपि मानसत्वप्रसङ्गात् न हि निर्गुणं द्रव्यमुप-

(१) विरोधपरिहाराय—पा० ३ पु०।

(२) दृष्टान्तयिष्याम इति प्रतिसन्धाय—पा० ३ पु०।

(३) परमात्मा—पा० १ पु०।

लभ्यते तथा चान्धादीनां रूपादिवदहंप्रत्ययानुपपत्तिरिति । तस्मात् परमार्थतः सामान्यतो विशेषतश्च सकलपृथिव्यादिप्रत्ययव्यतिरेकादहंप्रत्ययस्तदतिरिक्तं द्रव्यमालम्बते। तथा चेष्टादीनां हेतूनामात्मकार्यत्वे सिद्धे परत्रापि ततस्तत्सिद्धिः रथवदित्यादौ मच्छरीरवदित्यादिविपरिणामिनोदाहरणस्य निरुपद्रवत्वादिति सर्वमवदातम् ॥

तदेतद्वैनाशिकैरुपहस्यते। बुद्धेर्हि कार्यस्य यद्युपादानकारणमात्मा विवक्षितः स एव नो बुद्ध्यन्तरम्। अथ सुखादीनां गुणानामाश्रयो द्रव्यं तदपि प्रक्रियामात्रं क्षणिकत्वसिद्धावस्य षट्पदार्थीकाव्यस्य बाललालनार्थत्वात्। तथाहि यत् सत् तत् क्षणिकं यथा घटः संश्च विवादाध्यासितः शब्दादिरिति। सत्त्वं तावद्यत्किञ्चिदस्तु प्रकृते तावदर्थक्रियाकारित्वं बौद्धस्य विवक्षितं तच्च भावानां प्रत्यक्षसिद्धं व्याप्तं च क्रमयौगपद्याभ्यां न हि क्रमाक्रमाभ्यामन्यः प्रकारः शङ्कितुमपि शक्यते व्याघातस्योद्भटत्वात् न क्रम इति निषेधादेवाक्रमाभ्युपगमात् नाक्रम इति निषेधादेवाक्रमोपगमात् अनभ्युपगमे च प्रतिक्षेपो व्याहन्यत इति तौ च क्रमाक्रमौ स्थिरे न सम्भवन्तौ अर्थक्रियामपि ततो व्यावर्त्तयतः वर्तमानार्थक्रियाकरणकाले हि अतीतानागतयोरप्यर्थक्रिययोः समर्थत्वे तयोरपि करणप्रसङ्गात्। असमर्थत्वे तु पूर्वापरकालयोरप्यकरणापत्तेः। समर्थोऽप्यपेक्षणीयासन्निधेर्न करोति तत्सन्निधेस्तु करोतीति चेत् अथ किमर्थं सहकारिणामपेक्षा किं स्वरूपलाभार्थम् उतोपकारार्थम्

अथ कार्यार्थं वा। न प्रथम: स्वरूपस्य स्वकारणाधीनस्य नित्यस्य वानित्यस्य च पूर्वसिद्धत्वात्। न द्वितीय: स्वयं सामर्थ्ये असामर्थ्ये वा तस्यानुपयोगात्। सामर्थ्ये हि स्वयमेव कार्यं कुर्यात् किं तेन असामर्थ्ये तूपकारसहस्रेणापि न कुर्यात् तथापि किं तेन। अत एव न तृतीय: स्वयं सामर्थ्ये उपकारिवत्सहकारिणामप्यनुपयोगादिति। अनेकाधीनस्वभावतया कार्यमेवापेक्षत इति चेत् न तस्यास्वतन्त्रत्वात् स्वातन्त्र्ये वा कार्यत्वव्याघातात् तद्धि तत्साकल्येऽपि स्वातन्त्र्यादेव न भवेदिति। अथ केयमपेक्षा नाम किं तै: सह करोतीत्यन्वय: पर्यवसन्न: स्वभावभेदोऽथ तैर्विना न करोतीति व्यतिरेकनिष्ठं स्वरूपमेव आहोस्वित् तैरुपकृत: करोतीत्युपकारभेद:। न प्रथम: स्वभावस्य तादवस्थ्यात् न ह्यस्य सहकारिव्यावृत्तौ स्वभावव्यावृत्ति:। ननु यत एव सहकारिव्यावृत्तावस्य स्वभावो न व्यावर्त्तते अत एव तैर्विना न करोति कुर्वाणो हि तै: सहैव करोतीति स्वभावं जह्यात्। स तर्हि स्वभावभेद: सहकारिसान्निध्ये सति कार्यकारणनियत: सहकारिणो न जह्यात् प्रत्युत फलायमानानपि गले पाशेन बध्वानयेत् अन्यथा स्वभावहानिप्रसङ्गात्। अत एव न द्वितीय: अकर्तृस्वभावापरावृत्ते: अथ तद्विरहादकर्तृस्वभाव: स्यात् कालान्तरेऽपि स्वभावहेतुवशादुपसर्पतोपि सहकारिण: पराणुद्य न कुर्यात् तद्विरहादकर्तृशील: खल्वयमिति। अथ सहकारिषु सत्सु कर्तृस्वभावस्तद्विरहे त्वकर्तृरूप इत्यभिप्रायो विरुद्धधर्माध्यासस्तर्हि स्वभावं भिन्द्यात् न चायं

कालभेदेन परिहर्तव्यः धर्मिणोऽनतिरेकात् अति-
रेके चास्यौदासीन्यापत्तेः । तथाहि सामर्थ्यासामर्थ्याभ्या-
मन्यो धर्मी स्वरूपेण न किञ्चिदेव स्यादिति । उपकारपक्ष-
स्त्वनेकमुख्यनवस्थादुःस्थतया नोपन्यासस्यापि योग्यः तथाहि
उपकारेऽपि कर्तव्ये सहकार्यन्तरापेक्षायामुपकारपरम्परापात
इत्येका उपकारेणाप्युपकर्तव्यमित्युपकारपरम्परापात इत्यपरा
कर्तव्यस्य चोपकारस्य धर्म्यभेदे धर्म्यैव क्रियेत भिन्ने तु धर्मिणः
किमायातम् न ह्यस्मिन् जाते नष्टे वान्यस्य स्वरूपं किञ्चिद्भव-
त्यतिप्रसङ्गात् अथ तेनापि तस्य किञ्चिदुपकारान्तर-
माधेयमिति तृतीयानवस्थेति । स्यादेतत् । क्षणिकोऽपि
भावः किं निरपेक्षः सापेक्षो वा न प्रथमः । केवलाद्द-
ङ्कुरसहस्रेणापि कार्यस्यानुत्पत्तेः । न द्वितीयः । अनु-
पकारकापेक्षायामतिप्रसङ्गात् । तथा च पुञ्जात् पुञ्जो-
त्पत्तौ बीजमपि पवनपाथस्तेजोऽङ्कुरान् करोतीति पक्षे
किं येनैव स्वभावेनाङ्कुरं करोति तेनैव पवनादीनन्येन
वा । न प्रथमः । कार्याणामभेदप्रसङ्गात् । न द्वितीयः ।
एकस्यापि क्षणिकस्य स्वभावभेदापत्तेरिति । तदिदमश्रि-
क्षितोल्लासनम् । साहित्यकरणलक्षणायां ह्यपेक्षायां क्षणिकस्य
सापेक्षत्वादेव समर्थस्य सहकार्यव्यभिचारात् । अन्यथा तु
निरपेक्षत्वमेव तैर्विनाप्यसत्त्वात् सहकार्यनुपकार्यत्वाच्च
स्थिरस्वभावस्तैर्विनाप्यस्तीति समर्थः किं न कुर्यादिति
विशेषः । एकस्यैवानेककार्यकारिस्वभावस्य स्वकारणा-
दुत्पत्तेः कार्यभेदेन स्वभावभेदापादनस्यापि दूरनिरस-

नात् । न च स्थैर्येऽप्येष न्यायः संभवति । तदुत्पत्तेरनन्तरमेव कार्यकारणप्रसङ्गात् । तदैव तस्य तत्स्वभावत्वादिति । एतेनैकजातीयत्वैकदेशताप्रसङ्गावपि निरस्तौ वेदितव्यौ । तस्माच्च क्रमयौगपद्ययोर्व्यापकयोर्व्यावृत्तेरक्षणिकाद्व्यावर्तमानार्थक्रिया क्षणिके विश्राम्यतीति प्रतिबन्धसिद्धिः । अन्वयेन वा यद्विरुद्धधर्माध्यस्तं तन्नाना यथा शीतोष्णे कालभेदेन विरुद्धधर्माध्यस्तश्च विवादास्पदीभूतो भावः । न चायमसिद्धः । सामर्थ्यासामर्थ्ययोः प्रसङ्गतद्विपर्ययसिद्धत्वात् । तथाहि यद्यदा यज्जननसमर्थं तत् तदा तत्करोत्येव । यथा सामग्री स्वकार्यं समर्थश्चायं भावो वर्तमानार्थक्रियाकरणकालेऽतीतानागतयोरप्यर्थक्रिययोरतिप्रसङ्गः । स्वभावहेतुः सामर्थ्यमात्रानुविधायित्वात् अर्थक्रियाकारित्वस्य । यद्यदा यन्न करोति तत्तदा तत्र न समर्थम् । यथा शिलाशकलमङ्कुरे । न चैष करोति वर्तमानार्थक्रियाकरणकालेऽतीतानागते अप्यर्थक्रिये इति व्यापकानुपलब्धिः प्रसङ्गविपर्यय इति ॥

अत्र संक्षेपतः किञ्चिदुच्यते । सत्त्वं तावदसिद्धव्याप्तिकतया व्याप्यत्वासिद्धमसिद्धप्रभेदोऽस्माकम् । सन्दिग्धविपक्षव्यावृत्तिकतया सन्दिग्धानैकान्तिकप्रभेदो बौद्धस्य । नहि कुर्वद्रूपत्वाक्षेपकरणधर्मत्वोत्पत्त्यनन्तरकारित्वादिशब्दवाच्याद्न्यादृशं सामर्थ्यमुपादाय प्रसङ्गाद्यवकाशः । तथाभूतं च सन्दिह्यते । न ह्येवंभूतत्वे भावस्य प्रत्यक्षमनुमानं वा सम्भवति । सहकारिषु सत्सु करोति तैर्विना न करोतीत्ययमस्य स्वभावो दर्शनानति-

क्रमेणाभ्युपगम्यते अविरोधात् उभयवादिसिद्धत्वाच्च। त्वया ह्येतदवश्यमभ्युपगमनीयम्। क्षणिकोऽपि भावः कुर्वद्रूपः सहकारिषु सत्स्वेव सहैव करोतीति नियतस्वभावः अन्यथा सहकारिणामसहकारित्वप्रसङ्गात्। ततोन्वयनियमे तैर्विना न करोतीति व्यतिरेकोऽप्यव्यवर्जनीयः। अन्वयव्यतिरेकयोरन्यतरनियमस्यान्यतरसिद्धिनान्तरीयकत्वादिति बौद्धस्थितेः। तथा च तैर्विना क्रतस्य करणमापाद्यमानमापादकमेव व्याहन्तीति। नन्वचोक्तं तैः सहैव करोतीति स्वभावाभ्युपगमे सहकारिणो न जह्यात्। प्रत्युत पलायमानमपि गले पाशेन बध्वाकृष्यानयेदिति सत्यमुक्तम्। आत्मानमवीक्षमाणेन तत्प्रलपितं तवापि व्यतिरेकनियमे सहकारिणः स्वकारणादापततोऽपि निवार्यं न कुर्यात्। तैर्विना न करोतीत्ययमस्य स्वभावः। अथ तैः सहैव करोतीत्ययमप्यस्य हि स्वभावः एवं तर्हि विरोधः स्यात्। स्यादेतत्। स्वकारणाधीनसन्निधयः सहकारिणस्तेषामुपनयापनययोरयमनीश्वर एव। यद्युपनिबन्धनेनोच्यते। यदि सहकारिणो न स्युर्न कुर्यादिति तैर्विना तु समर्थो नास्त्येव भाव इति चेत्। नन्वस्माकमप्येवमस्तु। स्वकारणाधीनसन्निधीनां सहकारिणामुपनयापनययोरयमनीश्वर एव। यद्युपनिबन्धनेन तूच्यते। यदि सहकारिणः स्युः कुर्यात् न तु ते तदानीं सन्तीति स्यात्। तैः सहैव करोति तैर्विना न करोतीत्येवायमस्य स्वभाव इत्यावयोः समोऽभ्युपगमः। किन्त्वयं विशेषः। तैः सहैव करोतीति

योऽस्य स्वभावः स पश्चादस्ति नास्ति वा। प्रथमे पश्चादपि कुर्यात्। द्वितीये त्वसन्मतापात इति। अथ तवापि मते तैः सहैव कुर्वतोऽस्य तैर्विना न करोतीति यः स्वभावः स यद्यस्ति तदा न कुर्यादेव। नास्ति चेत् व्यतिरेकव्यावृत्तावन्वयव्यावृत्तिरिति स्वरूपहानिप्रसङ्गः। स्वरूपमस्त्येव तैर्विना भावमात्रं तु नास्तीति चेत्। ममाप्युत्तरकालं स्वरूपमस्ति तत्साहित्यमात्रं तु नास्तीति समः समाधिः। तस्मात् सहकार्यन्वयव्यतिरेकोपलक्षितमपेक्षितं च कार्येण स्वरूपमेव भावानां तादृशं तदेव सामर्थ्यपदार्थः तदेव सहकार्यन्वयमपेक्ष्य कुर्वदित्युच्यते तद्व्यतिरेकमपेक्ष्य न कुर्वदिति युक्तमुत्पश्यामः॥

अथवाऽस्तु समर्थोऽसमर्थश्च भावस्तथापि क्षणिकपक्ष इव कालभेदेनाविरोधादसिद्धो विरुद्धधर्माध्यासः कथं यदा हि क्षणिको भावः स्वकालस्थ एव एकां काञ्चिदर्थक्रियां करोतीति तदा तामेवार्थक्रियां कालान्तरेऽपि किं न करोतीति परिभावय॥

असत्त्वादिति चेत्। किमत्रासत्त्वेन न हि सत्त्वप्रयुक्तं करणं तथा सति देशान्तरेऽपि कुर्यात् तस्मात् तत्र काले देशे वास्तु माभूत् यदि समर्थस्तदा कुर्यादेव। अत एव स्वप्नावसानिकं विज्ञानं प्रहराद्यन्तरितमपि प्रसुप्तस्य जागराद्यज्ञानमुत्पादयतीतिप्रज्ञाकरः असामर्थ्यादेव तर्हि न करोतीति चेत्। तर्हि तामेवार्थक्रियां प्रति समर्थोऽसमर्थश्चेत्यापतितं को दोषः कालभेदादिति चेत्। स्थिरेऽप्येमेवादोषोऽस्तु

असत्त्वमेवासामर्थ्यमिति चेत्। न उक्तोत्तरत्वात्। सामर्थ्ये हि स्वकालस्थ एवान्यदा तामेवार्थक्रियां कुर्वाणो गीर्वाणशापेनापि नापहस्तयितुं शक्यते। किं पुनस्तवामुना मर्मपीडाजनितविक्लवविक्रोशमात्रेण असामर्थ्ये तदापि न कुर्यात्। किं च यस्य मते सत्त्वमधिकं नास्ति किन्तु स एव भावः तदा कथं न विरुद्धधर्माध्यासः एकस्य विधिनिषेधस्वभावानुपपत्तेः। कानुपपत्तिः। साम्प्रतं यदयमस्ति कालान्तरे नास्तीति चेत्। सामर्थ्यासामर्थ्ययोरप्येवमस्तु प्रथमं समर्थस्यासमर्थस्य वा पश्चात् स्वभावविपर्ययः कुत च आगत इति चेत्। प्रथमं सतोऽसतो वा पश्चात् स्वभावविपर्ययः कुत इति च तुल्योनुयोगः। नायं स्वभावविपर्ययः किं तु स्वदेशकालस्थ एवान्यदेशकालयोरसद्व्यवहारकारी। स्वकारणादेवायात इति चेत्। ममापि तामर्थक्रियां प्रति तदानीं समर्थ एवान्यदा न समर्थ इति स्वकारणादेवायात इति तुल्यम्। तस्मात् सार्थक्रिया तेन तदैव कर्तव्या नान्यदेति स्वभावनियमोऽप्युभयोर्दर्शनयोः समानः। अन्यदा तु न कर्तव्यैवेति क्षणिकपक्षे ऽन्यदैव कर्तव्यैवेति स्थिरपक्ष इति विशेषः। न चान्यदाकरणतदातत्करणयोः कश्चिद्विरोधो देशभेदेनार्थक्रियाभेदनियमवदुपपत्तेः। तस्माद्देशकालविषयभेदेन करणाकरणे सामर्थ्यासामर्थ्ये च विरुद्धे एव न भवत इत्यन्यो विरुद्धधर्मोऽनुसर्तव्यः। स यत्र नास्ति तत्र क्षणवदनवधेरपि गगनादेरभेदोऽध्यवसातव्य इति रहस्यम्। विस्तरस्त्वात्मतत्त्वविवेके न्यायकुसुमाञ्जलौ चानलसधियां सुलभ इति॥

तस्य गुणाः बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारसंख्यापरिमाणपृथक्त्वसंयोगविभागाः । आत्म-

---

एवं स्थैर्यसिद्धौ न बुद्धिर्बुद्धेरुपादानं गुणत्वात् । न च गुणगुणिनोरभेदो विरुद्धधर्माध्यासादिति संक्षेपतः सर्वं सुस्थम् ॥

स्यादेतत् । किं सुखादय एवात्मनो गुणाः यदेतैरेव गुणैर्गुण्यनुमातव्यः । न त्वेवं बुद्ध्यदृष्टादीनामगुणत्वेऽन्यगुणत्वे वा बहुविप्लवेत । सुखादीनामपि चात्मगुणत्वं न सिद्ध्येत् । संयोगाद्यभावे तेषां तद्गुणानां कादाचित्कत्वानुपपत्तेरित्याशङ्काह । तस्य गुणा इति । तेषां प्रत्यक्षसिद्धत्वेऽपि गौरवात् सूत्रकारानुमतिमाह । आत्मलिङ्गाधिकार इति । प्राणादिसूत्रे बुद्ध्यादयः प्रयत्नान्ताः सिद्धाः । यद्यपि बुद्धिस्तत्र कण्ठरवेण नास्ति तथापि सुखादय एव स्वकारणतया तामाक्षिपन्ति । न ह्यन्यसमवेतया इष्टादिबुद्ध्यान्यस्य सुखादिकमुत्पाद्यते । तथात्वे देवदत्ते चन्दनस्पर्शमनुभवति यज्ञदत्तस्य सुखमुत्पद्येत इन्द्रियान्तरविकाराच्चोभयदर्शित्वं विवक्षित्वा बुद्धिगुणत्वमात्मनो दर्शितमिति भावः । धर्माधर्मावात्मान्तरगुणानामकारणवचनादिति । विहितनिषिद्धाचरणेन धर्माधर्मौ जायेते चिरध्वस्तस्य कर्मणः कालान्तरभाविफलहेतुत्वानुपपत्तेस्तौ कुत्र जायेतामित्यपेक्षायां सूत्रकारेणोक्तम् आत्मान्तरगुणानामात्मान्तरगुणेष्वकारणत्वादिति । अस्यार्थः । अन्यसमवेताभ्यां धर्माधर्माभ्यामन्यस्य सुखदुःखानुपपत्तेः । उत्पत्तौ

लिङ्गाविकारे बुद्ध्यादयः प्रयत्नान्ताः सिद्धाः(१) । धर्माधर्मावात्मान्तरगुणानामकारणत्ववचनात् । संस्कारः स्मृत्युत्पत्तौ कारणवचनात् । व्यवस्थावचनात्(२) संख्या पृथक्त्वमप्यत एव(३) । तथा चा-

---

वा कृतहानाकृताभ्यागमप्रसङ्गात् । न चान्यसमवेतत्वेऽपि तत्कृतत्वेन नियमो भविष्यतीति वाच्यम् ऋत्विगादिष्वपि प्रसङ्गात् । दृष्टप्रयोजनापेक्षितत्वेऽपि तेषां कर्तृत्वात् । नहि दृष्टापेक्षया तत्कर्तृत्वं कर्मणो निवर्तते । तदयं प्रमाणार्थः । देवदत्तविशेषगुणप्रेरितभूतकार्यास्तदुपगृहीताश्च शरीरादयः कार्यत्वे सति तद्भोगसाधनत्वाद् गृहवदिति । जातेष्टिपितृयज्ञाभ्यामपि पुत्रपितृगामिफलसिद्धिः तदाश्रयापूर्वजननद्वारैवेत्यव्यभिचारः । अन्यकृतेन कर्मणान्यत्रापूर्वोत्पत्तिरिति शास्त्रसिद्धमृत्विगादिवदिति तदेव धर्माधर्मावप्यात्मगुणौ मुनेरनुमतौ । संस्कारे तदनुमतिमाह । संस्कारः स्मृत्युत्पत्ताविति । अनेनात्ममनसोः संयोगात् संस्काराच्चानुस्मृतिरिति सूत्रं स्मारयति । न चान्यसंस्कारेणान्यत्र स्मृतिर्देवदत्तेनानुभूते यज्ञदत्तस्य स्मरणप्रसङ्गात् । अतोऽनुभवसमानाश्रयः संस्कारः सिद्ध इत्यर्थः । व्यवस्थावचनात् संख्येति नानात्मानो व्यवस्थात इति सूत्रं दर्शितम् । द्रव्यत्वेन सामान्यतः संख्यायां

---

(१) प्रयत्नान्ताश्च प्रसिद्धाः—पा० ६ पु० ।

(२) वचनाभिसम्बन्धात्—पा० ५ पु० ।

(३) मत एव—पा० १ पु० ।

सिद्धायां किं पृथिव्यादिवद्बहुत्वमुताकाशादिवदेकत्वमेवेति नानात्वे दर्शिते तन्नान्तरीयकतया बहुत्वसंख्या दर्शितेत्यर्थः ॥

अथ कोयं व्यवस्थानियमः। प्रथमस्तावत् कश्चित् संसरति कश्चिदपवृक्त(१) इति। यदि ह्येक एवायमात्मा शुकः प्रह्लादो वा मुक्त इति कोऽपरः संसरेत्। न चेयता कालेन नापवृक्त एव कश्चित् तथा सति नापवृज्येत च। न ह्यनादौ संसारे यन्न वृत्तं तद्वर्त्स्यतीति संभवति न च बन्धमोक्षावेकस्य संभवतः विरोधात् ॥

अपरा च व्यवस्था कश्चिदीश्वरः कश्चिदनीश्वर इति न चेश्वरो नाम जगति नास्ति तत्सद्भावे यत्नस्य कृतत्वात् नाप्यस्मदादयः स्वात्मनि सार्वज्ञ्यं सर्वकर्तृकत्वं वावगच्छन्ति। उपदेशाद्यपेक्षत्वादिच्छाविघाताच्चेति ॥

अथान्या व्यवस्था कश्चित्सुखी कश्चिद् दुःखीत्यादि। ननु पादे मे सुखं पादान्तरे मे दुःखं शिरसि मे वेदनेत्यादिवच्छरीरभेदेनैकस्यापि सुखदुःखे यदि स्याताम् को दोषः न ब्रूमः एकस्य सुखदुःखे न संभवतः। किं तु योऽहं देवदत्तः सुखी सोऽहं यज्ञदत्तो दुःखीति प्रतिसन्धानं स्यादिति ब्रूमः। अप्रतिसन्धानमपि शरीरभेदेनैवोपपत्स्यते। जन्मान्तरसुखादिवदिति चेत्। न तत्र संस्कारस्यासत्त्वात् अभिभवादनुद्भवाद्वा तदुपपत्तेः। न चैवमिहापि स्यात्। यज्ञदत्तवद् देवदत्तेनाप्यप्रतिसन्धानप्रसङ्गात्। अविद्यावशादात्मनोऽपि सुखादयो नात्मीयतया प्रति-

(१) कश्चिदपवृज्यते कश्चिन्नेति—पा० ४ पु०।

त्मेतिवचनात् परममहत्परिमाणम्। सन्निकर्षज-

---

सम्बीयन्त इति चेत् न यज्ञदत्तवद् देवदत्तेनाप्यात्मीयतयाऽप्रतिपत्तिप्रसङ्गात्। परमविदुषेश्वरेणास्मदादिदुःखस्य स्वीयतया प्रतिसन्धानापत्तेश्च। एतेन जीवात्मनामियं व्यवस्था न तु परब्रह्मण इति निरस्तम्। यतो व्यवस्था तत एवात्मा तत्त्वतो भिन्न इति स्थितिः। परब्रह्मणि चेश्वरादन्यस्मिन् प्रमाणाभावात्। अनेकात्मत्वे ऐकात्म्यश्रुतिविरोध इत्यपि नास्ति। मुमुक्षुणा सर्वं विहाय स्वात्मप्रतिष्ठेन(१) भवितव्यम्। न चैक एवेति तात्पर्यादिति। पृथक्त्वमप्यत एवेति। यतः संख्या तत्र सिद्धा ततः पृथक्त्वमपि संख्यानुविधानात् तस्येत्यर्थः। द्रव्यत्वेन परिमाणयोगे सत्याह। तथा चात्मेतिवचनादिति। विभुत्वान्महानाकाशस्तथा चात्मेति सूत्रं स्मारयति। विभुत्वाद् यथाकाशो महाँस्तथा तत एव वैभवादात्मापि महानित्यर्थः। विभुत्वमेव तस्य कुत इति चेत् न तत्कार्यस्य ज्ञानसुखादेः सर्वत्र दर्शनात्। शरीरस्य गत्यैव तदुपपन्नमिति चेत् न अमूर्तत्वात् एतदपि कुत इति चेत् परमाणुत्वेऽप्रत्यक्षप्रसङ्गात् प्रत्यक्षगुणानधिकरणत्वप्रसङ्गाच्च अवयवित्वेऽनित्यत्वप्रसङ्गात् आदिमत्तया वीतरागजन्मादर्शनानुपपत्तेश्चेति। एवं सूत्रकारानुमतिप्रदर्शनच्छलेन बुद्ध्यादिषु परिमाणान्तेषु प्रमाणमादर्शितम् सम्प्रति संयोगवि-

---

(१) विहायात्मप्रतिष्ठेन भवितव्यम्—पा० ४ पु०।

त्वात् सुखादीनां संयोगः । तद्विनाशकत्वा-द्विभाग इति ॥

मनस्त्वाभिसम्बन्धान्मनः(१) । सत्यप्यात्मेन्द्रियार्थसान्निध्ये ज्ञानसुखादीना(२)मभूत्वोत्पत्तिदर्शनात्

---

भागवानात्मा द्रव्यत्वात् पृथिवीवदिति प्रमाणस्य तर्कमाह । सन्निकर्षजत्वादिति । सहकार्यन्तरनिरपेक्षस्यात्मनः सुखादिकारणत्वे तेषां सततोत्पत्तिप्रसङ्गात् निमित्तमात्रापेक्षित्वे ऽपि सर्वत्रोत्पत्तिप्रसङ्गात् तथा च शरीरावच्छेदेन तदुत्पत्तिनियमो न स्यात् शरीरेणात्मावच्छेदस्य संयोगादन्यस्यानुपपत्तेः एवं मनःसंयोगोऽसमवायिकारणत्वेन व्याख्यातः । अदृष्टवदात्मसंयोगश्च ज्वलनपवनादिक्रियाकारणत्वेन बोद्धव्यः । तद्विनाशकत्वाद्विभाग इति । यद्यात्मनि विभागो न स्यादुत्पन्नोऽपि संयोगो न विनश्येत आश्रयनाशाभावादिति भावः ॥

मनस्त्वाभिसम्बन्धान्मन इति । मनस्त्वं नाम सामान्यविशेषस्तदभिसम्बन्धान्मन इतरेभ्यो भिद्यत इत्यर्थः । ननु मन एवासिद्धं कुतो मनस्त्वमित्यत आह । सत्यपीति । यद्यस्मिन् सति कार्यं कदाचिद्भवति तत् तस्मादतिरिक्तापेक्षं यथा सत्यपि तुर्यादिसन्निकर्षे कदाचिद्भवति पटस्तदतिरिक्तकुविन्दाद्यपेक्षः सत्यपि चात्मेन्द्रियार्थसन्निकर्षे

---

(१) मनस्त्वयोगान्मनः—पा० ५ । ६ पु० ।

(२) दुःखादीनां—पा० ५ पु० । ज्ञानसुखदुःखानां—पा० १ पु० ।

करणान्तरमनुमीयते । श्रोत्राद्यव्यापारे स्मृत्युत्पत्ति(१)दर्शनात् बाह्येन्द्रियैरगृहीतसुखादिग्राह्यान्तरभावाच्चान्तःकरणम्(२) । तस्य गुणाः संख्या-

---

कदाचिद् ज्ञानसुखादिकं भवति तस्मात् तदतिरिक्तापेक्षं यस्य तदपेक्षणीयं तदेव मन इत्यर्थः । अपेक्षणीयान्तराभावे सततं कार्योत्पादनप्रसङ्गात् व्यासङ्गेन चैतल्लक्षणीयम् । तथा च क्वचिद्यौगपद्याभिमानः शतपत्रपत्रशतव्यतिभेदवदाशुभावादूहनीयः । अदृष्टमपेक्षणीयं भवतीति चेत् न तदितरकारणचक्रसाकल्ये तदसन्निधानानुपपत्तेः तदसन्निधौ तदितरसाकल्यस्यानुपपत्तेरिति । लिङ्गान्तरमाह । श्रोत्रादीति । स्मृतिः शरीरावच्छिन्नात्मसंयुक्तद्रव्यसाध्या कार्यत्वे सत्यात्मविशेषगुणत्वाद्रूपादिज्ञानवत् यत् तद्द्रव्यं तन्मनः । श्रोत्राद्यन्यतमं तद्भविष्यतीति चेत् अत उक्तं श्रोत्राद्यव्यापार इति अन्यथा असमवायिकारणाभावे तदनुत्पादप्रसङ्गात् विषयविप्रकर्षाच्च तद्व्यापारोपरमो लक्षणीयः । लिङ्गान्तरमाह । बाह्येति । सुखाद्युपलब्धिरिन्द्रियसाध्या जन्यसाक्षात्कारत्वात् रूपाद्युपलब्धिवत् श्रोत्रादिकमेव तत्साधनं भविष्यतीत्याशङ्क्योक्तं बाह्येन्द्रियैः श्रोत्रादिभिरगृहीतेति । यदि बाह्येन्द्रियैः

---

(१) स्मृत्युपपत्ति—पा० ५ पु० ।

(२) ग्राहकान्तराभावाच्चेति—पा० ५ पु० ।

परिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारा:। प्रयत्नज्ञानायौगपद्यवचनात् प्रतिशरीरमेकत्वं सिद्धम्(१)। पृथक्त्वमप्यत एव। तदभावव-

---

श्रोत्रादिभिः सुखादयो गृह्येरन् अन्धबधिरादिभिर्नोपलब्धाः स्युरित्यर्थः। सुखादीनां बुद्धेरन्यत्वं बुद्धेरस्वयंवेद्यत्वं च वक्ष्यते। एवं सिद्धे मनसि व्यक्तिभेदसिद्धौ सत्यां नियतकार्यतया मनस्त्वमपि मेत्स्यतीत्यभिप्रायवांस्तस्य गुणान् स्मारयति। तस्येति(२)। यद्यपि द्रव्यत्वादेव संख्यादिपञ्चकं सिद्धं तथापि सूत्रकारानुमतिप्रदर्शनव्याजेन विशेषं विवक्षन्नाह। प्रयत्नेति। अणुत्वे हि मनसो बहुत्वमर्थसिद्धं अन्यथा एकस्मिन्नेकत्र वर्तमाने शरीरान्तरे तत्कार्यं ज्ञानादि न स्यात् अतो बहुत्वे सत्येकस्मिन्नपि शरीरे तैर्बहुभिर्युगपद् ज्ञानोत्पत्तिप्रसङ्गस्तदवस्थः तद्वरमेकमेव विभु तदस्त्वित्याशङ्क्य सूत्रकृतोक्तं प्रयत्नज्ञानायौगपद्यादेकं मन इति। एकैकस्मिन् शरीरे एकैकमेव मनः प्रयत्नायौगपद्याद् ज्ञानायौगपद्यादणुत्ववत् प्रतिशरीरमेकत्वमप्यनुमातव्यमित्यर्थः। पृथक्त्वमप्यत एव। संख्यानुविधानादिवेत्यर्थः। तदभाववचनादणुपरिमाणं तद-

---

(१) प्रतिशरीरमेकं—पा० ५ पु०।

(२) तस्य गुणानाह। तस्येति—पा० ३ पु०।

**चनादणुपरिमाणम् । अपसर्पणोपसर्पणवचनात् संयोगविभागौ। मूर्तत्वात् परत्वापरत्वे संस्कारश्च।**

---

भावादणु मन इति सूत्रकारवचनात् । तच्छब्देन पूर्वोक्तं वैभवं परामृशति तेन विभवाभावादित्यर्थः । विभवाभावश्च ज्ञानायौगपद्यात् विभवे ह्येकेन्द्रियग्राह्या इव नानेन्द्रियग्राह्या अपि रूपादयो विषयाः सकृदेव ज्ञायेरन् कारणयौगपद्यात् । एतेन स्पर्शशून्यत्वादयः परेषां विभुत्वे हेतवः कालात्ययापदिष्टा द्रष्टव्याः। यद्येवमणु मनः कथं तर्हि छिन्नच्छिन्नानां गृहगोधादिशरीराणामुत्पतनापसर्पणादिचेष्टाविशेषा नह्यविभुनैकेनानेकाधिष्ठानं संभवतीति चेत् न तत्क्षणमपूर्वोत्पन्नप्रयत्नवशात् कर्मोपगृहीतान्तःकरणान्तरवशाद्वेति यत्किञ्चिदेतत्(१) । अपसर्पणोपसर्पणवचनात् संयोगविभागाविति । अपसर्पणमुपसर्पणमशितपीतसंयोगाः कार्यान्तरसंयोगाश्चेत्यदृष्टकारितानि इति सूत्रकारवचनात् । अपसर्पणं पूर्वशरीरविभागहेतुर्मनःकर्म उपसर्पणम् उत्तरशरीरप्राप्तिहेतुर्मनःकर्म ततः संयोगविभागौ सिद्धौ । अन्यथा तदनुपपत्तौ प्रेत्यभावानुपपत्तिरिति भावः ॥

स्यादेतत् । मनसोऽतीन्द्रियत्वात् परापरव्यवहारायोगात् प्रयत्नादृष्टोपग्रहाच्च क्रियोपपत्तौ परत्वापरत्व-

---

(१) न किञ्चिदेतत्—पा० ३ पु० ।

असर्शवत्त्वाद्‌द्रव्यानारम्भकत्वम्(१)। क्रियावत्त्वा-

---

वेगापगमो निर्बीज इत्यत आह। मूर्तत्वादिति। मूर्तस्य तैः सह स्वभावतः सम्बन्धात् तेन ते ऽनुमातव्याः। नहि प्रात्यक्षिक एव संव्यवहार इति नियमो धूमाद्यनुमिते वह्न्यादौ तद्व्यवहाराभावप्रसङ्गात्। नाप्यदृष्टोपग्रहेण क्रियोत्पत्तौ वेगो न स्यात्। ज्वलनपवनादौ तदभाव-प्रसङ्गादिति भावः॥

स्यादेतत्। मूर्तत्वाद् द्रव्यारम्भकत्वं मनसः किं न स्यादित्यत आह। असर्शवत्त्वादिति। न हि मूर्तत्वस्य द्रव्यारम्भकत्वेन सह स्वाभाविकः सम्बन्धः विपक्षे बाधकाभावात् स्पर्शवत्त्वं तु द्रव्यारम्भकत्वेनाप्रयोजकं द्रव्यानारम्भे स्पर्शवत्तायां प्रमाणाभावादनुपलभ्यत्वप्रसङ्गात् तदीयकार्यान्तरस्याप्यभावादिति। न च मूर्तत्वेन स्पर्शोऽनुमातव्यः। तद्विरहेण वा अमूर्तत्वं मूर्तस्य स्पर्शविरहे विरोधाभावात्। विभवाभावस्य च परममहत्त्वेन सह विरोधादित्याह। क्रियावत्त्वान्मूर्त्तं मन इति प्रक्रमात् क्रियावत्त्वेनाविभुत्वमुपलक्षयति॥

स्यादेतत् करणत्वेन मनसः पूर्वं ज्ञातृत्वं प्रतिषिद्धं तदनुपपन्नं ज्ञानकरणत्वज्ञानकर्तृत्वयोर्विरोधाभावात्। प्रयोक्तृप्रयोज्ययोः कथमेकत्वमिति चेत्। तथापि भेदोऽस्तु कुतस्त्वन्नत्वमत आह। साधारणेति। तथा चैकाभिप्रायेण प्रवृत्तिनिवृत्ती न स्याताम्। प्रत्युताभिप्रायविरोधात्।

---

(१) क्रियावत्त्वान्मूर्त्तत्वम्—पा० १ पु०।

न्मूर्तत्वम् । साधारणविग्रहवत्त्वप्रसङ्गादन्त्यत्वम् । (१)करणभावात् परार्थम् । गुणवत्त्वाद्द्रव्यम् । प्रयत्नादृष्टपरिग्रहवशादाशुसञ्चारि चेति(२) ॥

इति प्रशस्तपादभाष्ये(३) द्रव्यपदार्थः ॥

---

न प्रवृत्तिर्न निवृत्तिश्च स्यादिति भावः । यद्येवमन्तःमनस्तर्हि स्वार्थं न गुणतः स्वरूपतश्च न परार्थमतीन्द्रियत्वादत आह । करणभावादिति । तथापि मूर्तस्य विशेषगुणयोगः स्यात् । अन्यथा द्रव्यत्वमपि न स्यात् । मूर्तत्वसमानाधिकरणस्य द्रव्यत्वस्य विशेषगुणवत्त्वव्याप्यत्वादत आह । गुणवत्त्वाद्द्रव्यम् । अवैभवान्मूर्तत्वेऽपि गुणवत्त्वाद्विशेषगुणरहितस्यापि द्रव्यत्वाविरोध इत्यर्थः । तथापि गुरुत्वद्रवत्वस्थितिस्थापकाभावे कथं क्रियावत्त्वं वेगस्य क्रियोत्तरकालीनत्वात् न हि मूर्तत्वमात्रेण क्रियेत्यत आह । प्रयत्नादृष्टपरिग्रहादिति । क्वचित्प्रयत्नपरिग्रहात् क्वचिददृष्टपरिग्रहादित्यर्थः । इतिशब्दो द्रव्यसमाप्तौ ॥

---

(१) स्वयं—इत्यधिकम् १ पु० ।

(२) प्रयत्नादृष्टपरिग्रहवशादाशुसञ्चारितेति—पा० १ पु० ।

(३) प्रशस्तकरीयभाष्ये—पा० ५ पु० । श्रीप्रशस्तदेवाचार्यविरचिते वैशेषिकभाष्ये—पा० ६ पु० ।

इति श्रीमदाचार्योदयनविरचितायां (१) किरणावल्यां द्रव्यपदार्थः समाप्तः (२)।



(१) इत्युदयनन्यायाचार्यविरचितायां—पा० ३ पु०।

(२) अतः परं तृतीयादर्शपुस्तके पद्यद्वयमधिकं दृश्यते। तथाहि।

वन्दे शिवं शिवमिवोदयनं निदानमेकं गभीरनयतत्त्वविवेकसिन्धोः।
दोषाकरादपि विविच्य कलां भजन्तमतःकृताक्षतपदं सुमनःसहस्रैः॥

शाकाब्दे रसपूर्णपञ्चदशके (१५०६) ह्यानन्दके वत्सरे
पञ्चम्यां रविवासरे च विलिखत् कृष्णे तपे शुक्रके(?)।
ऋक्षे श्रावणिके विनायकसुतो दत्तात्रयः सत्वर-
स्त्वाकूतोपकनाम शोभनकरे शैवे गिरौ त्वोदये(?)॥



## अथ प्रशस्तपादभाष्ये गुणपदार्थनिरूपणम् ।

### रूपादीनां गुणानां सर्वेषां गुणत्वाभिसम्बन्धो

### अथ किरणावल्यां गुणनिरूपणव्याख्यानम् ।

तुष्टेर्मोचयतो बद्धानतुष्टेर्बध्नतः पुनः ।
कारागारमिदं विश्वं यस्य नौमि तमीश्वरम् ॥

साधर्म्यवैधर्म्याभ्यां निरूपितानि द्रव्याणि सम्प्रति ताभ्यामेव गुणान्निरूपयति । रूपादीनामिति । गुणशब्देनाप्रधानमप्युच्यते । यथा वयमिह गुणीभूता इति । न चाप्रधानमात्रस्य गुणत्वसामान्येन योग इत्याशङ्कामपनेतुमुक्तं रूपादीनामिति । तथापि कियतामत उक्तं सर्वेषामिति । गुणत्वं नाम सामान्यविशेषः तेनाभिमतः सम्बन्धः समवायलक्षणः तेन गुण इतरेभ्यो भिद्यते गुण इति वा व्यवहर्तव्यः गुणत्वाभिसम्बन्धात् । यस्तु न तथा नासौ गुणत्वाभिसम्बद्धः यथा द्रव्यादिरिति लक्षणमुक्तं वेदितव्यम् । गुणत्वमसिद्धं गोत्वादिवदप्रतीतेर्व्यवस्थापकाभावाच्च । तथाहि सामान्यवानगुणो गुण इति गुणव्यावृत्तिरितरेतराश्रयप्रसङ्गदूषिता गुणरहितत्वे हि तत्सिद्धिः तत्सिद्धौ च तद्रहि-

तत्वसिद्धिरिति। सामान्यवान् स्पर्शरहितो द्रव्याश्रितो गुणः सामान्यवान् कार्यानाश्रयो गुण इति चातिव्यापकं कर्मण्यपि गतत्वात्। कर्मान्यत्वे सतीति तु प्रक्रियामात्रम् अनपेक्षितव्यावृत्तेरतिप्रसञ्जकत्वात् रूपान्यत्वे रसान्यत्वे सति चेत्यादेरपि सुवचत्वात्। किमत्र व्यवस्थापकेन रत्नतत्त्वमिव गुणत्वमुपदेशापेक्षेण चक्षुरादिना प्रत्यक्षत एव प्रतीयत इति तु स्वशिष्यव्यामोहनं निमित्तमन्तरेणोपदेशस्यागममात्रत्वात्। तस्मादिदं भूषणः(१) कर्मापि गुणस्तल्लक्षणयोगादिति। न कर्मणश्चलनात्मकतया प्रतीयमानस्य तावद्रूपादिव्यावृत्तमुत्क्षेपणाद्यनुवृत्तमेकजातीयत्वमनुभवसिद्धं परस्परविरुद्धसंयोगविभागलक्षणकार्योत्पादकत्वं च तस्य व्यवस्थापकमप्यनुभवसिद्धमेव। तद्विपरीतं च कार्यं रूपादीनां चतुर्विंशतेरुपलभ्यते। ततस्तैः कर्मविपरीतजातीयैर्भवितव्यम्। न ह्येकजातीयत्वे कार्यभेदनियम उपपद्यते। न चाकर्मत्वेनैतद्भविष्यतीति वाच्यम् अकर्मतया द्रव्यस्याप्यविरुद्धकार्यकारित्वप्रसङ्गात्। तथा च रूपादिवत् नैकं द्रव्यं संयोगविभागावारभेत। तस्माद्यथाविरुद्धकार्यकारित्वाविशेषेपि सापेक्षत्वानपेक्षत्वाभ्यां द्रव्यकर्मणोर्विजातीयत्वं तथा सामान्यवत्त्वकार्यानाश्रयत्वाद्यविशेषेपि विरुद्धाविरुद्धकार्यत्वाभ्यां गुणकर्मणोरपि विजातीयत्वमित्यवदातम्। सोऽयं संयोगविभागयोरनपेक्षं कारणं कर्मेत्यस्य सूत्रस्यार्थः॥

(१) भूषणो न्यायभूषणाख्यन्यायसूत्रवृत्तिकारस्तार्किकरक्षायामपि सुस्पष्टतया समुद्धृतोऽयम्।

## द्रव्याश्रितत्वं निष्क्रियत्वमगुणत्वं च (१) ॥

---

द्रव्याश्रितत्वमिति । अनाश्रितत्वनित्यत्वे चान्यत्रावयविद्रव्येभ्य इति वदताऽर्थादाश्रितत्वानित्यत्वे चान्यत्र नित्यद्रव्येभ्य इत्युक्तम् । नित्यद्रव्यवृत्तयोन्त्या विशेषा इति चोक्तम् । वक्ष्यते च मूर्तद्रव्यवृत्तित्वमिति च कर्मसु । लक्ष्यते सामान्यमपि सामान्यरूपेण पदार्थत्रयवृत्ति । समवायस्त्ववृत्तिरेवेति । गुणास्तु गुणरूपेण सर्वत्र द्रव्य एव वर्त्तन्ते । न न वर्त्तन्त एव समवायवत् । न क्वचित् द्रव्ये वर्तन्ते विशेषवत् कर्मवच्च । न न वर्तन्तेऽपि द्रव्यवत् । नाद्रव्येऽपि वर्त्तन्ते सामान्यवदिति । तदेतदेषां द्रव्याश्रितत्वमित्यस्यार्थः ।

तदेतद्द्रव्यलक्षणव्याप्त्या सिद्ध्यति । न हि तस्मिन् सति गुणत्वाभिसम्बन्धो भवितुमर्हति जातिसङ्करप्रसङ्गात् । नाप्यभिव्याप्त्या द्रव्याश्रितत्वम् एकजात्युपग्रहाभावादित्यभिप्रायवानाह । निष्क्रियत्वमगुणवत्त्वं चेति । चलनात्मिकायाः क्रियाया निष्क्रान्ता निष्क्रिया रूपादयस्तेषां भावस्तत्त्वम् । मूर्त्तिविरहेणैतदवसेयम् । क्रियायास्तदनुविधायित्वात् । मूर्त्यभावश्च रूपादीनां समानदेशत्वादध्यवसेयः मूर्तत्वसमानदेशत्वयोः सहजविरोधात् । गुणा येषु वर्तन्ते ते गुणवन्तो न गुणवन्तोऽगुणवन्तस्तेषां भावस्तत्त्वम् । समान-

---

(१) निर्गुणत्वं निष्क्रियत्वं च—पा० ५ पु० ।

रूपरसगन्धस्पर्शपरत्वापरत्वगुरुत्वद्रवत्वस्नेह-वेगा मूर्तगुणाः ॥

बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाश-ब्दा अमूर्तगुणाः ॥

---

जातीयगुणासद्भाव(१)स्तावदनवस्थाप्रसङ्गात्। रूपादौ रसा-दिवेगान्तानां सद्भावे मूर्तत्वप्रसङ्गात्। बुद्ध्यादीनां तु प्रतिस-म्बाद्दगुणत्वव्यवस्थितेरप्रसक्तिरेव। शब्दस्य नभोनियमात्। गुणेषु गुणयोगे च समवायिकारणत्वप्रसक्तौ द्रव्यत्वापत्तेर्गुणत्वव्या-घात एव। रूपावयवी च रूपेष्वेव वर्तत इति घटादेर्नी-रूपत्वप्रसङ्ग इत्यादि ॥

एवं निर्गुणत्वनिष्क्रियत्वे च रूपादयो(२) गच्छन्ति चतु-र्विंशतिर्गुणा महांश्शब्द इत्यादयो व्यवहारास्तदेकार्थसमवा-यादिना साधर्म्येण गौणाः समर्थनीयाः। चकारात् समवा-यिकारणताविरहः। यदा हि गुणकर्मणी गुणेषु न स्तस्तदा द्रव्ये का कथा। न हि निर्गुणं द्रव्यमाश्रयते। कारणगु-णाभावे तस्यापि निर्गुणत्वप्रसङ्गात् न च निर्गुणे द्रव्ये किञ्चित् प्रमाणमस्तीति। सम्प्रति गुणानामेवान्योन्यं वैधर्म्यमाह रूपेति। एते मूर्त्तिं न व्यभिचरन्तीत्यर्थः। वेगः संस्कारवि-शेषः। उपलक्षणमेतत्। स्थितिस्थापकोऽपि द्रष्टव्यः।

बुद्धीत्यादि। एते मूर्त्तिविरोधिन इत्यर्थः। भावनासंस्का-रविशेषः ॥

---

(१) गुणाभावः—पा० ६ पु०।

(२) रसादयो—पा० ६ पु०।

**संख्यापरिमाणपृथक्त्वसंयोगविभागा उभयगुणाः ॥**

**संयोगविभागद्वित्वद्विपृथक्त्वादयोऽनेकाश्रिताः ॥**

**शेषास्त्वेकैकद्रव्यवृत्तयः ॥**

**रूपरसगन्धस्पर्शस्नेहसांसिद्धिकद्रवत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दा वैशेषिकगुणाः ॥**

---

संख्येति । द्रव्यमात्रस्य व्याप्यव्यापकभूता इत्यर्थः ॥

संयोगेति । एका संयोगव्यक्तिर्द्वयोर्द्रव्यव्यक्त्योर्वर्तते । तथा विभागद्वित्वद्विपृथक्त्वव्यक्तय एकैकाः । आदिग्रहणात् त्रित्वत्रिपृथक्त्वादयः अनेकशब्दस्यैकपर्युदासवृत्तित्वात् त्रिचतुःपञ्चादिद्रव्यव्यक्तिष्वपि वर्त्तन्त इति ॥

शेषास्त्विति । रूपरसगन्धस्पर्शैकत्वैकपृथक्त्वपरिमाणपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसंस्कारबुद्ध्यादिशब्दान्ता एकैकस्यामेव व्यक्तौ वर्तन्त इत्यर्थः ॥

रूपेति । विशेषा एव वैशेषिकं तस्य गुणाः स्वाश्रयव्यवच्छेदोचितावान्तरसामान्यविशेषवन्त इत्यर्थः । नैमित्तिकद्रवत्वं पृथिवीतेजसोः सामान्यगुण इत्यत उक्तं सांसिद्धिकेति । तथाहि रूपं भास्वरत्वादिना रसो मधुरत्वादिना गन्धो गन्धत्वेनैव स्पर्श उष्णत्वादिना स्नेहः स्नेहत्वेन यथोक्तं द्रवत्वं ताद्रूप्येण बुद्ध्यादयो बुद्धित्वादिना स्वाश्रयमितरेभ्यो व्यवच्छिन्दन्ति ॥

संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्व-गुरुत्वनैमित्तिकद्रवत्ववेगाः सामान्यगुणाः ॥

शब्दस्पर्शरूपरसगन्धा वाह्यैकैकेन्द्रियग्राह्याः ॥

संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापर-त्वद्रवत्वस्नेहवेगा द्वीन्द्रियग्राह्याः ॥

बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नास्त्वन्तःकरणग्रा-ह्याः ॥

गुरुत्वधर्माधर्मभावना ह्यतीन्द्रियाः ॥

---

संख्येति । वेगेति भावनातिरिक्तसंस्कारोपलक्षणम् । तेन स्थितिस्थापकोऽपि गृह्यते । सामान्यं साधर्म्यं तद्रूपा गुणाः सामान्यगुणा न स्वाश्रयव्यवच्छेदाय प्रभवन्तीत्यर्थः ॥

शब्देति । वाह्येन चक्षुरादिना एकैकेनैवेन्द्रियेण गृहीतुं योग्या इत्यर्थः ॥

संख्येति । वाह्येति अनुवर्तते । संख्यादयो वेगान्ताश्च-क्षुःस्पर्शनग्रहणयोग्या इत्यर्थः ॥

बुद्धीति । बुद्ध्यादयः प्रयत्नान्ता अन्तःकरणेनैव ग्रहीतुं योग्या इत्यर्थः ॥

गुरुत्वधर्माधर्मभावना ह्यतीन्द्रियाः । भावनेति वेगमा-त्रव्यवच्छेदाय । तेन स्थितिस्थापकोऽपि गृह्यते । इन्द्रिय-मतीत्य वर्त्तन्त इत्यतीन्द्रियाः न केनचिदिन्द्रियेण गृह्यन्त इत्यर्थः । हिशब्दस्त्वर्थः ॥

अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्व-गुरुत्वद्रवत्वस्नेहवेगाः कारणगुणपूर्वकाः ॥

बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दा अकारणगुणपूर्वकाः ॥

बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाश-

---

अपाकजेति । स्वाश्रयस्य यत्समवायिकारणं तस्य ये सजातीया गुणाः तत्पूर्वकाः तथाहि तन्त्वादिरूपादिभिः पटादिरूपाद्य आरभ्यन्ते । वेगेन स्थितिस्थापकोऽप्युपलक्षणीयः । पार्थिवपरमाणुरूपादयो नैमित्तिकं च द्रवत्वं नैवमित्यव्यापकत्वमाशङ्क्याह । अपाकजेति । द्रवत्वमित्यत्राप्यपाकजेत्यनुषञ्जनीयम् । कारणपदस्यानन्तरं मात्रपदमप्याध्याहार्यम् अन्यथा संयोगविभागावपि क्वचिदेवमित्यतिव्याप्तिः स्यात् । एष्वेवैतत्संभाव्यत इत्यन्ययोगव्यवच्छेदेनैतत् साधर्म्यं तेन क्वापि कर्मजत्वेऽपि वेगस्य न दोषः ॥

बुद्धीति । बुद्ध्यादयः शब्दान्ता अकारणगुणपूर्वकाः एतेषामाश्रयस्य नित्यतया कारणाभावादिति भावः । एते अकारणगुणपूर्वका एवेत्यर्थः । तथा च संयोगविभागवेगनैमित्तिकद्रवत्वैरकारणगुणपूर्वकैरपि नातिव्याप्तिः न ह्येवंजातीया अकारणगुणपूर्वका एव । क्वचित्कारणगुणपूर्वकाणामपि दर्शनादिति ॥

बुद्धीति । बुद्ध्यादयः पाकजान्ताः संयोगजाः । संयोगासमवायिकारणका इत्यर्थः । बुद्ध्यादयो भावनान्ता आत्म-

व्दतूलपरिमाणोत्तरसंयोगनैमित्तिकद्रवत्वपरत्वा-
परत्वापाकजाः संयोगजाः ॥

संयोगविभागवेगाः कर्मजाः ॥

शब्दोत्तरविभागौ विभागजौ ॥

परत्वापरत्वद्वित्वद्विपृथक्त्वादयो बुद्ध्यपेक्षाः ॥

रूपरसगन्धानुष्णस्पर्शशब्दपरिमाणैकत्वैकपृ-

---

मनःसंयोगजाः शब्दशब्देन शब्दविशेषो ग्राह्यः स च भेर्याद्याकाशसंयोगजन्यः। तूलेत्युपलक्षणम् द्रव्यान्तराण्यपि समानसंख्यापरिमाणैरवयवैरारब्धानि सातिशयपरिमाणानि ग्राह्याणि । तत्परिमाणं प्रचयाख्यसंयोगजम् । उत्तरः संयोगस्तन्तुतुर्यादिसंयोगात् पटतुर्यादिसंयोगः । नैमित्तिकं द्रवत्वमग्निसंयोगात्। परत्वापरत्वे दिक्कालपिण्डसंयोगात्। पाकजाः पार्थिवपरमाणुरूपादयोऽग्निसंयोगादिति ॥

संयोगविभागवेगाः कर्मजाः । संयोगविशेषविभागविशेषवेगविशेषा इत्यर्थः । तत्र संयोगविभागावाद्यौ । वेगोऽवेगवद्द्रव्यारब्धे वर्तमान इति ॥

शब्दोत्तरविभागौ विभागजावति। शब्दशब्दः शब्दविशेषे वर्त्तते ॥

परत्वेति। बुद्ध्यपेक्षाः अपेक्षाबुद्धिजन्या इत्यर्थः। आदिग्रहणात् त्रित्वत्रिपृथक्त्वादयो ग्राह्याः। तदितरे च यद्विपरीता इत्यर्थात् ॥

रूपेति । रूपादयः स्नेहान्ताः समानजात्यारम्भका

यत्नस्नेहाः समानजात्यारम्भकाः॥

सुखदुःखेच्छाद्वेषप्रयत्नाश्चासमानजात्यारम्भकाः॥

---

इति। इहारम्भकत्वमसमवायिकारणत्वं यदि विवक्षितं तर्हि अनुष्णपदोपादानमनुपपन्नं नह्युष्णस्पर्शो विजातीयासमवायिकारणम्। अथ कारणत्वमात्रमारम्भकत्वं स्नेहोपादानमनुपपन्नं स हि विजातीयस्यापि संग्रहस्य कारणमिति वक्ष्यते। तत्कथमेतत् इत्थमेतत् कारणत्वमात्रे विवक्षिते द्वयस्यापि वर्जनम्। असमवायिकारणत्वे विवक्षिते द्वयस्याप्यवर्जनम्। समाना एका जातिर्येषां ते समानजातयः तदारम्भकाः रूपरसगन्धस्पर्शशब्दपरिमाणैकत्वैकपृथक्त्वस्नेहा असमवायिकारणतामाप्नुवन्तः समानजातीयेष्वेव एत एवोष्णस्पर्शस्नेहौ विहायात्मधर्मेतरकारणं भवन्तः समानजातीयेष्वेवेत्यर्थः॥

सुखेति। एते विजातीयमेवारभन्ते। सुखमिच्छां दुःखं द्वेषं तौ प्रयत्नं प्रयत्नः क्रियामिति। तुशब्दः पूर्वापरान् व्यवच्छिन्दन् अवधारणं द्योतयति। पुत्रस्य सुखदुःखाभ्यां पितुः सुखदुःखे समानजातीये अपि भवत इति चेन्न विषयमात्रत्वात्। विषयत्वेऽपि ज्ञानद्वारा तत्कारणमिति चेत् न भविष्यतोरपि पुत्रस्य सुखदुःखयोर्ज्ञाने पितुः सुखदुःखाद्युत्पत्तिदर्शनात्। न चानागतमपि साम्प्रतिकस्य कारणम् पूर्वभावनियमस्य तत्त्वादिति। साक्षात्कारणत्वं वा विवक्षितम्॥

२३॥

संयोगविभागसंख्यागुरुत्वद्रवत्वोष्णस्पर्शज्ञानधर्माधर्मसंस्काराः समानासमानजात्यारम्भकाः(१) ॥

बुद्धिसुखदुःखेच्छाद्वेषभावनाशब्दाः स्वाश्रयसमवेतारम्भकाः ॥

रूपरसगन्धस्पर्शपरिमाणस्नेहप्रयत्नाः परत्रारम्भकाः ॥

---

संयोगेति । अत्र स्नेहोऽपि ग्राह्यः संयोगादिजातीयं द्रव्यादि । विभागाच्छब्दः । संख्यातः परिमाणम् । गुरुत्वात् पतनम् । द्रवत्वात् स्यन्दनम् । स्नेहात् संग्रहः उष्णस्पर्शात्(२) पाकजाः । ज्ञानादिच्छा । धर्मात् सुखम् अधर्माद् दुःखम् । संस्कारात् क्रियास्मृती इति विजातीयवर्गः सजातीयाः प्रसिद्धाः ॥

बुद्धिसुखदुःखेच्छाद्वेषभावनाशब्दाः स्वाश्रयसमवेतारम्भकाः । यद्यपि बुद्धिर्द्वित्वादिकमन्यत्राप्यारभत इति उभयत्रारम्भकेषु पठितुमुचिता तथापि स्वाश्रयसमवेतविशेषगुणेष्विति द्रष्टव्यमित्यदोषः ॥

रूपरसगन्धस्पर्शपरिमाणस्नेहप्रयत्नाः परत्रारम्भका इति । अवयवरूपादयः स्नेहान्ता अवयविनि रूपादिकमारभन्ते । प्रयत्नश्चात्मनि वर्तमानः शरीरे चेष्टाम् । यद्यपि स्नेहः

---

(१) उभयारम्भकाः—पा० ५ पु० ।

(२) औष्ण्यात्—पा० ७ पु० ।

संयोगविभागसंख्यैकपृथक्त्वगुरुत्वद्रवत्ववेगधर्माधर्मास्तूभयत्रारम्भकाः ॥

---

संग्रहं स्वाश्रयेऽप्यारभमाणः प्रयत्नश्च विहितनिषिद्धप्रवृत्तिरूपः स्वाश्रये धर्माधर्मावुत्पादयन् संयोगादिषु पठितुमुचितः तथापि परिमाणान्ताः परत्रैव स्नेहान्ताः सजातीयं परत्रैव प्रयत्नान्ता एकाश्रितमन्यत्रैव । प्रयत्नशब्देनात्र प्रयत्नविशेषो विहितनिषिद्धविषयो ग्राह्य इत्यदोषः ॥

संयोगेति । संयोगो द्रव्यं स्वाश्रये भेरीदण्डादिसंयोगो नभसि शब्दं वंशदलयोर्विभागो विभागं स्वाश्रये शब्दमन्यत्र संख्या कारणगता कार्ये संख्यां परिमाणं च स्वाश्रये द्वित्वादिकम् । एकपृथक्त्वं स्वाश्रये द्विपृथक्त्वादि अन्यत्रैकपृथक्त्वमेव । एकग्रहणं द्विपृथक्त्वादीनामकारणत्वप्रतिपादनार्थम् । गुरुत्वं स्वाश्रये पतनम् अन्यत्र गुरुत्वमेव । द्रवत्वं स्वाश्रये स्यन्दनमन्यत्र द्रवत्वमेव । वेगः स्वाश्रये गमनम् अन्यत्र वेगवदवयवारब्धे द्रव्ये वेगमेव । वेगशब्देनात्र स्थितिस्थापकोऽपि ग्राह्यः । धर्मश्च स्वाश्रये सुखम् अन्यत्र पवनादौ क्रियामिति(१) अधर्मः स्वाश्रये दुःखमन्यत्र पवनादौ क्रियामिति । सामान्यतश्चात्र स्नेहः प्रयत्नश्च विहितनिषिद्धगोचर उपादेयः । संयोगविशेषेण संग्र-

---

(१) ज्वलनादिक्रियाम्—पा० ७ पु० ।

गुरुत्वद्रवत्ववेगप्रयत्नधर्माधर्मसंयोगविशेषाः क्रियाहेतवः ॥

रूपरसगन्धानुष्णस्पर्शसंख्यापरिमाणैकपृथक्त्वस्नेहशब्दानामसमवायित्वम् ॥

---

हेण स्नेहकार्येण कारणस्य स्नेहस्य धर्माधर्माभ्यां च कार्याभ्यां विहितनिषिद्धगोचरस्य प्रयत्नस्य कारणस्योपलक्षणादिति ॥

गुरुत्वेति । गुरुत्वात् पतनम् । द्रवत्वात् स्यन्दनम् । वेगाद्भ्रमणम् । प्रयत्नाच्चेष्टा । धर्माधर्माभ्यां भूकम्पादि । संयोगविशेषान्नोदनाभिघातलक्षणादिष्वादिकर्म । अत्रापि वेगेत्युपलक्षणम् । स्थितिस्थापकोऽपि ग्राह्यः ॥

रूपादिशब्दान्तानामसमवायित्वम् असमवायिकारणत्वम् । तल्लक्षणमग्रे वक्ष्यते । सावधारणं चैतत् । तेनोष्णस्पर्शस्य पाकजोत्पत्तिं प्रति निमित्तत्वमप्यस्तीति तद्व्यवच्छेदार्थमुक्तमनुष्णेति । यद्यपि च रूपादीनां धर्माद्युत्पत्तौ निमित्तत्वमप्यस्ति अरुणयेत्यादिश्वेतं छागमित्यादिदर्शनात् तथापि बुद्धिनिमित्तत्ववत् द्रव्यादिसाधारणत्वात् तस्य तदतिरिक्तं प्रति निमित्तत्वमिह व्यवच्छेद्यम् । यद्यपि च रसस्य जीवनपुष्टिबलारोग्येषु निमित्तत्वमनुपदमेव वक्ष्यति तथापि विशेषज्ञशास्त्रैकसमधिगम्यत्वात् अदृष्टनिमित्तत्ववत् तदुपेक्ष्य तदितरप्रमाणगम्यनिमित्तत्वमिह व्यव-

बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनानां निमित्तकारणत्वम् ॥

संयोगविभागोष्णस्पर्शगुरुत्वद्रवत्ववेगानामुभयथा कारणत्वम्(१) ॥

परत्वापरत्वद्वित्वद्विपृथक्त्वादीनामकारणत्वम् ॥

---

च्छेद्यम् । यद्यपि च स्पर्शवेगावपेक्ष्य क्रिया अभिघातमुत्पादयतीति स्पर्शस्याभिघाते निमित्तत्वमस्ति तथा स्नेहस्य संग्रहे तथाप्येकाश्रितकार्यापेक्षया एतद्द्रष्टव्यमित्यदोषः ॥

बुद्ध्यादीनां भावनान्तानां निमित्तत्वम् । निमित्तकारणत्वमेव । यथा च प्रत्यासत्त्यविशेषेपि नैषामसमवायिकारणत्वं तथा वक्ष्यते ॥

संयोगादीनां वेगान्तानामुभयथा कारणत्वम् असमवायितया निमित्ततया च । तथाहि भेरीदण्डादिसंयोगः शब्दे निमित्तम् भेर्याकाशसंयोगे ऽसमवायिकारणम् । वंशदलविभागो निमित्तम् वंशदलाकाशविभागोऽसमवायिकारणं शब्दस्य । उष्णस्पर्शः पाकजे निमित्तम् उष्णस्पर्शोऽसमवायी । गुरुत्वमभिघातजादिक्रियायां निमित्तं पतनगुरुत्वयोरसमवायि । द्रवत्वं संग्रहादौ निमित्तं द्रवत्वस्यन्दनयोरसमवायि । वेगो वेगगमनयोरसमवायी अभिघाते निमित्तमिति ॥

परत्वादीनामकारणत्वम् । न निमित्तत्वं नाप्यसमवायित्वमित्यर्थः । आदिग्रहणेन त्रित्वत्रिपृथक्त्वादीनां ग्रहणम् ॥

---

(१) उभयकारणत्वम्—पा० ५ पु० ।

संयोगविभागशब्दात्मविशेषगुणानां प्रदेशवृत्तित्वम् ॥

शेषाणामाश्रयव्यापित्वम् ॥

अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्वसांसिद्धिकद्रवत्वगुरुत्वस्नेहानां यावद्द्रव्यभावित्वम् ॥

---

संयोगादीनां प्रदेशवृत्तित्वम् । अत्र प्रत्यक्षाणां युगपदुपलम्भानुपलम्भप्रमाणकमेतत् । धर्माधर्मभावनानां तु व्यापककार्यविशेषगुणत्वेनानुमेयम् । अन्यथा असमवायिकारणप्रादेशिकत्वानुरोधेन सुखादीनामपि प्रदेशनियमानुपपत्तिप्रसङ्गात् । न च भावाभावावेकत्र विरुद्धौ प्रकारभेदेनाविरोधात् । अवयवान्तरदिगन्तरावच्छेदेन हि तावविरुद्धौ तथैव दर्शनात् । न चैवं व्यवच्छेदकाश्रयावेव भावाभावौ अविरोधार्थमुपाधिभेदो न तूपाधिभेद एव तदाश्रयः नहि कार्यभेदेन शक्त्यशक्ती कार्यभेदमेवाश्रयेते इति देशभेदेन वा शक्त्यशक्ती देशभेदमेवाश्रयेते इति ॥

शेषाणामाश्रयव्यापित्वम् । पूर्वोक्तेभ्यः संयोगादिभ्यो येऽन्ये ते शेषाः तेषां रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वगुरुत्वद्रवत्वस्नेहवेगस्थितिस्थापकपरत्वापरत्वानामित्यर्थः ॥

अपाकजानां स्नेहान्तानां यावद्द्रव्यभावित्वं यावदाश्रयमेतेषां स्थितिरविनाशः आश्रयविनाशादेव परमेते विनश्यन्ति

शेषाणामयावद्द्रव्यभावित्वं चेति ॥

---

न त्वन्यथेत्यर्थः । पाकजानि रूपरसगन्धस्पर्शवद्द्रवत्वानि सत्येवाश्रये विनश्यन्तीत्यत उक्तमपाकजेति । स्थितिस्थापकोऽप्यत्र ग्राह्यः ॥

शेषाणामिति । पाकजानां पार्थिवपरमाणुरूपादीनां पाकजस्य च पृथिवीतेजसोर्द्रवत्वस्य बुद्धिजानां च परत्वापरत्वद्वित्वद्विपृथक्त्वादीनां शब्दबुद्ध्यादीनां च व्यापकजन्यविशेषगुणानां संयोगविभागयोश्चायावद्द्रव्यभावित्वं सत्यपि द्रव्ये विनाश इत्यर्थः ॥

तदेतदुद्देशमात्रमाचार्येणोक्तमेवमन्यदपि स्वयमूहनीयम् । तद्यथा रूपाद्येकैकत्यागेनारूपत्वारसत्वादीनि । सांसिद्धिकद्रवत्वरूपरसगन्धस्पर्शस्नेहानां मूर्तविशेषगुणत्वम् । रूपरसगन्धस्नेहगुरुत्वद्रवत्वस्थितिस्थापकानां स्पर्शव्याप्यत्वम् । स्नेहशैत्यसांसिद्धिकद्रवत्वानां जलमात्रवृत्तित्वम् । औष्ण्यभास्वरत्वयोस्तेजोमात्रवृत्तित्वम् । रसगुरुत्वयोर्जलावनिगुणत्वम् । गन्धमाधुर्येतररसशुक्लेतररूपाणां पृथिवीमात्रवृत्तित्वम् । बुद्ध्यादीनां भावनान्तानामात्मविशेषगुणत्वम् । रूपद्रवत्वयोः पृथिव्यप्तेजोमात्रवृत्तित्वम् । नैमित्तिकद्रवत्वस्य क्षितितेजोमात्रवृत्तित्वम् । नैमित्तिकद्रवत्वपार्थिवपरमाणुरूपादीनां पाकजत्वम् । संख्यापरिमाणप्रचयानामेव परिमाणकारणत्वम् । संयोगविभागशब्दानामेव शब्दकारणत्वम् । स्पर्शगुरुत्वप्रयत्नवेगानामेवाभिघातहेतुत्वम् । एकत्वैकपृथक्त्वसंयोगविभागानामेवानेकाश्रित-

रूपादीनां सर्वेषां गुणानां प्रत्येकमपरसामान्यसम्बन्धाद्रूपादिसञ्ज्ञा भवन्ति ॥

---

गुणारम्भकत्वम् । परत्वापरत्वयोरेव दिक्कालपिण्डसंयोगजत्वम् । परत्वापरत्वचरमज्ञानद्वित्वद्विपृथक्त्वादीनामेव निमित्तविनाशविनाश्यत्वम् । एतदन्येषामेव गुणान्तरविनाश्यत्वम् । कार्यगुणानामेवाश्रयविनाशविनाश्यत्वम् । अपार्थिवपरमाणुरूपरसस्पर्शसांसिद्धिकद्रवत्वस्नेहगुरुत्वस्थितिस्थापकनित्यद्रव्यैकत्वैकपृथक्त्वपरिमाणेश्वरबुद्धीच्छाप्रयत्नानां नित्यत्वाकार्यत्वे । इतरेषां गुणानामनित्यत्वकार्यत्वे इत्यादि ॥

सम्प्रति प्रत्येकं रूपादीनां वैधर्म्यं संक्षेपार्थमेकग्रन्थेनाह । रूपादीनामित्यादि । सर्वेषां चतुर्विंशतेरपीत्यर्थः । रूपं रसो गन्ध इत्यादिकाः सञ्ज्ञाः ताः किं पारिभाषिक्य औपाधिक्यो वा नेत्याह । अपरसामान्यसम्बन्धात् । रूपत्वरसत्वगन्धत्वादिसमवायात् निमित्तादित्यर्थः । तदसिद्धं चक्षुर्मात्रग्राह्यत्वाद्युपाधिनिबन्धनत्वात् रूपादिसञ्ज्ञानामिति चेत् न अननुसंहितोपाधेरुपहितप्रत्ययायोगात् । न च रूपत्वादिसामान्यविशेषविशिष्टरूपाद्युपलब्धिमन्तरेण परस्परव्यावृत्तेषु चक्षुरादिषु मानमस्ति विशिष्टोपलब्धेरेव प्रमाणत्वे परस्पराश्रयत्वम् । चक्षुराद्यवगमे विशिष्टोपलब्धिर्विशिष्टोपलब्ध्या च चक्षुराद्युपलब्धिरिति । न चाविशिष्टोपलब्धिमात्रोपनीतमविशिष्टमिन्द्रियमात्रमुपाधिविशिष्टव्यपदेशे रसादिष्वपि रूपादिव्यवहारप्रसङ्गा-

**तत्र रूपं चक्षुर्ग्राह्यम् । पृथिव्युदकज्वलनवृत्ति द्रव्याद्युपलम्भकं नयनसहकारि शुक्लाद्यनेकप्रकारं**

दिति । तस्मात् रूपत्वादिसामान्यविशेषक्रोडीकृततत्तदर्थग्रहणनियमेन चक्षुरादीन्यप्युन्नेयानि । तथा चोच्यते रसादिषु मध्ये रूपस्यैव व्यञ्जकत्वादिति । अन्यथा रसनादियाह्येषु मध्ये चक्षुर्मात्रग्राह्यस्यैव व्यञ्जकत्वादित्यर्थः स्यात् । तथा चासिद्धमसिद्धेन साधयतो महानैयायिकत्वमित्यलमनुकम्पनीयेष्वतिनिर्बन्धेन । एतेन रसत्वादयो व्याख्याताः ॥

तत्रेति । गुणेषु मध्ये । गुणत्वे सति चक्षुषैव यत् ग्राह्यं तद्रूपमिति लक्षणार्थः । गुणत्वे सतीति रूपत्वादिव्यवच्छेदाय । एतेन प्रमाणमप्युक्तम् । आश्रयमाह । पृथिव्युदकज्वलनवृत्तीति । ज्वलनशब्देनेह तेजोमात्रं विवक्षितम् । त्रिष्वेव वर्तते नान्यत्रेत्यर्थः । विषयस्यास्यार्थक्रियामाह । द्रव्याद्युपलम्भकम् । द्रव्यशब्देनात्र वाह्यद्रव्यमभिमतम् । तद्रूपसम्बधात् गृह्यते न त्वन्यथा । आदिशब्देन गुणकर्मसामान्यानि । तत्र गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वस्नेहवेगाः । कर्माणि च रूपिद्रव्यसमवायात् । सामान्यानि तु कानिचित् रूपैकार्थसमवायात् कानिचित् रूपैकार्थसमवेतसमवायात् कानिचिद्रूपेसमवायादिति सर्वत्र रूपस्य कारणत्वम् । यद्यपि चैतन्महत्त्वस्याप्यस्ति तथापि विशेषगुणत्वे सतीति द्रष्टव्यमित्यदोषः ।

सलिलादिपरमाणुषु नित्यं पार्थिवपरमाणुष्वग्निसं-
योगविरोधि सर्वकार्यद्रव्येषु कारणगुणपूर्वकमाश्रय-
विनाशादेव विनश्यतीति ॥

---

करणोपकारितामाह । नयनसहकारीति । बाह्या-
लोकाप्यायितं हि चक्षुः स्वविषयग्रहणे क्षमम् । स
चोद्भूतरूपः चक्षुषः सहकारी न त्वन्यथेति रूपं नयन-
सहकारीत्युच्यते । न तु स्वीयमेव रूपमस्य सहकारि
स्वगुणानामिन्द्रियभावादिति न्यायेन तस्येन्द्रियशरीरत्वात् ।
विधामाह । शुक्लाद्यनेकप्रकारकम् । शुक्लत्वादयोऽनेके
प्रकारा अवान्तरविशेषा यस्य तत् तथोक्तम् । यद्यपि
नित्यत्वादिकं गुणान्तरसाधारणं तथापि पार्थिवपरमा-
णुषु पाकजत्ववैधर्म्यचिन्तायामुपयोक्ष्यत इत्यभिप्रायवान्
कारणविरोधिनावभिधातुं नित्यं तावत् निर्धारयति। सलि-
लादिपरमाणुषु नित्यमिति । आदिशब्देन तेजःपरमाणु-
परिग्रहः । अनित्यता हि कार्यतया व्याप्ता सा च
रूपादीनां कार्यद्रव्येषु विचित्रतया व्याप्ता सा च सलि-
लादिपरमाणुरूपाद् व्यावर्तमाना स्वव्याप्या कार्यतामुपादाय
विनाशितामपि निवर्तयतीति । पार्थिवपरमाणुष्वग्निसं-
योगविरोधि । अग्निसंयोगो विरोधी यस्य तत् तथा । उप-
लक्षणं चैतत् उत्पादकोऽप्यस्याग्निसंयोग एव । सर्वकार्येषु
कारणगुणपूर्वकम् । अवयविषु यत् रूपं तदवयवरूपपूर्वक-

मित्यर्थः । आश्रयविनाशादेव विनश्यतीति । न तु पिठरपाकवादिनामिवाग्निसंयोगादपीत्येवकारार्थः ॥

एतेन गुणगुणिनोरभेदवादो निरस्तः । फलतो विरुद्धधर्माध्यासस्य दर्शितत्वात् । तथाहि रूपत्वनिमित्ता रूपसञ्ज्ञेति दर्शिते पृथिवीत्वनिमित्ते च पृथिवीव्यवहारे एतयोस्तादात्म्ये पर्यायता स्यात् । न च रूपशब्दात् शुक्लशब्दाद्वा कश्चित् घटादिकं प्रत्येति घटशब्दाद्वा शुक्लादिकम् । न चाभेदे सामान्यविशेषभावोऽप्युपपद्यते । न च सामान्यविशेषभावेऽप्यभेदादेव सामान्यं विशेषश्चेति सम्भवति विरोधात् । अनुवृत्तो हि धर्मः सामान्यं व्यावृत्तो विशेषः न च तदेवानुवृत्तं व्यावृत्तं चेति सम्भवति । किं च रूपं चक्षुर्मात्रग्राह्यं तदेव चेत् द्रव्यं रूपवद् द्रव्यमप्यन्धेन नोपलभ्येत घटादिद्रव्यवद्वा शुक्लादिरूपमप्यन्धेनोपलभ्येत यदि च पृथिव्येव रूपं न तोये तेजसि वा वर्त्तेत । यदि वा रूपमेव पृथिवी पयःपावकावपि पृथिव्येव स्यातां सामान्यविशेषभावे वा तादात्म्यं विरुध्येत । न चैवं द्रव्यस्यैव सामान्यविशेषौ रूपमस्तु कृतं गुणेनेति वाच्यम् तस्य प्रकाराभावात् । नहि गोत्वं प्रकारवत् । रूपं तु शुक्लाद्यनेकप्रकारकम् । न च गोत्वविशिष्टस्य शाबलेयादिभेदवत् रूपविशिष्टस्य शुक्लादिभेदो भविष्यतीति युक्तम् तत्रापि शुक्लतरशुक्लतमादिप्रकारवत्त्वात् । न च तारतम्यं सामान्यस्य सम्भवति । नहि संभवति गोतरो गोतम

रसो रसनग्राह्यः। पृथिव्युदकवृत्तिः जीव-

---

इति। किं च पिठरपाकोऽप्यस्तु परमाणुपाको वा शुक्लादिरूपं तात्रधर्मिणि सन्त्येव निवर्तते प्रवर्तते चेति सुप्रसिद्धम्। न चैतत् सामान्यस्य सम्भवति तस्य नित्यैकरूपत्वात्। अन्यथा तत्त्वविरोधात्॥

एतेन रूपवदेव द्रव्यमुत्पद्यते रूपवदेव विनश्यतीति नास्त्यनयोः पूर्वपरभाव इति नापि द्रव्यविनाशरूपविनाशयोरिति निरस्तम्। एकत्र दर्शनेनान्यत्र तदनुमानात्। तथाहि अवयविरूपं समवायिकारणवत् कार्यत्वात् घटवत्। अन्यथा कारणमात्रानपेक्षतया कादाचित्कत्वानुपपत्तेः कार्यं च तत् कार्यगुणत्वात् पार्थिवरूपत्वाद्वा सामान्यवत्त्वे सत्यवयविधर्मत्वाद्वा सामान्यवत्त्वे सत्यस्मदादिबाह्यकरणप्रत्यक्षत्वाद्वा अस्मदादिप्रत्यक्षविशेषगुणत्वाद्वेति संयोगवत् पार्थिवपरमाणुरूपवत् कर्मवत् घटवत् बुद्धिवद्वेति। अन्यथाऽवयविनाशेऽप्यविनाशात् तदुपलम्भापत्तिः। आश्रयस्य व्यञ्जकस्याभावादनुपलम्भे सत्याश्रये परमाणौ तन्निवृत्तेरनुपपत्तिरिति। तस्मादवयविनो रूपस्य चोपादानोपादेयभावात् पूर्वापरभावनियम एवेति स्थितम्। विनाशस्यापि सहेतुकत्वस्थितौ यावद्द्रव्यभावस्य कार्यरूपादीनामुपलम्भात् द्रव्याभावे चानुपलम्भनियमात् द्रव्यविनाशकार्यत्वमवसीयते। यौगपद्याभिमानस्तु कालसन्निकर्षाच्चक्षुरुन्मेषरूपोपलब्धिर्वदिति सर्वमवदातम्॥

रसत्वाभिसम्बन्धाद्रस इति स्थिते सत्याह। रसो

नपुष्टिबलारोग्यनिमित्तम् रसनसहकारी मधुराम्ललवणतिक्तकटुकषायभेदभिन्नः । अस्यापि नित्यानित्यत्वनिष्पत्तयो रूपवत्(१) ॥

रसनग्राह्य इति । रसनेनैव गृह्यते यो गुणः स रस इति प्रमाणलक्षणे । आश्रयमाह । पृथिव्युदकवृत्तिरिति । यद्यपि गुरुत्वमप्येवं तथापि प्रत्यक्षत्वे सतीत्यदोषः । अर्थक्रियामाह । जीवनपुष्टिबलारोग्यनिमित्तम् । जीवनं मनसः शरीरेऽवस्थानं पुष्टिः शरीरावयवोपचयः बलमायासक्षमता आरोग्यं सुस्थता दोषधातुमलाग्नीनां समतेति यावत् । उपलक्षणं चैतत् । मरणकृशत्वदौर्बल्यरोगकारणान्यपि द्रष्टव्यानि । तेषां निमित्तम् । यद्यपि गन्धादयोऽप्येवंभूतास्तथा संयोगभेदाश्च तथापि रसं प्रधानीकृत्य न तु स्वातन्त्र्येणेति विवक्षितम् । बाह्यस्यार्थक्रियामाह । रसनसहकारी । बाह्येनोदकरसेन स्तिमितस्य द्रव्यस्य रसो रसनेन गृह्यते न तु शुष्कस्य । विभागमाह । मधुरेति । मधुरादिभिस्तद्भेदैश्च मधुरतरमधुरतमादिभिर्भिन्नो नानेत्यर्थः । अस्यापीति । नित्येति । भावप्रधानो निर्देशः । यथा रूपं सलिलपरमाणुषु नित्यं तथा रसोऽपि । यथा रूपं पार्थिवपरमाणुष्वग्निसंयोगविरोधि तदुत्पाद्यं च तथा रसोऽपि यथा रूपं कार्यद्रव्येषु कारणगुणपूर्वकमाश्रयविनाशाद्विनश्यति तथा रसोपीत्यर्थः । तथैव चैतत्सर्वमुप-

(१) पूर्ववत्—पा० ५ पु० । रूपवद् द्रष्टव्याः—पा० ६ पु० ।

गन्धो घ्राणग्राह्यः । पृथिवीवृत्तिः घ्राणसह-कारी सुरभिरसुरभिश्च । अस्यापि पूर्ववदुत्पत्त्या-दयो व्याख्याताः ॥

स्पर्शस्त्वगिन्द्रियग्राह्यः । क्षित्युदकज्वलनपवन-

---

पादनीयमित्यर्थः । एतेन कारणविरोधिनावुक्तौ वेदितव्यौ ॥

गन्धत्वाभिसम्बन्धाद्गन्ध इति स्थिते सत्याह । गन्धो घ्राणग्राह्यः । गुणेषु मध्ये यो घ्राणेनैव गृह्यते स गन्ध इत्यर्थः । एतेन लक्षणप्रमाणे दर्शिते । पृथिवीवृत्तिः । पृथिव्यामेव वर्तते नान्यत्रेत्याश्रय उक्तः । घ्राणसहकारीत्यर्थक्रिया । घृता-दिगन्धसहकृतेन घ्राणेन मृगमदादिगन्धग्रहणादेतदुन्नेयम् । सुरभिरसुरभिश्चेत्यवान्तरभेदः । असुरभिरिति सुरभिवि-परीतं(१) सामान्यविशेषमाह न तु तदभावमात्रमधर्मवत् । अस्यापीति । अस्य नित्यत्वं नास्तीत्यतस्तद्विहायोत्पत्त्या-दय इत्युक्तम् । उत्पत्तिरादिर्येषाम् उत्पत्तितद्धेतुविनाशत-द्धेतूनां ते तथोक्ताः । तेनोत्पत्तिर्द्वयी परमाणौ कार्ये च । कारणमपि द्वयम् अग्निसंयोगोऽवयवगुणश्चेति । विनाशोऽपि द्विविधः परमाणौ कार्ये च । तत्कारणमपि द्विविधम् अग्नि-संयोगो द्रव्यविनाशश्चेति बहुवचनोपपत्तिः । पूर्ववदिति । रसवदित्यर्थः ॥

स्पर्शत्वाभिसम्बन्धात् स्पर्श इति स्थिते सत्याह । स्पर्श स्त्वगिन्द्रियग्राह्यः । त्वगिन्द्रियेणैव गृह्यते यो गुणः स

---

(१) सौरभविपरीतं—पा० ७ पु० ।

वृत्तिः(१) त्वक्सहकारी(२) रूपानुविधायी शीतोष्णानुष्णाशीतभेदात्(३) त्रिविधः । अस्यापि नित्यानित्यत्वनिष्पत्तयः पूर्ववत् ॥

---

स्पर्श इत्यर्थः । आश्रयमाह । क्षित्युदकज्वलनपवनवृत्तिः । यद्यपि क्षितिव्यापकोऽप्येवं तथापि विशेषगुणत्वे सतीत्यदोषः । त्वक्सहकारी । व्यजनादिवातस्पर्शसहकृतेन त्वगिन्द्रियेण उदकस्पर्शस्योपलम्भादेतदवसेयम् । तदेतद्रूपादिचतुष्टयं विषयसंस्कारकतया नयनादिसहकारि । रूपानुविधायी रूपमनुविधातुं शीलमस्येति रूपानुविधायी । यत्र रूपं तत्रावश्यं स्पर्शो भवति । रूपव्यापक इति यावत् । अथवा रूपमनुविधायि यस्य स तथोक्तः । रूपं स्पर्शमनुविधत्ते स्पर्शपरतन्त्रं स्पर्शेन विना न भवतीत्यर्थः । अत्रापि रूपव्यापकत्वं स्पर्शस्य लभ्यत इति फलतो न कश्चिद् विशेषः । यद्यपि संख्यापरिमाणादयोऽपि रूपव्यापकास्तथापि विशेषगुणत्वे सतीत्यदोषः । अवान्तरविभागमाह । शीतेति । कारणविरोधिनावतिदेशेन दर्शयति । अस्यापीति । अत्रापि नित्येति भावप्रधानो निर्देशः पूर्ववदिति रसवदित्यर्थः । गन्धे नित्यत्वाभावात् । यथा रसः सलिलपरमाणुषु नित्यस्तथा स्पर्शोऽप्यपार्थिवपरमाणुषु यथा रसः पार्थिवपरमाणुष्वग्निसंयोगवि-

(१) क्षितिजलज्योतिरनिलवृत्तिः—पा० ६ पु० ।

(२) त्वगिन्द्रियसहकारी—पा० ५ पु० ।

(३) भेदेन—पा० ६ पु० ।

पार्थिवपरमाणु(१)रूपादीनां पाकजोत्पत्तिविधानम्। घटादेरामद्रव्यस्याग्निना सम्बद्धस्याग्न्य-

---

रोधी तदुत्पाद्यश्च अवयविष्ववयवगुणपूर्वक: आश्रयविनाशादेव विनश्यति तथा स्पर्शोऽपीत्यर्थः॥

अथेदानीं पाकजेषु परीक्षाशेषं वर्तयिष्यन्नाह। पार्थिवेति। पृथिव्याः कार्यभूताया इमे कारणभूता परमाणवः पार्थिवाः। अथवा पृथिव्याः पृथिवीत्वस्याश्रयभूताः इमे इति पार्थिवाः तेषां ये रूपादयो रूपरसगन्धस्पर्शाः तेषां पाकजत्वेन यदुत्पत्तिविधानं प्रकारः स कथ्यते। तत्र विप्रतिपत्तौ संशयः केचिदाहुः कार्यकारणसमुदाये पच्यमाने तस्मिन्नवस्थित एव रूपादयो विनश्यन्त जायन्ते चेति। केचित्तु परमाणव एव स्वतन्त्राः पच्यन्ते कार्यन्तु पूर्वं निवर्तते अपूर्वं प्रवर्तते। तत्र कारणगुणपूर्वक्रमेण रूपादयो जायन्त इति। प्रयोजनन्तु धर्मधर्मिणोः साधर्म्यवैधर्म्याभ्यां स्फुटं तत्त्वविवेकः स च सम्यगात्मविवेके उपयोक्ष्यत इति। तत्र परमाणव एव स्वतन्त्राः पच्यन्त इति पक्षमुपादाय व्युत्पादयति घटादेरित्यादि। आदिग्रहणेन सर्वपार्थिवोपादानं। आमेति। प्रकृतपाकापेक्षया न तु पार्थिवमपक्वं नामास्ति। अग्निना सम्बद्धस्य संयुक्तस्य तदारम्भकेषु घटाद्यारम्भकेषु परम्परया अणुषु परमाणुषु कर्मा-

---

(१) परमाणुषु—पा० ६ प०।

भिघातान्नोदनाद्वा तदारम्भकेष्वणुषु कर्माण्युत्पद्यन्ते तेभ्यो विभागाः विभागेभ्यः संयोगविनाशाः संयोगविनाशेभ्यश्च(१) कार्यद्रव्यं विनश्यति । तस्मिन् विनष्टे स्वतन्त्रेषु परमाणुष्वग्निसंयोगादौ-

---

ष्ण्युत्पद्यन्ते । आरम्भकेष्विति कार्यविनाशादिप्रक्रियासिद्ध्यर्थम् । कुत अग्न्यभिघातान्नोदनाद्वा अग्निनैव नोदनाभिघातौ संयोगविशेषौ कर्माधिकारे वक्ष्येते । तेभ्यः कर्मभ्यो विभागाः विभागेभ्यः संयोगविनाशाः द्रव्यारम्भकसंयोगविनाशाः तेभ्यः कार्यद्रव्यं विनश्यति द्व्यणुकलक्षणम् । जात्यभिप्रायेणैकवचनम् । अत्र नोदनाद्युत्पत्तौ कर्मोत्पत्तिः प्रमाणम् । कर्मसु विभागास्तेषु पूर्वसंयोगनिवृत्तिः तत्र कार्यद्रव्यविनाश इत्यस्तु । एषां कार्यकारणभावावधारणात् कारणं विना च कार्यानुत्पत्तेः कार्यद्रव्यं विनश्यतीत्यत्र किं प्रमाणम् । न हि सति द्रव्ये रूपादीनां विनाशोत्पत्ती नोपपद्येते परमाणुष्विव कार्यद्रव्ये ऽपि तयोरविरोधादित्यत आह । तस्मिन्निति । न हि चन्द्रचक्षुषोस्तेजस्तथा पावकं यथा सौरमित्युक्तमौष्ण्यापेक्षादिति । पृथिव्याः श्यामं रूपमनादीति केचिदविचारितागमश्रद्धालवो लपन्ति तान् प्रत्युक्तं पुनरिति । तेन जन्मनोऽभ्यासं वदन् श्यामादीनामुत्पत्तिमत्त्वं दर्शयति । अन्यथा विनाशा-

---

(१) द्रव्यारम्भकसंयोगविनाशस्ताद्विनाशेभ्यः—पा० १ पु० ।

श्यापेक्षाच्छ्यामादीनां विनाशः पुनरन्यस्मादग्निसंयोगादौष्ण्यापेक्षात् पाकजा जायन्ते ।

---

नुपपत्तेः पाकजा इति रूपरसगन्धस्पर्शाः संक्षेपेणोक्ताः । यद्यप्येकस्योत्पादविनाशहेतुत्वमेकजातीयत्वे ऽपि कार्यस्य व्यक्तिभेदेन मध्यशब्दवत् कालभेदेन चोपान्त्यशब्दवदुपपद्यते । तथापि पाकजेषु नायं विधिः कार्यविनाशविशिष्टं कालमपेक्ष्य रूपादिविनाशात् रूपादिविनाशविशिष्टं च कालमपेक्ष्य रूपाद्युत्पाददर्शनात् । सति च कार्ये कार्यावष्टब्धद्रव्यस्यैव प्रतिबन्धकत्वात् । सति च रूपादौ रूपाद्यन्तरानुत्पत्तेः । न चैतावन्तं कालमेकोऽग्निसंयोगोऽनुवर्त्तितुमीष्टे । तेजसोऽविलम्बेन गमनशीलत्वात् । तेजोन्तरेणाभिहन्यमानत्वान्नुद्यमानत्वाच्च । अपि चोत्पादकस्यैव विनाशकत्वे ऽग्निसन्तानव्यावृत्तौ रूपादिसन्तानव्यावृत्तौ घटादेर्नीरूपत्वप्रसङ्गः विनाशकस्यैवोत्पादकत्वेऽग्निसंयोगस्यैकत्वादविशेषेण पाकतारतम्यस्यानुपपत्तिः पुनस्तेनैव रूपादिविनाशात् पुनरुत्पादकस्य विनाशकत्वे पूर्वदोषानतिवृत्तिः तस्मात् परमाणुषु रूपादीनां विनाशोत्पादौ नैकाग्निसंयोगकारणकौ रूपाद्युत्पत्तिविनाशत्वात् श्यामाद्युत्पत्तिविनाशवदिति । तदिदमुक्तमन्यस्मादिति । एतेन पाकेन पूर्वरूपादिपरावृत्तिरेवावयविनाशे प्रमाणम् । अवयविरूपादिविनाशस्याश्रयविनाशहेतुकत्वावधारणात् कारणं च

विना कार्यानुत्पत्तेः । ननु सत्यप्यवयविन्यग्निसंयोगादपि रूपादिविनाशः स्यादित्युक्तं न कतिपयावयवपाके कार्ये कारणरूपानुकारानुपपत्तेः न हि श्यामा अवयवाः अवयवी च रक्त इति सम्भवति । निःशेषपाके त्वापरमाणु तेजःसम्बन्धे तेजसश्च स्पर्शवत्तया वेगवत्तया च नोदनाभिघातयोरन्यतरः संयोगोऽवयवविश्लेषहेतुक्रियाजनक इति कथं न कार्यद्रव्यविनाशः। किं च रूपाद्यन्तरोत्पत्तिरप्यवयव्यन्तरोत्पादे प्रमाणम् । तद्रूपादेः कारणगुणपूर्वकत्वनियमात् । अग्निसंयोगान्नष्टे रूपादौ तत्रावयविनि कारणगुणप्रक्रमेण रूपादिर्भविष्यतीति अदोष इति चेत् न यत्राग्निसंयोगो रूपादीनां नोत्पादकस्तत्र विनाशकोऽपि न स्यात् जलादिवदिति नियमात् । अग्निसंयोगस्यैव तदुत्पादकत्वे कारणगुणपूर्वकत्वव्याघातात् । व्याहन्यतामिति चेत् न आमदशायां श्यामादीनामनुत्पादप्रसङ्गात् । तस्मात् परमाणुषु पाकादेव रूपादीनां विनाशोत्पत्ती अवयविनि च कारणगुणेभ्य एवोत्पादः आश्रयविनाशादेव विनाश इति परमुपपद्यते। तदमी प्रयोगाः पार्थिवावयविरूपादि आश्रयविनाशादेव विनश्यति अवयविरूपादित्वात् दग्धपटरूपादिवत् । तत् कारणगुणेभ्य एवोत्पद्यते । अत एव तदेव । घटादिपरमाणुष्वग्निसंयोगाः नियमेन द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनकक्रियाहेतवः अग्निसंयोगत्वात् मुषाग्निसंयोगवदिति । स्यादेतत् । यद्येवमापरमाण्वन्तो विनाशः स्वतन्त्राश्च परमाणवः पच्यन्ते कुलालादिव्यापारमन्त-

तदनन्तरं भोगिनामदृष्टापेक्षादात्माणुसंयोगादुत्पन्नपाकजेष्वणुषु कर्मोत्पत्तौ तेषां परस्परसंयोगाद् द्व्यणुकादिक्रमेण कार्यद्रव्यमुत्पद्यते । तत्र च

---

रेण घटादीनां पुनरावृत्तौ लोकव्यवहारोच्छेदः व्यर्थश्चैषां प्राचः प्रयास इत्यत आह । तदनन्तरमिति । रूपाद्युत्पत्त्यनन्तरं भोगिनामुदकाद्याहरणद्वारेण तत्साध्यसुखदुःखाद्यनुभवभागिनाम् । अदृष्टापेक्षात् धर्माधर्मापेक्षात् । आत्माणुसंयोगादित्यत्रात्मग्रहणं स्पष्टार्थम् । भोगिनामित्यनेनैवात्मोपादानात् । अणुष्विति । परमाणुष्वित्यर्थः । कर्मणामुत्पत्तौ सत्याम् । तेषां परमाणूनाम् । परस्परमन्योन्यम् । संयोगादिति । जात्यभिप्रायमेकवचनम् । द्व्यणुकमादिर्यस्य प्रक्रमस्य । तेन कार्यद्रव्यं घटादिलक्षणमुत्पद्यते । तत्र च कारणगुणप्रक्रमेण रूपाद्युत्पत्तिः परमाणुरूपादेर्द्व्यणुकेषु रूपादिकं द्व्यणुकरूपादेस्त्र्यणुकेषु रूपादिकमित्यनेन क्रमेणेति । अत्र च कारणचतुष्टयस्यापि भावाद्रूपादेव रूपमुत्पद्यते न स्पर्शात् वायावपि तदुत्पत्तिप्रसङ्गात् । रसादेस्तदुत्पत्तौ तदुद्भावाद्यनुविधानापत्तेः । एवं रूपाद्रसोत्पत्तौ तेजसि रसोत्पत्तिप्रसङ्गात् । गन्धात्तदुत्पत्तौ च तदनुकारापत्तेः अवयवकाठुल्याद्यननुकारप्रसङ्गश्चेत्यादि स्वयमूहनीयम् । तदेवं रूपाद्यन्तरोत्पत्तिः स्थूलद्रव्योत्पत्तौ प्रमाणं सा तदवयवपरम्परायां सा द्व्यणुके तदुत्पत्तिः परमाणुसंयोगे स च तत्क्रियायां साऽदृष्टवदात्मसं-

कारणगुणप्रक्रमेण(१) रूपाद्युत्पत्तिः। न च कार्यद्रव्य एव(२) रूपाद्युत्पत्तिर्विनाशो वा सम्भवति सर्वावयवेष्वन्तर्बहिश्च वर्तमानस्याग्निना व्याप्त्यभावाद् अणुप्रवेशादपि च व्याप्तिर्न सम्भवति कार्यद्रव्यविनाशादिति ॥

---

योगे रूपादिमत्तायां चेति द्रव्यारम्भानुगुणावयवक्रियायां रूपस्पर्शादिमत्युत्पत्तिनियमात् रूपादिविरहिणो द्रव्यस्य क्षणमात्रस्थितेः कर्मणश्च कारणान्तरापेक्षत्वादिति। अथ पूर्वरूपादिनिवृत्तिरुत्तररूपान्तराद्युत्पत्तिश्च कार्यद्रव्य एव यदि स्यातां को दोष इत्यत्र तर्कविशेषमाह(३)। न चेति। किमिति न सम्भवतीत्यत आह। सर्वावयवेष्विति। अवयविनः प्रासावध्यन्तर्वर्त्तिनामवयवानां बाह्यावयवावष्टम्भेनाग्निप्राप्तेरसम्भवात् पाको न स्यादित्यर्थः। सान्तराण्येवावयविद्रव्याणि कथमन्यथा मध्यस्थानामपां स्यन्दनप्रस्रवणे तथा चाणुप्रवेशो न विरुध्यत इत्यत आह। अणुप्रवेशादपीति। कुतः कार्यद्रव्यविनाशादिति ॥

अयमाशयः। ईदृशो हि तेजसो लाघवातिशयेन वेगातिशयः स्पर्शातिशयश्च यत् तज्जन्यं कर्म कार्यद्रव्यं पूर्वव्यूहात्

---

(१) पूर्वक्रमेण—पा० ५ पु०।
(२) कार्यद्रव्यं—पा० १ पु०।
(३) तर्कशेषमाह—पा० ७ पु०।

२६

प्रच्यावयति । तदवयवांश्च व्यूहान्तरं प्रापयति । अन्यथा सान्तरत्वे ऽन्तरालेन प्रविशति पावके क्वथ्यमानाः क्षीरनीरादयो नोर्ध्वं धापयेरन् । मृदुसंयोगात् तथेति चेत् न तन्दुलादीनामपि तथा दर्शनात् । अतिदृढानामप्युपलमणिवज्रादीनामग्निदग्धानां स्फुटनात् । सातिशयोऽग्निसंयोगस्तथेति चेत् कोऽतिशयार्थः वह्न्यभ्यास इति चेत् न प्रथमस्याकिञ्चित्करत्वे ऽभ्यासानुपयोगात् । न ह्याशु विनाशिनां क्रमभाविनां स्वरूपतः समुच्चयः सम्भवति । तस्माद्यथा शरीरादौ प्रत्यक्षमनुपलक्षणीयः कालान्तरे स्फुटीभूतो विशेषः प्रतीयते तथा घटादिपाकेऽपीति युक्तमुत्पश्यामः । एतेन प्रत्यभिज्ञानं सर्वावस्थादर्शनमुपरि निहितमूर्तान्तरधारणमावरणसंस्थानसंख्यापरिमाणरेखादि(१)चिह्नाद्यविपर्ययः पूर्वद्रव्याविनाशे प्रमाणमिति निरस्तम् । सूचिव्यतिभेदेन विदलितत्रिचतुरत्रसरेणुघटादिवदुपपत्तेः । तथापि न नश्यन्त्येव घटादय इति मीमांसकदुर्दुरूढाः तेऽनुकम्पनीयाः । तथाहि परमाण्वपगमे द्व्यणुकमवश्यं नश्यतीति अन्यथा कार्यनित्यताप्रसङ्गात् । तन्नाशे तु त्रसरेणवोऽवश्यं विनश्यन्ति । तन्नाशे तत्कार्यमित्यनेनैव क्रमेणान्त्यावयविपर्यन्तः प्रलयः अन्यथा निराश्रयकार्यावस्थानप्रसङ्गात् । कतिपयावयवनाशेप्यवस्थितावयवाश्रयं कार्यं स्यात् । न स्यात् तावदवयवव्याप्तियोग्यपरिमा-

(१) रेखोपरेख—पा० ७ पु० ।

णवतो न्यूनेष्ववसंमिते:(१) संवृतपटवत् परिमाणसङ्कोचो भविष्यतीति चेत् न भवेत्। स हि न तयोर्भेदोऽभेदस्य द्रव्यधर्मत्वात् न विनाशः परिमाणस्य यावद्द्रव्यभावित्वात् स्वाश्रयविनाशैकविनाश्यत्वाच्चेति। स्वाश्रयावयवविश्लेषविनाशाभ्यां विनाश्यमपि भविष्यतीति चेत् न अवयवविश्लेषविनाशाभ्यामवयवी न विनश्यति तत्परिमाणं तु विनश्यतीति महती प्रत्याशा। अवयविनः प्रत्यभिज्ञानादिति चेत् क्षुद्रावयवविश्लेषे परिमाणं किं न प्रत्यभिज्ञायते इत्यलमतिपीडया॥

अथ द्व्यणुकनाशमारभ्य कतिभिः क्षणैः पुनरन्यद्व्यणुकमुत्पद्य रूपादिमद्भवतीति शिष्यजिज्ञासायां शिष्यबुद्धिवैशद्याय प्रक्रिया। तद्यथा नोदनादिक्रमेण द्व्यणुकनाशः नष्टे द्व्यणुके परमाणावग्निसंयोगात् श्यामादीनां निवृत्तिः निवृत्तेषु श्यामादिषु पुनरन्यस्मादग्निसंयोगात् रक्तादीनामुत्पत्तिः उत्पन्नेषु रक्तादिषु उत्तरसंयोगात् पूर्वक्रियानिवृत्तिः ततोऽदृष्टवदात्माणुसंयोगात् परमाणौ द्व्यणुकारम्भणाय(२) क्रिया क्रियया पूर्वदेशाद् विभागः विभागेन च पूर्वदेशसंयोगनाशः तन्नाशे(३) परमाण्वन्तरेण संयोगोत्पत्तिः संयुक्ताभ्यां परमाणुभ्यां द्व्यणुकारम्भः आरब्धे द्व्यणुके कारणरूपादिभ्यः(४)

---

(१) अल्पेषु—पा० ७ पु०।
(२) द्रव्यारम्भणाय—पा० ७ पु०।
(३) संयोगनिवृत्तिस्तस्मिन्निवृत्ते—पा० ७ पु०।
(४) कारणगुणेभ्यः—पा० ७ पु०।

कार्यगुणानां रूपादीनामुत्पत्तिरिति यथाक्रमं नवक्षणा(१)। सेयं प्रक्रिया यदा क्रियातो विभागो द्रव्यारम्भकसंयोगप्रतिद्वन्द्व्यप्रतिद्वन्द्वी चेति पक्षस्तदा यदा विभागात् पूर्वसंयोगनाशस्ततो द्रव्यविनाशविभागजविभागौ चेति पक्षस्तदा दशमे क्षणे। तथाहि द्व्यणुकनाशविभागजविभागोत्पत्ती पूर्वसंयोगनाशश्यामादिनिवृत्ती उत्तरसंयोगरक्ताद्युत्पत्ती विभागजविभागक्रिययोर्निवृत्तिः द्रव्यारम्भणाय परमाणौ क्रिया क्रियया विभागः तेन पूर्वसंयोगनिवृत्तिः परमाण्वन्तरसंयोगो द्रव्योत्पत्तिर्गुणोत्पत्तिरिति। यदा तु द्रव्यविनाशोत्तरकालं विभाजविभागश्यामादिनिवृत्ती ततः पूर्वसंयोगनिवृत्तिरक्ताद्युत्पत्ती। तत उत्तरसंयोगोत्पत्तिस्ततो विभागजविभागकर्मणोर्निवृत्तिः ततो द्रव्यारम्भणाय परमाणौ क्रियेति पक्षस्तदैकादशे क्षणे। तथाहि द्व्यणुकविनाशः विभागजविभागश्यामादिनिवृत्ती पूर्वसंयोगनिवृत्तिरक्ताद्युत्पत्ती उत्तरसंयोगः विभागजविभागकर्मणोर्निवृत्तिः द्रव्यारम्भणाय परमाणौ क्रिया क्रियया विभागः संयोगविनाशः परमाण्वन्तरसंयगो द्रव्योत्पत्तिः गुणोत्पत्तिरिति। कथं द्रव्यविनाशे सति तद्विशिष्टं कालमपेक्ष्य विभागेनोत्तरकालं विभागजविभागजननात् विभागजविभागे सति पूर्वसंयोगनिवृत्तावुत्तरसंयोगजननात् तस्मिन् सति च पूर्वक्रियानिवृत्तिः तन्निवृत्तौ च क्रियान्तरारम्भावकाशादिति। कथं तर्हि पूर्वप्र-

(१) दशक्षणा—पा० ७ पु०।

क्रिया कारणसंयोगनाशमपेक्ष्यैव(१) विभागेनोत्तरविभागा-रम्भणादिति पश्चात् किमत्र तत्त्वमिति विभागे विवेच-यिष्यामः ॥

सेयमेकस्मिन्नेव परमाणौ पूर्वद्व्यणुकविनाशोत्तर-द्व्यणुकोत्पादकक्रियाद्वयमधिकृत्य क्षणगणना । यदा त्वेकत्र द्व्यणुकविनाशिकान्यत्र द्व्यणुकान्तरोत्पादिका क्रिया तदा द्व्यणुकविनाशमारभ्य पञ्चमे षष्ठे सप्तमे ऽष्टमे नवमे वा क्षणे गुणोत्पत्तिः कथं यदा द्रव्यारम्भकः संयोगो विनश्यति तदैव परमाण्वन्तरे कर्म ततः एकत्र क्रमेण द्रव्यविनाशश्यामादिविनाशरक्ताद्युत्पादाः अन्यत्र विभागपूर्वसंयोगनाशोत्तरसंयोगाः क्षणान्तरे द्रव्योत्पत्तिः पञ्चमे क्षणे गुणोत्पत्तिश्चेति । एवं द्रव्यनाश-समकालं परमाण्वन्तरे क्रियाचिन्तनात् षष्ठे श्यामा-दिनाशसमकालं क्रियाचिन्तायां सप्तमे रक्ताद्युत्पत्ति-समकालं कर्मप्रक्रमे ऽष्टमे क्षणे रक्ताद्युत्पत्तेरग्रिमक्षणे परमा-ण्वन्तरे कर्मचिन्तायां(२) नवमे क्षण इति । द्वित्रिचतुःक्षणा च प्रक्रिया न सम्भवत्येव(३) । उत्पन्ने रक्तादौ सगुणेनैव द्रव्येण द्रव्यान्तरारम्भणादित्ययं संक्षेपः ॥

एवमेव पक्वापक्वाभ्यामारम्भश्चिन्तनीयः । तदेवमव-यविनो यावद्द्रव्यभाविन एव विशेषगुणाः पाकजाः पर-

(१) संयोगनिवृत्तिमपेक्ष्यैव—पा० ८ पु० ।

(२) रक्ताद्युत्पत्त्यनन्तरं क्रियाचिन्तायां—पा० ८ पु० ।

(३) नास्त्येव—पा० ७ पु० ।

एकादिव्यवहारहेतुः संख्या । सा पुनरेक-

---

माणुष्वेवेति व्यवस्थिते सुखादयो न शरीरगुणाः अया-वद्द्रव्यभावित्वात् न परमाणुगुणाः प्रत्यक्षत्वादित्यात्मा-धिकारोक्तं समाश्रितं वेदितव्यमिति ॥

अथोद्देशक्रमप्राप्तां संख्यां निरूपयति । एकादीति । व्यव-ह्रियतेऽनेनेति हानोपादानादि क्रियत इति व्यवहारो विज्ञानम् । एकं द्वे त्रीणीत्याद्याकारं तस्य विषयतया हेतुः संख्येति प्रमाणमुक्तम् । न ह्येकादिविज्ञानं निर्विषयं व्याघा-तात् । नाप्यलीकविषयमबाधनात् । नापि घटस्वरूपमात्र-निबन्धनं घटमन्तरेण घटान्तरेऽपि भावात् । नापि घटत्वनिबन्धनं पटेऽपि भावात् । न चारजतेऽपि रज-तप्रत्ययो भवन्न निमित्तान्तरमपेक्षत इतिवत् घटे भूत्वा पटादावपि भविष्यति । न च निमित्तान्तरमपेक्षिष्यत इति साम्प्रतम् अभ्रान्तत्वात् सोऽयं घटादावेकप्रत्ययो घटघटत्वातिरिक्तविषयः तत्प्रत्ययनिमित्तमन्तरेण पटा-दावपि जायमानत्वात् वस्त्रचर्मकम्बलेषु नीलप्रत्य-यवत् । न हि तद्व्यतिरेकेण भवति तद्विषयश्चेति व्याघातात् । न हि तत्प्रत्ययनिमित्तमन्तरेण भवत्यभ्रा-न्तश्चेति सम्भवति आकस्मिकत्वप्रसङ्गात् । एतेन स्वरूपाभेद एकत्वं स्वरूपभेदस्तु नानात्वं द्वित्वमिति भूषणः(१) प्रत्या-ख्यातः। स्वरूपाभेदो हि घटस्य घट एवोच्यते। घटादिप्रत्ययस्य

---

(१) भूषणो न्यायसूत्रवृत्तिकार इति प्रतिपादितमधस्तात् ।

स्वरूपप्रत्ययस्य च घटाद्येकनिबन्धनत्वात् एकादिप्रत्ययस्य च घटपटादिसाधारणत्वात् तथा च तन्निबन्धन एकादिप्रत्ययस्तं(१) विहाय पटं नोपसंक्रामेत् एवं स्वरूपभेद एव यदि द्वित्वं तदा त्र्यादिष्वपि द्वित्वप्रत्ययः स्यात् घटादाविव वा स्वरूपभेद इति पटादौ द्वित्वप्रत्ययो न स्यादिति । अथवा व्यवह्रियतेऽनेनेति व्यवहार इत्यभिधानमुच्यते तेनैकादिशब्दप्रवृत्तिनिमित्तं संख्येत्युक्तं भवति । तथा च संख्याग्राहकप्रत्यक्षानुग्राहकस्तर्कौ दर्शितः । तथाहि यदि संख्यापदार्थो घटादिस्वरूपादधिको न स्यात् तदा घटमानयेत्युक्ते सत्तादाविवासन्दिग्धः किमेकमनेकं वेति न सन्दिह्येत । एकमानयेत्युक्ते घटं पटं वा इति परावृत्त्य न पृच्छेत् । समुच्चयासमुच्चयावेकत्वानेकत्वे इति चेत् न एकत्वस्यैवासमुच्चयत्वात् द्वित्वादिसंख्याया एव समुच्चयत्वात् भिन्नानामभिन्नबुद्ध्युपग्रहमात्रस्य विषयतः स्वरूपतश्च विशेषाभावे त्र्यादिव्यवहारविलोपप्रसङ्गात् ॥

स्यादेतत् । त्वयापि संख्याविशेषोत्पत्तयेऽपेक्षाबुद्धेर्विशेषोऽवश्याभ्युपगन्तव्यः । अन्यथा तदविशेषे द्वित्वमेव त्रित्वमेवोत्पद्यत इति नियमो न स्यात् । न स्याच्च रूपादिषु चतुर्विंशतिरेव गुणा इति कर्मसु पञ्चैवेत्यादिनियम इति चेत् सत्यम् । क्वचित्तात्त्विकीं क्वचिद्भाक्तीं संख्यामेवोपादायेति वक्ष्यामः । अस्तु तर्हि द्वित्वादयः सामान्यविशेषाः घटत्वादिवत् कृतं गुणान्तरकल्पनया । गुणपक्षेऽपि सामान्य-

(१) एकादिव्यवहारस्तं—पा० ८ पु० ।

द्रव्या चानेकद्रव्या च । तत्रैकद्रव्यायाः सलिला-
दिपरमाणुरूपादीनामिव नित्यानित्यत्वनिष्पत्तयः ।

---

इहैव प्रत्ययानुगमः समर्थनीयः तद्वरं लाघवात् तद्दे-
वास्तु । न अविरोधात् परापरभावाभावाच्च । अन्यूनानतिरि-
क्तव्यक्तिवृत्तेश्च सामान्यद्वयस्यानभ्युपगमात् भेदे प्रमाणाभावात्
विरुद्धधर्माध्यासो हि तदिति प्रत्ययवैलक्षण्यं प्रमाणमिति
चेत् न धर्मविरोधमन्तरेण तस्यैवानुपपत्तेः । अन्यथा
बुद्धिव्यपदेशपौनरुक्त्योच्छेदप्रसङ्गादिति । अथवा एकादीत्य-
नेन गणितमुपलक्ष्यते । गुणत्वे सतीति चाधिकाराल्लभ्यते ।
तेन गणितव्यवहारहेतुर्गुणः संख्येति लक्षणमुक्तं भवति ।
लक्षणार्थश्च पूर्ववदिति । अन्यथैकव्यवहारहेतुरिति लक्षणे
द्वित्वाद्यव्याप्तिः द्वित्वव्यवहारे हेतुरित्युक्ते च त्रित्वाद्यव्याप्तिः
एकादिसमस्तव्यवहारहेतुरिति विवक्षिते ऽसिद्धिः स्यादिति ।
एवं प्रमाणतर्कलक्षणैर्व्यवस्थापितायाः संख्याया गुणान्तरे-
भ्यो विशेषं निरूपयति । सा पुनरिति । रूपादयो हि गुणा
एकद्रव्या एव । संयोगादयस्त्वनेकद्रव्या एव । संख्या
पुनरेकद्रव्या चानेकद्रव्या च । एकं द्रव्यमाश्रयतया
सम्बन्धि यस्याः सा एकद्रव्या अनेकं भिन्नं द्रव्यमाश्रय-
तया सम्बन्धि यस्याः सानेकद्रव्या । तत्रैकद्रव्याया
नित्यत्वाद्यतिदेशेन दर्शयति । तत्रेति । तत्र तयोर्मध्ये ।
सलिलमादिर्यस्य स सलिलादिः स चासौ परमाणुश्चेति
सलिलादिपरमाणुः तस्य रूपं तदेवादिर्येषां द्व्यणुकादि-

**अनेकद्रव्या तु द्वित्वादिका परार्धान्ता । तस्याः खल्वेकत्वेभ्योऽनेकविषयबुद्धिसहितेभ्यो निष्पत्तिः**

---

रूपाणां तानि तथा तेषामिव नित्यत्वम् अनित्यत्वं निष्पत्तिश्चैकद्रव्यायाः । एतदुक्तं भवति यथा सलिलपरमाणौ रूपं नित्यं तथा तस्यैकत्वमपि । यथा द्व्यणुकादौ रूपं कारणगुणप्रक्रमेणोत्पद्यते तथैकत्वमपि । यथा द्व्यणुकादावाश्रयविनाशात्तद्रूपं विनश्यति तथैकत्वमपीति । अनेकद्रव्यामाह । अनेकेति । द्वित्वमादिर्यस्याः सा द्वित्वादिका । परार्द्धमन्तो यस्याः सा परार्द्धान्ता । परार्द्धात् परतः संख्याव्यवहारो नास्तीत्यागमदर्शनादवगन्तव्यम् । तस्याः संक्षेपेणोत्पत्तिविनाशप्रकारमाह । तस्याः खल्विति । खलुशब्दोऽवधारणे निष्पत्तिरेव न त्वभिव्यक्तिमात्रम् । एकत्वं चैकत्वानि च एकत्वानि तेभ्यः । अनेनासमवायिकारणमुक्तम् । अनेकद्रव्येत्यनेन प्रागेव समवायिकारणस्य दर्शितत्वात् । न एकमनेकं तदेव विषयो यस्या बुद्धेः सानेकविषया बुद्धिः । तत्सहितेभ्य इति निमित्तकारणमुक्तम् । कथमेतत् । अथ एकत्ववद् द्वित्वादिकमपि कारणगुणेभ्य एव जातमपेक्षाबुद्ध्या व्यज्यत इति किं न स्यात् । न स्यात् द्व्यणुकादौ हि कारणगुणप्रक्रमेण द्वित्वादिकमुत्पद्यमानमेकत्वमिवैकद्रव्यं प्रसज्येत त्रित्वादिकं तु नोत्पद्यते कारणाभावात् । द्रव्यान्तरापेक्षया परार्द्धपर्यन्तं कारणस्य एकत्वादीनि सन्तीति कार्ये परार्द्धपर्यन्तमुत्पद्यमानमविरुद्धमिति चेन् न द्रव्यान्तराणामकारण-

अपेक्षाबुद्धिविनाशाद् विनाश इति । कथम् । यदा बोद्धुश्चक्षुषा समानासमानजातीययोर्द्रव्ययोः सन्नि-

---

त्वात् । तथा च कारणगुणपूर्वकत्वानुपपत्तिः कारणाकारणसंख्याभ्यः कार्याकार्यसंख्याः स्युः संयोगवदिति चेत् न तद्वदेव तर्हि तासां न कारणमाश्रयः स्यात् । तथा च कारणपरमाणुभ्यां द्व्यणुकस्य त्रित्वादिव्यवहारो नोपपद्येत किन्तु तैरेकत्वैरेकत्वं तैरेव द्वित्वादिकमिति महद्वैषम्यं कारणाविशेषे कार्यवैचित्र्यानुपपत्तेः । कार्यमपेक्ष्यैकत्वं स्वाश्रयमपेक्ष्य च द्वित्वादिकमिति चेत् न कार्यापेक्षयापि द्वित्वाद्यभ्युपगमात् नित्यद्रव्येषु च द्वित्वादिकं न नित्यं नित्यमेकमनेकव्यक्तिवृत्ति सामान्यमिति सामान्यलक्षणापत्तौ गुणत्वव्याघातात् । नानित्यं कार्यत्वे सति सततोत्पत्तिप्रसङ्गोऽपेक्षणीयान्तराभावात् अविनाशप्रसङ्गश्च । कारणविनाशविरोधि(१)गुणोत्पादयोरसम्भवात् द्वित्वद्विपृथक्त्वादेश्च समानदेशत्वे समानेन्द्रियग्राह्यत्वे च सति व्यञ्जकनियमानुपपत्तिरिति । तस्मादपेक्षाबुद्धिरेव द्वित्वादेरुत्पादिका नियामिका च तद्विनाशश्च तद्विनाशक इति संक्षेपः ॥

तदेवं(२) द्वित्वबुद्धिमात्रे न्यायप्राप्तां शिष्यजिज्ञासामनूद्य विशदयति । कथमिति । यदा यस्मिन् काले(३) बोद्धुश्चेतनस्य

---

(१) आश्रयनाशविरोधि—पा० ८ पु० ।

(२) तदेतत्—पा० ८ पु० ।

(३) यस्मिन् क्षणे—पा० ८ पु० ।

कर्षे सति तत्संयुक्तसमवेतसमवेतैकत्वसामान्यज्ञा-
नोत्पत्तावेकत्वसामान्यतत्सम्बन्धतज्ज्ञानेभ्य एकत्व-
गुणयोरनेकविषयिण्येका बुद्धिरुत्पद्यते तदा ताम-
पेक्ष्यैकत्वाभ्यां स्वाश्रययोर्द्वित्वमारभ्यते ततः पुन-

---

बुद्धिरुत्पद्यत इत्यग्रे भविष्यति। चक्षुषेत्युपलक्षणं त्वचा वा लिङ्गेन वेत्यपि द्रष्टव्यम्। समानासमानजातीययोरित्यनियमं दर्शयति। सन्निकर्षे सतीति। सम्बन्धे सतीत्यर्थः। तत्संयुक्तमिन्द्रियसंयुक्तं यद्द्रव्यं तत्समवेतौ यावेकत्वगुणौ तयोः समवेतं यदेकत्वसामान्यं तत्र ज्ञानोत्पत्तौ सत्यामेकत्वसामान्यात् तत्सम्बन्धाच्च समवायलक्षणात् तज्ज्ञानाच्च पूर्वोत्पन्नादेकत्वगुणयोर्विषयभूतयोरत एवानेकविषयिण्येका बुद्धिरुत्पद्यते उत्पन्ना भवति। यदोत्पन्ना भवति तदा तामपेक्ष्यैकत्वाभ्यां स्वाश्रययोर्द्वित्वमारभ्यते द्वित्वारम्भणाय व्यापियते द्वित्वारम्भानुगुणापेक्षाबुद्धिः सहकारिणी लभ्यते इति। यदा तदेत्येककालतानिर्देशोपपत्तिः अपेक्षाबुद्ध्युत्पादद्वित्वोत्पद्यमानतयोरेककालत्वादिति। अत्र च द्रव्यज्ञानात् पूर्वं गुणज्ञानं गुणज्ञानाच्च पूर्वं सामान्यज्ञानमिति विशेषणत्वादेवेयम्। व्यवच्छेदकस्य तथाभावात्। स्वज्ञानेन च व्यवच्छेदकत्वात्। अननुसंहितविशेषणस्य विशिष्टप्रत्ययानुपपत्तेः। तथा च कार्यमेव कारणे प्रमाणमिति द्वित्वस्या-

तस्मिन् द्वित्वसामान्यज्ञानमुत्पद्यते ततः पुन(१)-द्वित्वसामान्यज्ञानादपेक्षाबुद्धेर्विनश्यत्ता द्वित्वसामान्यतत्सम्बन्धतज्ज्ञानेभ्यो द्वित्वगुणबुद्धेरुत्पद्यमानतेत्येकः कालः। तत इदानीमपेक्षाबुद्धिविनाशाद् द्वित्वगुणस्य विनश्यत्ता द्वित्वगुणबुद्धितः सामा-

---

पेक्षाबुद्धिसत्त्वासत्त्वाधीनं सत्त्वासत्त्वमिति द्वे द्रव्ये इति द्रव्यज्ञानस्य संकटप्रविष्टतया तदन्तर्भाव्य विनाशं व्युत्पादयति। ततः पुनरिति। तत उत्पन्ने द्वित्वे सति तस्मिन्नेव वर्त्तमानं यत् द्वित्वसामान्यं तत्र ज्ञानमुत्पद्यते। पुनरिति पूर्वोक्तसम्बन्धानुकर्षणार्थं तस्मादित्यानन्तर्यार्थं द्वित्वसामान्यज्ञानादपेक्षाबुद्धेर्विनश्यत्ता विनाशकारणसान्निध्यम्। यद्यपि सामान्यज्ञानमेवापेक्षाबुद्धेर्विनाशकारणं तदुत्पत्तिरेव च सान्निध्यं तथापि तस्य हेतुत्वमाविष्कर्तुं पञ्चमीनिर्देशः। द्वित्वसामान्यतज्ज्ञानात् तत्सम्बन्धाच्च द्वित्वगुणबुद्धेरुत्पद्यमानता उत्पत्तिकारणसान्निध्यं पूर्ववत् पञ्चम्युपपत्तिः यदेवापेक्षाबुद्धेर्विनाशकं तदेव गुणबुद्धेरुत्पादकमिति विनश्यच्चोत्पद्यमानतयोरेकः काल इत्युपपद्यते। तत इदानीं तदनन्तरं तस्मिन् काले अपेक्षाबुद्धेर्विनाशाद् द्वित्वगुणस्य विनश्यत्ता द्वित्वगुणबुद्धितः सामान्यबुद्धेरपि विनश्यत्ता अपेक्षाबुद्धिविनाशगुणबुद्धी द्वित्वगुणद्वित्वसामान्यबुद्धिविनाशकतया

---

(१) तस्मात्—पा० ६ पु०।

न्यबुद्धेर्विनश्यत्ता द्वित्वगुणतज्ज्ञानतत्सम्बन्धेभ्यो(१) द्वे द्रव्ये इति द्रव्यबुद्धेरुत्पद्यमानतेत्येकः कालः । तदनन्तरं द्वे द्रव्ये इतिज्ञानोत्पादः द्वित्वस्य विनाशः द्वित्वगुणबुद्धेर्विनश्यत्ता द्रव्यज्ञानात् संस्कारस्योत्पद्यमानतेत्येकः कालः । तदनन्तरं द्रव्यज्ञानाद् द्वित्वगुणबुद्धेर्विनाशो द्रव्यबुद्धेरपि संस्कारादिति(२) । एतेन(३) त्रित्वाद्युत्पत्तिरपि व्याख्याता ।

---

तयोर्यौगपद्ये तयोर्विनश्यत्तायौगपद्यमित्यर्थः । द्वित्वगुणतज्ज्ञानतत्सम्बन्धेभ्यो द्वे द्रव्ये इति द्रव्यज्ञानस्योत्पद्यमानता गुणज्ञानमेव हि चरमं द्रव्यज्ञानस्योत्पादकं विशेषणतत्सम्बन्धयोः पूर्वसिद्धत्वात् अपेक्षणीयान्तराभावाच्च तच्च तदैवेति भवत्येकः कालः । तदनन्तरं द्वे द्रव्ये इति ज्ञानस्योत्पादः पूर्वनिर्दिष्टेभ्यो द्वित्वगुणतज्ज्ञानतत्सम्बन्धेभ्यो द्वित्वस्य विनाशः । पूर्वनिर्दिष्टादपेक्षाबुद्धेर्विनाशात् पूर्वनिर्दिष्टद्वित्वबुद्धितः सामान्यबुद्धिविनाशः द्रव्यबुध्युत्पत्तिरेव संस्कारस्योत्पादिका गुणबुद्धेर्विनाशिकेति तयोरुत्पद्यमानताविनश्यतेत्येकः कालः तदनन्तरं द्रव्यज्ञानाद्गुणबुद्धेर्विनाशः संस्कारस्योत्पाद इत्यपि द्रष्टव्यं । क्षणान्तरे संस्काराद्द्रव्यबुद्धेरपि विनाश इति विशेषः । एतेन त्रित्वाद्युत्पत्तिर्व्याख्याता । एतेन प्रकारेण उत्पत्तिरित्युपलक्षणं

---

(१) द्वित्वगुणज्ञानं द्वित्वसामान्यज्ञानस्य विनाशकारणं द्वित्वगुणज्ञानतत्सम्बन्धेभ्यः—पा० ४ पु० ।

(२) तदनन्तरं द्वित्वगुणबुद्धिविनाशः द्रव्यबुद्धेरपि संस्कारादिति—पा० ६ पु० ।

(३) अनेन—पा० ६ पु० ।

एकत्वेभ्योऽनेकविषयबुद्धिसहितेभ्यो द्वित्वादिनिष्प-

---

विनाशोपि व्याख्यातः । तमेव प्रकारमाह एकत्वेभ्य इति । तदयं प्रक्रियासंक्षेपः इन्द्रियसन्निकर्षस्तस्मादेकत्वसामान्यबुद्धिस्ततोऽपेक्षाबुद्धिस्ततो द्वित्वं तस्मात् द्वित्वसामान्यज्ञानं तस्मात् द्वित्वगुणज्ञानं ततो द्रव्यज्ञानं ततः संस्कार इत्युत्पादक्रमः । विनाशक्रमस्तु अपेक्षाबुद्धित एकत्वसामान्यज्ञानस्य द्वित्वोत्पत्तिसमकालं विनाशः अपेक्षाबुद्धेर्द्वित्वसामान्यज्ञानात् द्वित्वगुणबुद्धिसमकालं द्वित्वसामान्यज्ञानस्य द्वित्वगुणज्ञानात् द्वित्वस्यापेक्षाबुद्धिविनाशात् द्रव्यबुद्धिसमकालं गुणबुद्धेर्द्रव्यबुद्धितः संस्कारोत्पत्तिसमकालं द्रव्यबुद्धेस्तदनन्तरं संस्कारादिति । प्रमाणन्तु संस्कारे द्वित्वविशिष्टद्रव्यस्मरणं द्रव्यज्ञानेऽनुव्यवसायः । गुणज्ञाने द्रव्यबुद्धिः सामान्यज्ञाने गुणबुद्धिः द्वित्वसामान्यज्ञानगुणद्रव्यबुद्धयो द्वित्वे अपेक्षाबुद्धौ च तत्कार्यं द्वित्वं सामान्यज्ञानेऽपेक्षाबुद्धिः इन्द्रियसन्निकर्षे सामान्यज्ञानमिति । अपेक्षाबुद्धिस्तु द्वित्वस्योत्पादिका व्यञ्जकत्वानुपपत्तौ तेनानुविधीयमानत्वात् शब्दं प्रति संयोगविभागवदित्यनुसंधेयम् । द्वित्वं बुद्धिजं प्रतिनियतपुरुषवेद्यत्वात् सुखवदिति तु जागराद्यज्ञानप्रयत्नाभ्यामनैकान्तिकं परं प्रत्यसिद्धं चेत्यनादेयम् । बुद्धेर्बुद्ध्यन्तरविनाश्यत्वं संस्कारविनाश्यत्वे च किं प्रमाणं आश्रयविनाशानुपपत्तावाशुतरविनाशित्वम् आशुतरविनाशित्वे च परिशेषः । तथाहि बुद्धिस्तावदाशुतरविनाशिनीति विद्युत्सम्पातादिषु प्रत्यक्षसिद्धं प्रत्यर्थनियतत्वेन च कर्मसन्तानादौ तावदाशुतरोत्पादिनीत्यूहनीयम् । प्रतिक्षणं निमेषोन्मेषसन्ततौ स्थिरविषयेष्वपि लक्षणीयं तथा च स्थिरविषया अपि बुद्धयः

सन्तानवर्तिन्यो व्यवधानानिवर्त्तनीयत्वात् प्रदीपप्रभावत् । अन्यथोन्मील्य निमीलितनयनानामपि रूपसाक्षात्कारप्रसङ्गः । न चाहेतुको विनाश इति स्मर्त्तव्यं तस्मात् पूर्वपूर्वबुद्धीरुत्तरोत्तराः प्रतिघ्नन्ति । तदभावे संस्कारः क्वचिदुभयमपि । एवं द्वित्वादिकमपि यद्याशुतरविनाशि न स्यात् कालान्तरेऽपेक्षाबुद्धिमन्तरेण गुणान्तरवदुपलभ्येत न चाभिव्यक्त्यर्थं तदपेक्षा तस्याः कारणत्वादभिव्यञ्जकत्वे प्रागपि कारणत्वं न सिद्ध्येत्। साधितं चैतत् तस्माद्यदा यदापेक्षाबुद्धिस्तदा तदोत्पादिकेति प्रत्युत्पन्नस्यैवोपलब्धेः पूर्वोत्पन्नावस्थानयोग्यानुपलम्भबाधितामित्याशुतरविनाश्येव द्वित्वादिकम् । तत्र च सत्येवाश्रयेऽसति च विरोधिनि गुणान्तरे च निवर्तमानं निमित्तनिवृत्तेरेव निवर्त्तत इत्यवधार्यते तथाच प्रयोगः द्वित्वं निमित्तविनाशविनाश्यं आश्रयनाशविरोधिगुणान्तरप्रादुर्भावाभावे गुणस्य सतो विनाशित्वात् चरमज्ञानवत् । व्यतिरेकेण वा द्व्यणुकादिद्रव्यमुदाहर्तव्यमिति । कथं पुनर्द्वित्वविनाशकाले तद्विशिष्टद्रव्यज्ञानं को वास्य विषयः । न हि धर्मधर्मिभ्यामपरः कश्चिद्विशिष्टो नाम उच्यते विशेषणं हि विशिष्टज्ञानकारणं न तु विषयः । तथाच विशिष्टज्ञानोत्पत्तिकाले असतोपि पूर्वभाविनस्तत्त्वमविरुद्धं । तत्किं विशिष्टज्ञानोत्पादकत्वमात्रं विशेषणत्वं इन्द्रियादेरपि तथाभावप्रसङ्गात् ज्ञायमानस्य सत इत्यपि नास्ति । शब्दादेरपि तथाभावप्रसङ्गात् । व्यवच्छेदकस्य सत इति चेन्न उपलक्षणस्यापि विशेषणतापत्तेः । उपरञ्जकस्य सत इति तु स्यात् तदेव त्वविवेचितं न श्रद्दधीमहि । तदात्मीभावः इति चेत्। नासम्भवात् नहि धर्मधर्मिणोस्तादात्म्यं तथा सति धर्मधर्मिभावानुपपत्तेः न हि घटः स्वात्मना घटीतिप्रतीतिपथमवतरति विशिष्टज्ञानस्य भ्रा-

न्ततत्प्रसङ्गाच्च । भिन्नयोरभेदावगाहित्वात् भेदाभेदपक्षोऽस्त्विति चेत् न विरोधाय दत्ते जलाञ्जलौ कः पक्षस्तर्हि न स्यात् नियमो न स्यादिति चेत् । नूनमनियमस्य विरुद्धत्वादिति भ्रातुर्मनसि विपरिवर्त्तते । सर्वे पक्षाः सन्त्विति चेत् न विरोधो हि भेदको यदा च सर्वमविरुद्धं तदा भेदे प्रमाणाभावात् सर्वमभिन्नमित्योष्ठपुटस्पन्दस्याप्यवसरो नास्तीति क एतावति गहने प्रविशेत् । अवच्छेदकस्य सतो व्यवच्छेद्यप्रतीतौ स्वरूपनिवेशनमुपरञ्जकत्वमिति चेत् अस्तु न तु नाशकाले तत्सम्भवति वर्तमानापन्नत्वात् प्रत्यक्षज्ञानस्येति । न च विशिष्टज्ञानं केवलाद्विशेष्यालम्बनम् उत्पलं नीलमुत्पलमित्यनयोरविशेषप्रसङ्गात् । न च विशिष्टं नाम षट्पदार्थव्यतिरिक्तमनुभवयुक्त्यभ्युपगमाभावादिति । इदमत्र तत्त्वं । समानाधिकरणमवच्छेदकं विशेषणम् । अतद्व्यावृत्तिर्विशिष्टत्वं तेन नीलो गुणः स्वज्ञानेन विच्छित्ति(१)प्रत्यायकतया समानाधिकरणतया च विशेषणं तत्प्रत्याय्यव्यवच्छिन्नस्यधिकरणतयोत्पलं विशेष्यमनीलव्यावृत्तमुत्पलं विशिष्टप्रत्ययस्य विषयः । केवलज्ञानस्य तूत्पलमात्रम् अवच्छेदकत्वाविशेषेपि व्यधिकरणमुपलक्षणं व्यावृत्तिश्च षट्पदार्थातिरेकिण्येवाभावरूपत्वात् न च व्यावृत्तेरपि व्यावृत्त्यन्तरापेक्षायामनवस्था तत्स्वाभाव्यात् । एवञ्च क्वचिदिन्द्रियविषयसामर्थ्यात् स्थिरं विशेषणं विशिष्टप्रतीतावात्मानमावेशयत्यपि न तु विशेषणतायां तदुपयोगः । देवदत्त इत्यादिनाप्रयोजनायां शब्दस्यापि चाक्षुषत्वप्रसङ्गादिति सर्वं सुस्थम् । स्यादेतत् । समवाय्यसमवायिनिमित्तानामविशिष्टत्वात् द्वित्वत्रि-

(१) व्यवच्छित्तीति पाठान्तरम् ।

त्वाद्युत्पत्तिनियमे किं कारणं वाच्यं द्वाभ्यामेकत्वाभ्यां द्वित्वं त्रिभिरेकत्वैस्त्रित्वमारभ्यत इति किमसङ्गतमिति चेत् एकत्वे द्वित्वादेरभावात् । द्वाभ्यां द्रव्याभ्यां द्वित्वं त्रिभिर्द्रव्यैस्त्रित्वमिति चेत् । न । संख्योत्पत्तेः पूर्वं तत्रापि तदभावात् । सत्त्वेनावस्थावैयर्थ्यं चापद्येत एकत्वेष्वेव कश्चिद्विशेषोस्तीति चेत् । न । तत एव तर्हि द्वित्वादिव्यवहारोस्तु कृतं द्वित्वादिना । बुद्धिविशेषादित्येके तदसत् । तस्या विषयविशेषमन्तरेणान्यस्य साक्षात्कारित्वादेरनुपयोगात् । अदृष्टविशेषादित्येके वर्णयन्ति । तदसत् । अनियमप्रसङ्गात् । सैव सामग्री कदाचित्कस्यचित् द्वित्वादिकमारभेत कस्यचित् त्रित्वं तथाचैकं तावदेव द्रव्यं कस्यचिद्द्वयं कस्यचित्त्रयं स्यात् । अदृष्टविशेषनियमस्तु दृष्टमुपाधिमाश्रित्य भवेत् । ऊर्ध्वगतावग्नित्ववत् तिर्यग्गतौ पवनत्ववच्च द्वित्वाभिमानाद्द्वित्वोत्पत्तिरित्यन्ये । एतदपि नास्ति । अपेक्षाबुद्धिमन्तरेण तदभिमानस्यैवानुपपत्तेः । तत्रापि अभिमानान्तरापेक्षायामनवस्था तस्मात् कणादपादान् प्रणम्य यद्दामस्तद्विद्वांसा विदाङ्कुर्वन्तु यथा पाके समवाय्यसमवायिनिमित्तानां साम्येपि रूपाद्यभावापेक्षया सामग्रीविशेषाद्रूपरसाद्युत्पत्तिनियमः तथापेक्षाबुद्धेः स्वविषयसमानाश्रयद्वित्वाद्यभावापेक्षया द्वित्वाद्युत्पत्तिनियमः । न तर्ह्येकपुरुषापेक्षाबुद्धिजनिते द्वित्वे सति पुरुषान्तरापेक्षाबुद्ध्या तत्र द्रव्ये द्वित्वमुत्पद्येत । न संख्याया नियतपुरुषवेद्यतया तन्नियमेनैव स्वाभावस्य(१) विवक्षितत्वादित्यदोषः । अथवा शुद्धयापेक्षाबुध्या द्वित्वं द्वित्वसहितैकत्वबुध्या त्रित्वं त्रित्वसहितैकत्वबुध्या चतुष्ट्वमित्यादि ज्ञेयं । सेनावनादौ कथं न हि तत्र नियतसंख्यासहितमेकत्वज्ञान-

(१) तदभावस्येति पाठान्तरम् ।

मस्तीति चेत् । अत एव न तत्र नियता सहस्रसंख्योत्पद्य-
ते अनियतैकत्वालम्बनत्वादपेक्षाबुद्धेरवान्तरसामान्यविशेषरहि-
तं बहुत्वमात्रं तूत्पद्यत इति केचित् । तदसत् । घटत्वादिवि-
शेषरहिते शुद्धमृद्विशेषरहिते तत्र सन्देहानुपपत्तेः । अ-
ङ्गान्तरोपचयप्रत्ययक्रमेण महती महत्तरा सेनेत्यादिव्यवहारा-
नुपपत्तेश्च तस्माद्वस्तुस्थितेनाभावानियमेनैव तत्र नियमस्तद-
प्रतीतिस्तु नियतापेक्षाबुद्धेर्व्यञ्जिकाया अभावादिति । कथं पु-
नरभावस्य कारणत्वम् अन्वयव्यतिरेकाभ्यामिति सुप्रसिद्धं ।
कात्रापि कथन्ता । ननु रूपाद्यभावानां सर्वेषां सर्वानुविधा-
नाविशेषात् कथं रूपस्यैव रूपाभावो रसस्यैव रसाभावः का-
रणमिति नियमः । स्वाभावपूर्वकत्वात् सर्वस्य न हि तस्मि-
न्नसति तज्जायते अन्यस्मिंश्च सत्यपि तत् जायत एव त-
स्माद्रूपादिषु जनयितव्येषु रूपाद्यभाव एव प्रयोजको रसा-
द्यभावस्तु साहचर्यनियममात्रेणेति कृतमप्रकृतचिन्तया ।
शतं पिपीलिकानां मया निहतमित्यत्र कथं गुणादिष्विव
गौणो व्यवहार आश्रयानुपपत्तेर्बाधकस्य तुल्यत्वात् । नष्टस्या-
पि समवायिकारणत्वमिति त्वलौकिकमवैदिकं च स्वाश्रय-
नाशे हि कार्यं विनश्येत उत्पद्यत इति तु विरुद्धस्य मुख्यमुदा-
हरणं दृश्यते तावदिति चेत् । वरमनाश्रयमेव तर्हि नाशव-
दुत्पद्यतान्तेनासमवायिकारणाभावेऽपि तज्जन्म सुसमाहितं
स्यात् न हि नष्टाश्रयाण्येकत्वान्यपि सम्भवन्ति माभूवन् ता-
न्यपि अतथाभूतान्येव कारणानि भविष्यन्तीति चेत् । तदेत-
दायातं मग्नश्चेन्नागलोकमेव पश्यतीति । ओमिति चेत् । तर्हि
निमित्तमात्रादेव संख्योत्पत्तिमभ्युपगच्छन् सुतलमेव पश्य
तथाच गुणादिष्वपि संख्याव्यवहारो मुख्य एव समर्थ्येत ।

न्निरपेक्षाबुद्धिविनाशाद्विनाश इति। क्वचिच्चाश्रयविनाशादिति(१)। कथम्। यदैकत्वाधारावयवे कर्मोत्पद्यते तदैवैकत्वसामान्यज्ञानमुत्पद्यते कर्मणा चावयवान्तराद्विभागः क्रियते अपेक्षाबुद्धेश्चोत्पत्तिः। ततो यस्मिन्नेव काले विभागात् संयोगविनाशस्तस्मिन्नेव काले द्वित्वमुत्पद्यते ततः संयोगविनाशाद् द्रव्यविनाशः सामान्यबुद्धेश्चोत्पत्तिः ततो यस्मिन्नेव काले सामान्यज्ञानादपेक्षाबुद्धेर्विनाशः तस्मिन्नेव काले आश्रयविनाशाद् द्वित्वविनाश इति शोभनमेतद्विधानम्।

---

एवं तर्हि भावमर्यादातिक्रमः स्यादिति चेत्। अत्रापि मर्यादातिक्रमाद्विभेष्येव स्मर तर्हि समवायिनो असमवायिनश्च स्वरूपं न हि भिन्नकालं तद्भवतीति। एवं प्रतिनियतविनाशकारणं व्युत्पाद्य साधारणमाह क्वचिदिति। तदेतत् सूक्ष्मत्वात् प्रश्नपूर्वकं व्युत्पादयति कथमिति। द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मसमकालमेकत्वसामान्यज्ञानचिन्तायामेतल्लभ्यत इति संक्षेपः। तथा ह्यवयवकर्मसामान्यज्ञाने विभागापेक्षाबुद्धी संयोगनाशद्वित्वोत्पत्ती। द्रव्यनाशद्वित्वसामान्यज्ञाने ताभ्यां द्वित्वनाशापेक्षाबुद्धिनाशाविति यथाक्रममत्रसेयम्। उपलक्षणं चैतत्। कर्मसमकालमपेक्षाबुद्धिचिन्तनादुभाभ्यामित्यपि द्रष्टव्यं तथाहि कर्मापेक्षाबुद्धी विभागद्वित्वे संयोगनाशद्वित्वसामान्यज्ञाने द्रव्यनाशापेक्षाबुद्धिनाशौ ताभ्यां द्वित्वनाश इति। परत्वापरत्वयोश्चैतत् स्फुटीभविष्यति। इह केषाञ्चिद्विरोधः सहानवस्थानरूपो यथा पाकजपूर्वापररूपा-

---

(१) विनाशादपि विनाशः—पा० ६ पु०।

वध्यघातकपक्षे सहानवस्थानलक्षणे तु विरोधे द्रव्ये द्रव्यज्ञानानुत्पत्तिप्रसङ्गः । कथम् । गुणबुद्धिसमकालमपेक्षाबुद्धिविनाशाद्(१) द्वित्वविनाशो तदपेक्षस्य द्वे द्रव्ये इति द्रव्यज्ञानस्यानुत्पत्तिप्रसङ्ग इति । लैङ्गिकवद् ज्ञानमात्रादिति चेत् स्यान्मतम् यथा भूतं भूतस्येत्यत्र लिङ्गाभावेऽपि ज्ञानमात्रादनुमानम् तथा

---

दीनां केषाञ्चिद्वध्यघातकलक्षणो यथा अग्निसंयोगपाकजादीनां अतो विरोधिगुणत्वेन बुद्धिषु सन्देहः । ननु सहानवस्थानलक्षणपक्षे अहेतुको विनाशः स्यात् पूर्वविनाशोत्तरसद्भावयोस्तुल्यकालतया कार्यकारणभावाभावात् । नचैवं । तत् कुतः सन्देहः । न ज्ञानाविनाश्यत्वेपि तद्धेतोरेव पूर्वस्य विनाशोत्पत्तौ सन्देहोपपत्तेः । ततो विचारमारभमाणो वध्यघातकपक्षे यथोक्तप्रक्रियानिर्वाहद्वारा व्यवहारनिर्वाहप्रयोजनमाह । शोभनमिति । प्रशस्तं सप्रयोजनतयेत्यभिप्रायः तथाच व्यवहारसिद्धिरेवात्र प्रमाणमस्तीत्यभिप्रायः । सहानवस्थानपक्षे बाधकमाह सहेति तथाच तदधीनो नियतसंख्यद्रव्यव्यवहारो न स्यादिति भावः । एतत्कथमित्यादिना व्युत्पादयति कथमिति । विशेषणतत्संबन्धतज्ज्ञानेभ्यो हि विशिष्टज्ञानं भवतीति दर्शितम् । सहानवस्थाने तु द्वित्वसामान्यज्ञानकाल एवापेक्षाबुद्धेरनवस्थानं गुणबुद्धिसमकालं चापेक्षाबुद्धिविनाशात् द्वित्वविनाश इति विशेषणाभावात् कुतो द्वे द्रव्ये इति बुद्धिः स्यादित्यर्थः । अत्र शङ्कते लैङ्गिकवदिति एतद्विवृणोति स्यान्मतमिति । मतमभिमतं परस्य भवेत् । अभूतं भूतस्येत्यत्र सूत्रे अभूतं अविद्यमानमाशुतरविनाशितया

---

(१) गुणबुद्धिसमकालमेवापेक्षाबुद्धेर्विनाशात्—पा० ६ पु० ।

गुणविनाशेऽपि गुणबुद्धिमात्राद् द्वे द्रव्ये इति प्रत्ययः स्यादिति । न विशेष्यज्ञानत्वात् । न हि विशेष्यज्ञानं सारूप्याद्विशेषणसम्बन्धमन्तरेण(१) भवितुमर्हति । तथाह(२) सूत्रकारः समवायिनः श्वैत्याच्छ्वैत्यबुद्धेः श्वेते बुद्धिस्ते कार्यकारणभूते इति । न तु लैङ्गिकं ज्ञा-

---

यथा शब्दबुध्यादिलिङ्गं भूतस्य विद्यमानस्य वीणावेण्वा-त्मादेर्लिङ्गिन इत्यर्थे सति लिङ्गाभावेपि तज्ज्ञानमात्राच्छब्द-बुध्यादिज्ञानमात्रादसत्यपि लिङ्गे वीणादेरनुमानमिति दृष्टान्तं व्याख्याय दार्ष्टान्तिके योजयति । तथेति । परिहरति नेति । एतद्विवृणोति । नहीति । न हि दण्डीति वा श्याम इति वा सारूप्याद्यवच्छित्त्या सह व्यवच्छेदकस्य सारूप्यं साधर्म्यं सामानाधिकरण्यमिति यावत् । तस्माद्विशेषणसम्बन्धमन्त-रेण प्रत्ययो भवितुमर्हति । तथा सत्यामदशायां श्यामो घट इति रक्तदशायामपि स्मर्यमाणपूर्वरूपोऽश्यामव्यावृत्त इति श्याम इति वा प्रतीयेतेति भावः । विशेषणाद्विशेष्य-ज्ञानं भवति न तु तज्ज्ञानमात्रादित्यत्र सूत्रकारानुम-तिमाह तथा चाहेति । समवायिन इति सम्बन्धस्य कारणत्व-मुक्तं श्वैत्यादिति विशेषणस्य श्वैत्यबुद्धेरिति ज्ञानस्य श्वेते बु-द्धिरिति श्वेतद्रव्यविषया बुद्धिः फलं । ते कार्यकारणभूते इति ।

---

(१) स्वरूपाद् विशेषणमन्तरेण—पा० २ पु० ।

(२) तथा चाह—पा० ६ पु० ।

नमभेदेनोत्पद्यत इति(१) तस्माद्विषमोऽयमुपन्यासः। न। आशूत्पत्तेः यथा शब्दवदाकाशमिति। अत्र त्रीणि ज्ञानान्याशूत्पद्यन्ते तथा द्वित्वादिज्ञानोत्पत्तावित्थदोषः। वध्यघातकपक्षेऽपि समानो दोष इति चेत् स्यान्मतम्। ननु वध्यघातकपक्षेपि तर्हि ज्ञानानुत्पत्ति(२)-

---

तद्विशेषणं सा च विशेष्ये बुद्धिरिति कार्यकारणभूते इति प्रकृतं लैङ्गिकं तु नैवमतो ज्ञानमात्रादपि भवन्न दुष्यतीत्याह न त्विति। अभेदेन सारूप्येण न हि तद्भवति शब्दः शब्दवती वा वीणेति बुद्धिर्बुध्यते वा पुरुष इति किन्तूपलभ्यमानः शब्दो वीणाकार्यः एवंभूतशब्दत्वात् इयमनुव्यवसीयमाना बुद्धिर्द्रव्याश्रिता गुणत्वात् कार्यत्वाद्वेति साध्यसाधनभेदेन वैयधिकरण्येनेत्यर्थः। तस्माद्विषमोऽयमुपन्यासः अयं दृष्टान्तोपन्यासो विसदृश इति॥ स्यादेतत्। यद्यतीते विशेषणे द्वे द्रव्ये इति ज्ञानं तर्हि श्यामोऽयं कुंभ आसीदंह्व्ययमासीदितिवत् द्वितयमासीत् त्रितयमासीदिति स्यात् न त्विदानीं द्वयं त्रयमिति। किञ्च सामान्यज्ञानमपेक्षाज्ञानं द्वित्वाद्युत्पत्तिस्ततसामान्यज्ञानं गुणज्ञानं द्रव्यज्ञानमिति क्रमोऽप्ययमनुपलम्भबाधित इति दोषद्वयमाशंक्याह नाशूत्पत्तेरिति। एतत् दृष्टान्तेन स्फुटयति यथेति। शङ्कते वध्यघातकेति। विवृणोति स्यान्मतमिति। यद्भयात् सहानवस्थानपक्षो हेयस्तदिहाप्युपस्थितम्। तत्र ह्यपेक्षाबुद्धेर्द्वित्वसामान्य-

---

(१) किन्तु साध्यसाधनभेदेन—इत्यधिकम् ६ पु०।

(२) द्रव्यज्ञानानुत्पत्ति—पा० ६ पु०।

प्रसङ्गः । कथम् । द्वित्वसामान्यबुद्धिसमकालं संस्कारादपेक्षाबुद्धिविनाशादिति । न । समूहज्ञानस्य संस्कारहेतुत्वात् समूहज्ञानमेव संस्कारकारणं नालोचनज्ञानमित्यदोषः । ज्ञानयौगपद्यप्रसङ्ग इति चेत् स्यान्मतम् । ननु ज्ञानानां वध्यघातकविरोधे(१) ज्ञानयौगपद्यप्रसङ्ग इति चेत्(२) । न । अविनश्यतो-

---

ज्ञानकालेऽनवस्थानं गुणबुद्धिसमकालं गुणनाशात् द्रव्यज्ञानानुपपत्तिरिति न कश्चिद्विशेषः । ज्ञानवत् संस्कारस्यापि पूर्वज्ञाननाशकत्वाभ्युपगमादित्यर्थः । परिहरति न समूहेति । विवृणोति समूहज्ञानमेवेति । समूहज्ञानं विशेष्यज्ञानमत्र च विशिष्टस्यैव सर्वदा स्मरणादिति प्रमाणं विशिष्टज्ञानानुत्पत्तिप्रसङ्गश्च तर्क इति । स्यादेतत् । अपेक्षाबुद्धिः संस्कारं मा कार्षीत् द्वित्वोत्पत्तिसमकालमेकत्वविशिष्टद्रव्यज्ञानं यत्तत्किं न कुर्यात्तावतापि स दोषस्तदवस्थ एवेति किं नाशङ्कितम् । परिहृतप्रायत्वात् । द्वित्वादिसंख्योत्पत्त्यनभिभूतस्यैवैकत्वस्य विशिष्टज्ञानजनकत्वात् द्वे द्रव्ये इत्यादिव्यवहारकाले एकं द्रव्यमिति व्यवहाराभावात् अन्यथा द्रव्यज्ञानानुत्पत्तिप्रसङ्ग इति स एव तर्क इति अन्यदाशङ्कते । ज्ञानायौगपद्येति । विवृणोति स्यान्मतमिति । परिहरति नाविनश्यतोरिति । प्रतिषेधात् । प्रयत्नज्ञानायौगपद्यादित्यनेन सूत्रेण ।

---

(१) वध्यघातकपक्षे विरोधे इति पा० ६ पु० ।

(२) इति—नास्ति ५ । ६ । पु० । चेत्—इति नास्ति क्वचित् ।

रवस्थानप्रतिषेधात् ज्ञानायौगपद्यवचनेन(१) ज्ञानयोर्युगपदुत्पत्तिरविनश्यतोश्च युगपदवस्थानं प्रतिषिध्यते नहि वध्यघातकविरोधे ज्ञानयोर्युगपदुत्पत्तिरविनश्यतोश्च युगपदवस्थानमस्तीति ॥

परिमाणं मानव्यवहारकारणम् । तच्चतुर्विधम् । अणुमहद्दीर्घं ह्रस्वं चेति । तत्र महद्द्विविधं नित्यम-

---

तदेवाह ज्ञानायौगपद्यवचनेनेति । युगपदुत्पत्तौ हि प्रति शरीरमेकत्वमणुत्वं च मनसो न स्यात् तथाच व्यासङ्गानुपपत्तिः । अविनश्यतोश्च ज्ञानयोरवस्थाने वध्यघातकलक्षणो विरोधो न स्यादिति तदेव प्रतिषिध्यते नान्यत् प्रमाणाभावादित्यर्थः ॥

परिमाणं मानव्यवहारकारणमिति । अत्रापि व्यवहारो ज्ञानशब्दश्च पूर्ववत् । तेन यदेतद्धस्तवितस्त्यादिभेदवदुपलभ्यते तत्परिमाणमिति प्रमाणमुक्तं न चैतत् द्रव्यस्वरूपमेकतराप्रतीतावन्यतरप्रत्ययात् । न चैतत्सामान्यमात्रं सातिशयत्वात् । यदि च घटादिस्वरूपं परिमाणं स्यान्महदानयेत्युक्ते घटमात्रमानयेत् घटमानयेत्युक्ते यत्किञ्चिन्महदानयेत् । तथा च प्रेष्यप्रेषकसम्प्रतिपत्ती विरुद्ध्येयातां घटशब्दात् घटनिश्चयवत् परिमाणनिश्चयोपि स्यात् परिमाणसन्देहवत् घटसन्देहोपि स्यादिति तर्कः । मानव्यवहारकारणं गुणः परिमाणमिति लक्षणं पूर्ववत् । मानव्यवहारस्त्वत्र पलसंख्याविशिष्टव्यवहारविलक्षण एवेति नातिव्याप्तिरिति । एतद्विभजते तच्चतुर्विधमिति । अणु महद्दीर्घं

---

(१) प्रयत्नज्ञानायौगपद्यवचने—पा० ५ पु० ।

नित्यं च । नित्यमाकाशकालदिगात्मसु परममहत्त्वम्(१) अनित्यं त्र्यणुकादावेव । तथा चाण्वपि द्विविधं नित्यमनित्यं च(२) । नित्यं परमाणुमनस्सु तत्पारिमाण्डल्यम् । अनित्यं द्व्यणुक एव । कुवलयामलकबिल्वादिषु महत्स्वपि तत्प्रकर्षभावाभावमपेक्ष्य भाक्तोऽणु-

---

ह्रस्वं चेति भावप्रधानो निर्देशः । तदेतदवान्तरभेदेन व्युत्पादयति तत्रेति । तेषु मध्ये सुप्रसिद्धत्वात्पश्चादुक्तमपि प्रथमं महत्त्वमुक्तं । क्व नित्यमहत्त्वमस्तीत्यत आह नित्यमिति तदेतदेव शास्त्रप्रदेशेषु परममहत्त्वमिति व्यवह्रियते । काष्ठां(३) प्राप्तत्वादित्याह परमेति । द्वितीयां विधामाह अनित्यमिति । त्र्यणुकादावेवेत्यन्त्यावयविपर्यन्तम् एवकारेण द्व्यणुकनित्यद्रव्यव्यवच्छेदः । अणुत्वं विभजते अण्वपीति । नित्यमानित्यं चेत्यपिनानुकृष्यते नित्यं परमाणुमनःसु । अत्र मनसः स्वशब्देनोपात्तत्वात् परमाणुशब्दस्तृणोलपादिन्यायेन चतुर्विधेषु वर्त्तते तच्च पारिमाण्डल्यमित्युच्यत इत्यर्थः । अनित्यं द्व्यणुक एव एवकारस्तु नान्यत्रेत्यवधारणार्थः । कथं तर्हि बिल्वाद्यपेक्षया आमलकाद्यण्विति व्यवहार इत्यत आह कुवलेति । महत्त्वोत्पत्तौ कारणसद्भावेन चाक्षुषत्वान्यथानुपपत्त्या च तत्त्वतो महत्त्वे व्यवस्थिते भाक्तोयं व्यवहारः । भाक्तिश्च प्रकर्षभावाभावः आमलके यः प्रकर्षभावस्तस्याभावः कुवले बिल्वे यः प्रकर्षभावस्तस्याभाव आमलके स खलु द्व्यणुकेपि वर्त्तते इत्युभाभ्यां भज्यते इति भक्तिः तामपेक्ष्य भवतीति भाक्त इत्यर्थः । ननु पर-

---

(१) तदेव गीयते इति अधिकम् ६ पु० ।

(२) नित्यमनित्यं चेति पा० ६ पु० नास्ति ।

(३) काष्ठामिति नास्ति क्वचित् ।

त्वव्यवहारः । दीर्घत्वह्रस्वत्वे चोत्पाद्य(१) महदणुत्वैकार्थसमवेते । समिदिक्षुवंशादिष्वञ्जसा दीर्घेष्वपि तत्प्रकर्ष(२)भावाभावमपेक्ष्य भाक्तो ह्रस्वत्वव्यव-

माणुषु व्यणुकेषु वाणुव्यवहारो महत्त्वाभावकृत एव किं न स्यात् । न स्यात् । द्रव्यत्वेन परिमाणानुमानात् । व्यणुकात् परमाणावपकर्षाच्च । न चाभावस्यापकर्षः सम्भवतीति । न च व्यणुकस्य महत्त्वं कारणाभावात् । प्रत्यक्षत्वप्रसङ्गाच्चेति । एतेनाप्रतीतायां भक्तौ कथं भाक्तो व्यवहार इति निरस्तं प्रकर्षाभावस्य प्रत्यक्षसिद्धत्वात् । परमाणुष्वणुत्वस्यानुमानात् । अन्यायश्चानेकार्थत्वमिति न्यायेन पश्चात् मुख्यत्वभाक्तत्वविवेचनात् स्वर्गादिशब्दवदिति । दीर्घत्वह्रस्वत्वे त्विति । उत्पाद्ये च ते महत्त्वाणुत्वे चेति ताभ्यामेकस्मिन्नर्थे समवेते । यत्रोत्पाद्यं महत्त्वं तत्र दीर्घत्वं यत्रोत्पाद्यमणुत्वं तत्र ह्रस्वत्वमित्यर्थः । एते नित्ये न स्त इति केचित् । तदसत् । यथाहि महत्त्वं प्रकृष्यमाणं परमकाष्ठां प्राप्नोति । तथा दीर्घत्वमपि प्राप्नुयात् यथा चाणुत्वमपकृष्णमाणं परमाणुकाष्ठां प्राप्नोति । तथा ह्रस्वत्वमपि उपपत्तेरुभयत्रापि तुल्यत्वात् । कथं तर्हि दीर्घत्वेत्यादिग्रन्थः । सत्यं नित्यानित्यभेदेन महत्त्वाणुत्ववत् प्रत्येकं दीर्घत्वह्रस्वत्वयोर्द्वैविध्यं सुप्रसिद्धमेकदेशोत्कीर्तनेन स्मारयति दीर्घत्वेति । तथा च परमदीर्घत्वपरमह्रस्वत्वे परममहत्त्वपरमाणुत्वैकार्थसमवेत इति स्मर्तव्यमिति हृदयं । ननु यद्युत्पाद्याणुत्वैकार्थसमवेतं ह्रस्वत्वं तर्हि कथं वंशाद्यपेक्षयेक्ष्वादिषु ह्रस्वत्वव्यवहार इत्याशंक्याह समिदिक्षिवति । अञ्जसा मुख्यतः दीर्घ-

(१) तूत्पाद्य-पा० ५ । ६ पु० ।
(२) तत्कृतप्रकर्षेति पा० ६ पु० ।

हारः । अनित्यं चतुर्विधमपि सङ्ख्यापरिमाणप्रचययोनि । तत्रेश्वरबुद्धिमपेक्ष्योत्पन्ना परमाणुद्व्यणुकेषु बहुत्वसङ्ख्या तैरारब्धे कार्यद्रव्ये त्र्यणुकादिलक्षणे रूपाद्युत्पत्तिसमकालं महत्त्वं दीर्घत्वं च करोति ।

---

त्वोत्पत्तौ कारणोपपत्तेः । वंशे यो दीर्घत्वस्य प्रकर्षभावस्तस्याभाव इक्षौ तमपेक्ष्येक्ष्वादिषु ह्रस्वत्वव्यवहारो भाक्तः स हि मुख्ये ह्रस्वेऽप्यस्तीत्युभाभ्यां भज्यत इति भक्तिः तत्कृतः । तथेक्षौ दीर्घत्वस्य यः प्रकर्षभावस्तस्याभावः समिधि तमपेक्ष्य तत्र ह्रस्वत्वव्यवहारो भाक्त इत्यर्थः । एवं विभागमाश्रयं च निरूप्य कारणं निरूपयति अनित्यमिति । नित्ये कारणचिन्ताविरुद्धेत्यनित्यग्रहणं सङ्क्षेपतः संख्या च परिमाणं च प्रचयश्चेति यथासम्भवं योनिः कारणं यस्य तत्तथोक्तम् । एतत्प्रपञ्चयिष्यन् केवलैव बहुत्वसंख्या यत्र महत्त्वे कारणं तदाह तत्रेति । द्व्यणुकेष्वस्मदादीनामपेक्षाबुद्धेरसम्भवात् तदभावे बहुत्वसंख्यानुत्पादात् कथमेतदित्याशंक्याह ईश्वरेति । ईश्वरबुद्धेः सर्वविषयत्वादेकत्वान्तराण्यप्यालम्बनानि यद्यपि तथापि नियामकं तत्रादृष्टमिति भवत्यपेक्षाबुद्धिः । तामपेक्ष्योत्पन्ना बहुत्वसंख्या परमाणुद्व्यणुकेषु द्वाभ्यां द्वाभ्यां परमाणुभ्यामारब्धानि द्व्यणुकानि परमाणुद्व्यणुकानि परमाणुभिर्द्व्यणुकादिप्रक्रमेणैव कार्यद्रव्यमारभ्यते नान्यथेति नियमज्ञापनार्थं परमाणुद्व्यणुकेष्वित्युक्तम् उपपादितं चैतत् पृथिव्यधिकारे । तैर्द्व्यणुकैरारब्धे कार्यद्रव्ये त्रसरेणौ रूपाद्युत्पत्तिसमकालं संयोगोत्पत्तिसमकालत्वात् संख्योत्पत्तेर्द्रव्योत्पत्तिसमकालत्वाद्वा महत्त्वं दीर्घत्वं च करोति । समवाय्यसमवायिनोः साम्येपि का-

द्विबहुभिर्महद्भिश्चारब्धे(१) कार्यद्रव्ये कारणमहत्त्वान्येव महत्त्वमारभन्ते न बहुत्वम् । समानसंख्यैर्यभेदो निमित्तभेदात् । तच्चाभावो दृष्टं वेति । किं पुनरत्र प्रमाणं परिशेषः । तथाहि । रूपादीनामप्रसङ्ग एव व्यभिचारात् प्रकर्षापकर्षाननुविधानाच्च । रूपस्य व्यभिचारो वायौ । रसस्य तेजसि गन्धस्याबादिषु गुरुत्वस्यानलादौ । स्नेहस्यानंभसि स्पर्शस्य प्रकर्षाननुविधानं न हि स्पर्शप्रकर्षात् परिमाणं प्रकृष्यते । संयोगप्रकर्षाद्वा विभागस्तु कारणे वर्तमान आश्रयं निघ्नन् विरोध्येव । परत्वापरत्वे च परिमाणोत्तरकालमुत्पद्येते तथा वेगोपि शब्दबुद्ध्यादीनामप्रत्यासत्तिरेवेत्यप्रसक्तिः । अनुविधीयमानप्रकर्षतया कारणैकार्थसमवेततया च त्रितयमिह प्रसक्तं । तत्र द्व्यणुकेषु महत्त्वप्रचययोरसम्भवात् संख्यैव परिशिष्यते यथा चाणुपरिमाणं न कारणं तथोक्तं द्रव्य इति । तदयं प्रयोगः त्र्यणुकपरिमाणं बहुत्वसंख्याकार्यं परिमाणप्रचयासम्भवे सति कार्यमहत्त्वात् यत् पुनर्न बहुत्वकार्यं न तदेवं । यथा द्व्यणुकपरिमाणं द्वितूलकपरिमाणं वेति । विपक्षे बाधकं तु कारणानुपपत्तौ कार्यानुत्पत्तिप्रसङ्गः । अस्तु तर्हि बहुत्वमेव सर्वत्र महत्त्वकारणं क्लृप्तत्वात् कृतं महत्त्वैरित्यत आह द्विबहुभिरिति द्वौ च बहवश्चावयवा द्विबहवस्तैर्महद्भिरारब्धे कारणमहत्त्वे च कारणमहत्त्वानि च कारणमहत्त्वानि तान्येव महत्त्वमारभन्ते न बहुत्वं कुतः समानसंख्यैरारब्धेतिशयदर्शनात् कारणमहत्त्वादिति शेषः । अयमाशयः । यत्र द्वाभ्यामप्रचिताभ्यामारब्धद्रव्यं तत्र बहुत्वप्रचययोर-

(१) महद्भिरारब्धे-पा० ५ । ६ पु० ।

श्चारब्धेऽतिशयदर्शनात् । प्रचयश्च तूलपिण्डयोर्वर्त्तमानः पिण्डारम्भकावयवप्रशिथिलसंयोगापेक्षमाण(१) इतरेतरपिण्डावयवसंयोगापेक्षो वा द्वितूलके

---

सत्त्वादेवाकारणत्वम् अन्यत्रावगतशक्तेः सतश्च कारणमहत्त्वस्यैव कारणत्वं तस्याप्यकारणत्वे महत्त्वानुत्पत्तिप्रसङ्गात् । सामर्थ्यावधारणाय तु युक्तिरुक्ता अतिशयदर्शनादिति । न तु समानसंख्यैरारब्धे कारणमहत्त्वेन कार्यमहत्त्वातिशयदर्शनाद्बहुत्वमकारणमेव यतः समानमहत्त्वैरल्पसंख्यैरारब्धमपेक्ष्य संख्यात एवातिशयदर्शनेन संख्याया अपि कारणत्वावधारणादन्यथा तदपेक्षयातिशयो न स्यात् महत्त्वस्याविशेषादिति । तस्मादेकं द्वयं त्रयं वा यथासम्भवमवधृतशक्तिकारणं न तु सम्भवदप्यकारणमिति । प्रचयस्य कारणत्वमाह । प्रचयश्चेति । तूलेत्युपलक्षणं न त्वेतदेव विवक्षितम् । प्रचयो द्रव्यारम्भकः संयोगविशेषः पिण्डयोर्वर्त्तमान इति बहुत्वसंख्या व्युदस्यते । गुणकर्मारम्भे सापेक्ष इत्यपेक्षाकारणमाह पिण्डारम्भकावयवप्रशिथिलसंयोगापेक्ष इति । पिण्डयोरारम्भका ये अवयवास्तेषां ये प्रशिथिलाः संयोगास्तदपेक्षः । इतरेतरपिण्डावयवसंयोगापेक्षो वेति । एकस्य पिण्डस्यावयवैरपरस्य पिण्डस्यावयवानां ये प्रशिथिलाः संयोगादयस्तदपेक्षो वेत्यर्थः । स हि द्वितूलके महत्त्वमारभते । द्वाभ्यां तूलपिण्डाभ्यामारब्धं द्वितूलकं न बहुत्वमहत्त्वे बहुत्वस्य तत्राभावात् । महत्त्वस्य च सतोपि प्रचयापेक्षत्वात् । अन्यथा समाहारगुरुत्वस्य तुल्यतया तूलकजात्यविशेषाच्च मूलभूतानां त्रसरेणूनां

---

(१) संयोगानपेक्षमाण इति पा० ६ पु० ।

महत्त्वमारभते न बहुत्वानि । समानसंख्यापल(१)-परिमाणैरारब्धेऽतिशयदर्शनात् । द्वित्वसंख्या चाण्वोर्वर्तमाना द्व्यणुकेऽणुत्व(२)मारभते । महत्त्ववत् त्र्यणुकादौ कारणबहुत्वमहत्त्वसमानजातीयप्रचयेभ्यो दीर्घत्वस्योत्पत्तिः । अणुत्ववद्द्व्यणुके द्वित्वसंख्यातो ह्रस्वत्वस्योत्पत्तिः(३)। अथ त्र्यणुकादिषु वर्तमानयो(४)र्महत्वदीर्घत्वयोः परस्परतः को विशेषः

---

द्व्यणुकानां वा तुल्यसंख्यतया परिमाणातिशयानुपपत्तिः तदाह समानेति । अतिशयदर्शनात् । प्रचयेनेति शेषः । अत्रापि न महत्त्वमिति केवलस्य महत्त्वस्य प्रतिषेधः । अणुत्वोत्पत्तिमाह द्वित्वसंख्या चेति । अण्वोः परमाण्वोः महत्त्वोत्पत्तौ कारणाभावात् । द्रव्यत्वेन परिमाणस्य च सिद्धत्वात् कार्यगुणस्य कार्यत्वात् । परमाणुपरिमाणस्याकारणत्वात् । अनेकसंख्यायाश्च परिमाणं प्रति कारणत्वावगतेः अन्यस्यासम्भवादित्यभिसन्धिः । इमां दीर्घत्वोत्पत्तिमतिदिशति महत्त्ववदिति । ह्रस्वत्वोत्पत्तिमतिदिशति अणुत्ववदिति । यदि हि महत्त्वाणुत्वाभ्यां ह्रस्वत्वदीर्घत्वे भिन्ने स्यातां तदा तदुत्पत्तिचिन्ताया अवसरो भेद एव तु कुतः तदेवारोहपरिणाहाभ्यां विकल्प्यमानं तथा व्यवहारयतीत्यभिप्रायेण पृच्छति अथेति ।

---

(१) संख्यतूल-पा० ५ पु० ।
(२) द्व्यणुकेष्वणुत्व-पा० ५ पु० ।
(३) स्यात्-इत्यधिकम् ७ पु० ।
(४) त्र्यणुकादिवर्तमानयो-पा० ५ पु० ।

द्व्यणुकेषु चाणुत्वह्रस्वत्वयोरिति । तत्रास्ति महत्त्वदीर्घत्वयोः परस्परतो विशेषः महत्सु दीर्घमानीयतां दीर्घेषु च महदानीयतामिति विशिष्टव्यवहारदर्शनादिति । अणुत्वह्रस्वत्वयोस्तु परस्परतो विशेषस्तद्दर्शिनां प्रत्यक्ष इति । तच्चतुर्विधमपि परिमाणमुत्पाद्यमाश्रयविनाशादेव(१) विनश्यतीति ॥

---

उत्तरं तत्रेति । प्रश्नद्वयमध्ये प्रथमे प्रश्ने उत्तरमाह महत्स्विति । अभेदे निर्द्धारणमनुपपन्नं न हि घटेषु कुम्भ आनीयतामिति सम्भवतीति भावः । आरोहपरिणाहौ च परिमाणभेदावेवेति तथा च सुविहितं विहितमिति द्वितीये प्रश्ने उत्तरं अणुत्वेति । तद्दर्शिनां योगिनामस्माकं तु भाक्तव्यवहारापौनरुक्त्यान्यथानुपपत्तिस्तद्भेदे प्रमाणमिति भावः । एवमुत्पत्तिं निरूप्य विनाशं निरूपयति । एतच्चतुर्विधमिति । उत्पाद्यमिति नित्याद्व्यवच्छिनत्ति आधारविनाशादेव विनाशो न तु मीमांसकवत् सत्यप्याश्रये शरीरादौ परिमाणं निवर्त्तत इति शङ्कितव्यं विनाशे परिमाणान्तरोत्पत्तौ च कारणाभावात् कारणसंख्यापरिमाणप्रचयानां तत्कारणत्वात् । संयोगिद्रव्यैश्च पूर्वद्रव्यावयवसहितैः सति पूर्वद्रव्ये द्रव्यान्तरानारम्भात् । अकारणवर्तिभिश्च तैः परिमाणारम्भेतिप्रसङ्गात् । असमवायिकारणलक्षणायोगाच्चेति ॥

---

( १ ) मुत्पाद्यमाधारविनाशा–पा० १ पु० ।

पृथक्त्वमपोद्धारव्यवहारकारणम्। तत्पुनरेकद्रव्य-

---

पृथक्त्वमपोद्धारव्यवहारकारणमिति । एतस्मादिदं पृथगेतस्मादिदमितरदन्यदर्थान्तरमिति ज्ञानमभिधानं च अपवृज्यापेक्ष्य य उद्धारो निर्द्धारणमपोद्धारः स चासौ व्यवहारश्चेति तस्य निमित्तं पृथक्त्वमिति पूर्ववत् प्रमाणलक्षणे स्यातां तर्कस्तु न स्यात् इतरेतराभावेनैव गतार्थत्वात् । तथाहि यावदुक्तं भवतीदमिदं न भवति तावदुक्तं भवति इदमस्मात् पृथगर्थान्तरमितरत् भिन्नमिति । न पृथगादिशब्दाः पर्याया इत्यनुमन्यामहे न त्वभावार्था इति पञ्चम्याः सम्बन्धानुपपत्तेः । न हि घटात् पटः पृथगिति घटः पटो न भवतीति वाक्यार्थः । प्रातिपदिकार्थमात्र एवोपपदविभक्तिरियमनुशासनबलादिति चेत् । अन्याराादितरर्ते इत्यत्रान्यशब्दस्यार्थपरत्वात् । तथा चान्यशब्दसमानार्थतया नञोऽपि योगे पञ्चमी स्यात् । नञर्थविशिष्टः पृथक्शब्दार्थो न तु नञर्थमात्रमिति चेत् । न । अपटो घट इत्यत्रापि स्यात् । न च पञ्चम्येवात्र निषेधार्था पटो घटादिति न घटः पट इति स्थितेः पृथक्शब्दस्य निरर्थकत्वप्रसङ्गात् । तस्मात् पृथगन्य इत्यादीनां योऽर्थस्तत्पृथक्त्वं धर्मान्तरमास्थेयं । पृथक्शब्दस्याविशिष्टम् इत्यर्थ इति चेत् न । शब्दबुद्धिदण्डाद्यविशिष्टतया पृथक्त्वेऽपि तद्विशिष्टस्य व्योमात्ममैत्रादेर्दर्शनात् । एतेन वैधर्म्यमात्रं पृथक्त्वमिति निरस्तं श्यामाद्रक्तो विधर्म्मा न च पृथगिति दर्शनात् । अस्तु तर्हि गोत्वादिवत् सामान्यविशेषः पृथक्त्वमित्यपि न वाच्यम् जातिसङ्करप्रसङ्गात् । तस्माद्गुण एवेति स्थितम् । न चान्यत्रान्तर्भवति । रूपादीनामवध्यनिरूपत्वात् ।

व्यभिचाराच्च । एवं च सति गुणादौ गौणः पृथगिति व्यवहारो द्रष्टव्यः । भेदश्च गुणयोगः । स एव तर्हि पृथक्त्वमस्त्विति चेत् । न स्वरूपस्यावध्यनपेक्षत्वात् । यदावध्यपेक्षस्तदा पृथग्व्यवहारं करोतीति चेत् न चैतत्कदाप्यवधिमपेक्षते तत्स्वाभाव्ये वा सर्वदाऽपेक्ष्येत इतरेतरभाववैधर्म्ये च प्रागेव निरस्ते इति ॥ एवं व्यवस्थितस्य पृथक्त्वस्य भेदं निरूपयति तत्पुनरिति । पुनःशब्दः परिमाणमनन्तरोक्तं व्यवच्छिनत्ति । नन्वेकमेव पृथक्त्वमस्तु कृतं भेदकल्पनयेति न वाच्यं सामान्यलक्षणापत्तेः । तथाप्यनेकद्रव्यमित्यनुपपन्नं प्रत्येकविश्रान्तैरेव पृथक्त्वैस्तथाव्यवहारोपपत्तेः द्वौ शुक्लावित्यादिव्यवहारवदिति चेत् । न । अन्योन्यावधित्वानवधित्वाभ्यां विरोधेन भेदात् । प्रत्येकविश्रान्ते हि पृथक्त्वे अन्योन्यावधिकेपि चैत्रो मैत्रात् पृथक् मैत्रश्चैत्रात् पृथगिति प्रत्ययात् । न तु चैत्रमैत्रौ मैत्रात् पृथगिति प्रत्ययो यथा देवदत्तादेः । तस्माद्यथा प्रत्येकविश्रान्तैकत्वाभ्यां तथाभूतेन द्वित्वेन वा न द्वित्वव्यवहारः प्रत्येकप्रसङ्गात् किन्तु व्यासज्यवृत्तेर्गुणान्तरादेव तथा व्यासज्यवृत्तिगुणान्तरादेव द्वौ पृथगिति व्यवहार इति स्थितम् । एवं तर्हि द्विपरत्वादयोपि किं न स्युरन्योन्यावधित्वाभावादिति चेत् न । एकपरत्वस्यापि तथाभूतत्वे विरोधाभावेन भेदाभावादतिरिक्तकल्पनानुपपत्तेः । न हि समानदेशस्थयोः संयुक्तसंयोगे विशेषोस्ति । न च तं विना ते भवतः । यत्रास्ति तत्र का गतिः एकपरत्वस्यान्योन्यापेक्षत्वात् द्विपरत्वस्य च तदन्यापेक्षत्वादिति चेत् । न तत्राप्येकस्य परत्वादपरस्य च परतरत्वात् प्रत्येकविश्रान्तिरेव तदनादृत्य द्वे परे इति व्यवहारः । न तु व्यासज्यवृत्तिरेक

मनेकद्रव्यं च । तस्य तु नित्यानित्यत्वनिष्पत्तयः संख्यया व्याख्याताः । एतावांस्तु विशेषः एकत्वादिवदेकपृथक्त्वादिसामान्याभावः संख्यया तु(१) विशिष्यते तद्विशिष्टव्यवहारदर्शनादिति ॥

संयोगः संयुक्तप्रत्ययनिमित्तम् । स च द्रव्यगुण-

---

एव तत्र परत्वगुणः एकस्यातिशयानतिशयानुपपत्तेरिति नित्यत्वादिकमतिदेशेन दर्शयति तस्य त्विति । यथैकत्वसंख्या नित्यद्रव्येषु नित्या अवयविनि कारणगुणप्रक्रमेणोत्पद्यते द्रव्यविनाशाद्विनश्यति तथैकपृथक्त्वमपि यथा द्वित्वादिकमपेक्षाबुद्धेरुत्पद्यते तद्विनाशाद्विनश्यति क्वचिदाश्रयविनाशात् क्वचिदुभाभ्यां तथा द्विपृथक्त्वादिकमपीत्यर्थः । स्यादेतत् । तत् किं द्वित्वत्रित्वादिसामान्यविशेषा अपि तत्र सम्भवयन्ति यद्येवं जातिसङ्करः स्यादित्यत आह एतावानिति । कथं तर्हि द्वे पृथक् त्रीणि पृथगित्यादिव्यवहार इत्यत आह संख्यया त्वेकार्थसमवायिन्या विशिष्यते इति । उपलक्ष्यते यथा शुक्लः पृथगिति । शौक्ल्येन उपपत्तिमाह तद्विशिष्टेति । कारणविशेषात्प्रकर्षनिकर्षलक्षणोवान्तरविशेषस्त्वस्यैव माधुर्यादिवत् स च सामान्यविशेष एव । गुणकर्मणोः समवेतस्य धर्म्मान्तरस्याभावादिति ॥

संयोगः संयुक्तप्रत्ययनिमित्तम् । यद्विशिष्टे द्रव्ये संयुक्तमिदमनेनेति मतिर्भवति स संयोग इति प्रमाणमुक्तम् । कार्यप्रदर्शनेन तर्कमाह स चेति । अवयवसंयोगा द्रव्यहेतवः अग्निसंयोगः पा-

---

(१) संख्यया-पा० पु० ।

कर्महेतुः । द्रव्यारम्भे निरपेक्षस्तथा भवतीति सापे-
क्षेभ्यो निरपेक्षेभ्यश्चेति वचनात् । गुणकर्मारम्भे तु

---

कजानाम् । परिमाणस्य प्रचयाख्यः अवयवकर्मजः संयोगो
निःक्रियावयविसंयोगस्य परत्वापरत्वयोर्दिक्कालपिण्डसंयोगः
बुध्यादीनामात्ममनःसंयोगः । शब्दस्य भेर्याकाशसंयोगः ।
कर्मणो नोदनाभिघाताविति । एतेन यदि संयोगो न स्यात्
द्रव्यगुणकर्म्माणि न स्युः कारणाभावात् भावे वा सर्वदैव
भवेयुः द्रव्यादीनां पूर्वसिद्धानां सर्वदा तुल्यरूपत्वात् । क्षणभङ्ग-
परिणामवादयोरपास्तत्वात् । अदृष्टादिति चेत् न तस्याप्यनु-
ष्ठानसाध्यत्वात् तस्यापि प्रयत्नरूपत्वात् । तस्याप्यात्ममनः-
शरीरेन्द्रियसंयोगसाध्यत्वात् । अदृष्टान्तरमात्रसाध्यत्वे यत्नविधि-
वैयर्थ्यप्रसङ्गादिति तर्को दर्शितः । यथा द्रव्यमारभते तं प्रकार-
माह द्रव्यारम्भे निरपेक्ष इति । द्रव्ये कर्तव्ये तदवयवाः संयो-
गार्थमेव कारणान्तरमपेक्षन्ते सति संयोगे न किञ्चिदित्यनपेक्षः
संयोगः सहकारितया न किंचिदपेक्षत इत्यर्थः । एतेन चरमभा-
विनिमित्तान्तरं नापेक्षत इत्यपि लभ्यते । अत्र सूत्रकारसंमतिमाह
तथा भवतीति । अस्यार्थः । सर्वथानुत्पन्नसंयोगतया संयोगा-
पेक्षेभ्यस्तन्तुभ्यो भविष्यति पट इति यथा प्रत्ययस्तथानुत्पन्न-
संयोगतया सापेक्षेभ्य उत्पन्नसंयोगतया निरपेक्षेभ्यो भवतीति
प्रत्ययः । सर्वथोत्पन्नसंयोगतया निरपेक्षेभ्यो भूत इति प्रत्यय
इत्यपि द्रष्टव्यमिति । एवं सूत्रकारवचनाज्जानीमो द्रव्यारंभे
आत्मलाभकारणातिरिक्तं संयोगस्यापेक्षणीयं नास्तीति गुण-
कर्मारम्भे सापेक्षः । गुणेषु कर्मसु च कर्तव्येषु स्वात्मलाभका-

सापेक्षः । संयुक्तसमवायादग्नेर्वैशेषिकमिति वचनात् । अथ कथं लक्षणः कतिविधश्चेति । अप्राप्तयोः प्राप्तिस्संयोगः स च त्रिविधः(१) अन्यतरकर्मजः उभयकर्मजः संयोगजश्चेति(२) । तत्रान्यतरकर्मजः क्रि-

रणातिरिक्तमप्यपेक्षते यथा पाकजेष्वग्निसंयोग औष्ण्यं न च तेनासौ जन्यते परिमाणे प्रचयः स्वाश्रयावयवप्रशिथिलसंयोगं न च तेनासौ जन्यते परत्वापरत्वयोर्दिक्कालपिण्डसंयोगा अपेक्षाबुद्धिं न च तया ते जन्यन्ते इत्यादि स्वयमूह्यम् । एवं कर्मणि नोदनाभिघातौ स्पर्शं वेगं चापेक्षेते न च ताभ्यां तौ जन्येते इति अपेक्षणीयस्य चरमभावित्वमत्राविवक्षितम् । अत्र सूत्रकारसंमतिमाह संयुक्तसमवायादिति । अस्यार्थः । पार्थिवेन परमाणुना पाक्येन संयुक्तेऽग्नौ समवायादग्नेर्वैशेषिकमौष्ण्यं पाकजानां निमित्तमिति शेषः । तेन स्वानुत्पादकापेक्षत्वात् सापेक्ष इत्युक्तं सूत्रकृता भवतीति । अथ कथं लक्षण इति । किं लक्षणं किं प्रकारमस्य लक्षणमित्यर्थः प्रतीतिः प्रत्येतव्यस्य लक्षणमपि सर्वसाधारणमिति स्वकं तु विशेषलक्षणं किमस्येत्यर्थः । कतिविधश्चेति । कत्यस्य विधाः प्रकारा इत्यर्थः । उत्तरं अप्राप्तयोरिति । प्राप्तिः संश्लेषः । स च समवायोपीत्यत उक्तमप्राप्तयोरिति । समवायस्त्वप्राप्तयोर्न भवत्येव जातः संबद्धश्चेत्येककालत्वात् विद्यमानयोरप्राप्तयोः संश्लेषः संयोगः । समवायस्तु नैवमित्यस्य व्यवच्छेदः द्वितीये प्रश्न उत्तरं स तु त्रिविध इति । पूर्वेनैवमिति

(१) स तु त्रिविधः-पा० ५ पु० ।
(२) संयोगजश्चेति-पा-७ पु० ।

यावता निष्क्रियस्य । यथा स्थाणोः श्येनेन विभूनां च मूर्तैः(१) । उभयकर्मजो(२) विरुद्धदिक्क्रिययोः सन्निपातः । यथा मल्लयोर्मेषयोर्वा । संयोगजस्तूत्पन्नमात्रस्य चिरोत्पन्नस्य वा निष्क्रियस्य कारणसंयोगिभिरकारणैः कारणाकारणसंयोगपूर्वकः कार्याकार्यगतः संयोगः । स चैकस्माद् द्वाभ्यां बहुभ्यश्च भवति ।

---

तद्व्यवच्छेदार्थस्तुशब्दः । तिस्रो विधा दर्शयति अन्यतरेति । अन्यतरकर्मजं लक्षयति तत्रेति । तेषु मध्ये क्रियावता चलता निष्क्रियस्य निश्चलस्य तदभिमुखक्रियारहितस्येति यावत् । उदाहरति । यथा स्थाणोः श्येनेनेति । विभूनां चाकाशकालदिगात्मनां मूर्त्तैः परमाण्वादिभिरन्यतरकर्मज एवं अवयविभिस्तु कारणाकारणसंयोगजात् कार्याकार्यसंयोगादन्योन्यतरकर्मज इति विवेक्तव्यम् । उभयकर्मजं लक्षयति उभयेति । विरुद्धे दिशौ प्राचीप्रतीच्यौ अवाच्युदीच्यौ च दृश्यादृश्ये इति यावत् तयोः क्रिये ययोः तौ विरुद्धदिक्क्रियौ तयोः सन्निपातः अभिघात इत्यर्थः । उदाहरति । यथेति । संयोगजं लक्षयितुं विभजते संयोगजस्त्विति । उत्पन्नमात्रस्यैकश्चिरोत्पन्नस्यापरः । निःक्रियस्येति । संयोगस्यैव केवलस्य कारणत्वमाविष्कर्तुं कारणसंयोगिभिरकारणैः समवायिकारणसंयोगिभिस्तदन्यैः अत एव कारणाकारणसंयोगपूर्वकः कार्याकार्यगतः समवेतासमवेतगत इत्यर्थः । पुनरस्यावान्तरभेदमाह स चेति । चशब्दः पुनरर्थे । तदेतत्सर्वमुदाहरणैः स्पष्टयति एकस्मात्तावदिति । तावच्छ-

---

(१) मूर्तैरिति-पा० ५ पु० ।

(२) उभयकर्मजस्तु-पा० ५ पु० ।

एकस्मात्तावत् तन्तुवीरणसंयोगात् द्वितन्तुकवीरणसंयोगः। द्वाभ्यां तन्त्वाकाशसंयोगाभ्यां द्वितन्त्वाकाशसंयोगः। बहुभ्यश्च तन्तुतुरीसंयोगेभ्य एकपटतुरीसंयोगः। एकस्माच्च द्वयोरुत्पत्तिः। कथम्। यदा पार्थिवाप्ययोरण्वोः संयोगे सत्यन्येन पार्थिवेन पार्थिवस्यान्येनाप्येन(१) चाप्यस्य युगपत्संयोगौ भवतस्तदा ताभ्यां संयोगाभ्यां पार्थिवाप्ये द्व्यणुके(२) युगपदारभ्येते। ततो यस्मिन् काले(३) द्व्यणुकयोः कारणगुणपूर्वक्रमेण(४) रूपाद्युत्पत्तिः तस्मिन्नेव काले इत-

---

रद्ः क्रमे। अत्र तिसृष्वऽपि विधासु तन्तूनां पटं प्रति कारणत्वं वीरणाकाशतुरीणामकारणत्वं समवायितयानेन कारणाकारणसंयोगपूर्वकत्वं संयोगस्य तन्तुसमवेतत्वं तु द्वित्रितन्तुकपटयोरसमवेतत्वं च वीरणाकाशतुरीणां तेन तत्संयोगानां कार्याकार्यगतत्वमिति। एकस्माच्च संयोगात् द्वयोरपि संयोगयोरुत्पत्तिरित्याह एकस्माच्चेति। एतत्प्रश्नपूर्वकं स्पष्टयति। कथमिति पार्थिवाप्ययोरिति। विजातीयत्वेनानारम्भकत्वमभिप्रैति। अण्वोरिति। परमाण्वोः पार्थिवेन पार्थिवस्य आप्येनाप्यस्येत्यारम्भकत्वसूचनं। युगपदिति। संयोगयौगपद्येन द्व्यणुकयोर्युगपदुत्पत्तिं प्रदर्शयितुम्। युगपत्संयोगद्वयोत्पत्तिप्रदर्शनाय तामाह तत इति। इतरस्य पार्थिवद्व्यणुकस्य कारणं पार्थिवः परमाणुर-

---

(१) पार्थिवस्याप्येनेति–पा० ६ पु०।
(२) पार्थिवाप्यैतद्व्यणुके–पा० ६ पु०।
(३) तयोर्यस्मिन् यस्मिन् काले–पा० ६ पु०।
(४) प्रक्रमेण–पा० ६ पु०।

रेतरकारणाकारणगतात् संयोगादितरेतरकार्याकार्य-गतौ संयोगौ युगपदुत्पद्येते । किं कारणम् । कारण-संयोगिना ह्यकारणेन कार्यमवश्यं(१) संयुज्यते इति न्यायः । अतः पार्थिवं द्व्यणुकं कारणसंयोगिनाप्येनाणुना सम्बद्ध्यते आप्यमपि द्व्यणुकं कारणसंयोगिना पार्थिवेनेति(२) । अथ द्व्यणुकयोरितरेतरकारणा-

---

कारणमाप्यः परमाणुः इतरस्याप्यद्व्यणुकस्य कारणमाप्यः परमाणुरकारणं पार्थिवः परमाणुस्तयोर्गतात् समवेतात् इतरस्य पार्थिवपरमाणोः कार्यं पार्थिवद्व्यणुकमकार्यमाप्यः परमाणुरितरस्याप्यपरमाणोः कार्यमाप्यं द्व्यणुकमकार्यं पार्थिवः परमाणुस्तद्गतौ तत्समवेतौ पार्थिवपरमाण्वाप्यद्व्यणुकगत एकः आप्यपरमाणुपार्थिवद्व्यणुकगतोपरः संयोगस्तौ युगपदेककालमुत्पद्येते इत्यर्थः । पृच्छति किं कारणमिति किं प्रमाणमित्यर्थः । उत्तरं कारणेति । अकारणेनेति शेषः । पार्थिवद्व्यणुकमाप्येन परमाणुना आप्यद्व्यणुकं पार्थिवेन परमाणुना संयुज्यते । तदकार्यत्वे सति तत्संयोगिकार्यत्वात् । यद्यदकार्यत्वे सति यत्संयोगिकार्यं तत्तेन संयुज्यते । यथा तुरीसंयुक्ततन्तुकार्यः पटस्तुर्येत्यनुमानमित्यर्थः । यदि तु तेन न संयुज्येत तत्कार्येणापि न संयुज्येत कारणाभावादिति विपक्षबाधकमूहनीयम् । तमेनं न्यायं नैयायिकमर्थं प्रत्यामनन्ति अत इति(३) । उक्ततर्कसिद्धये पृच्छति अथेति । उत्तरं तयोरपीति । ननु तज्जनकेनैव परमाणु-

---

(१) कारणसंयोगाद्धि कार्यमवश्यं–पा० ६ पु० ।

(२) द्व्यणुकं पार्थिवेनेति–पा० ६ पु० ।

(३) न्यायात् ।

कारणसम्बद्धयोः(१) कथं परस्परतः सम्बन्ध इति । तयोरपि संयोगजाभ्यां संयोगाभ्यां संयोग इति । नास्त्यजः संयोगो नित्यपरिमण्डलवत् (२) पृथगनभिधानात्। यथा चतुर्विधं परिमाणमुत्पाद्यमुक्त्वाह ।

---

द्व्यसंयोगेन द्व्यणुकयोरपि संयोगः किं न जन्यते कृतमत्र तज्जन्याभ्यां कार्याकार्यसंयोगाभ्यां प्रत्यासत्तेरपि कारणैकार्थसमवायलक्षणायाः सम्भवात् । न तस्मिन्काले द्व्यणुकस्य द्व्यणुकान्तरकारणसंयोगित्वाभावात् । कारणसंयोगिना चाकार्येण कार्यस्य संयोगजः संयोगः परमाणुनैवेति । एवं तर्हि परमाणोरपि द्व्यणुकेन सह संयोगजस्य संयोगस्यानुपपत्तिः । न हि तस्य कारणसंयोगि द्व्यणुकमिति संभवति । न । कार्यमकार्येन संयुज्यमानं कारणसंयोगि नैवेति नियमादिति । अत्र च दैवादवयवक्रियायामुत्पन्नायां विभागसमकालमवयविनि यदि क्रियोत्पद्यते । तदा संयोगक्रिये सम्भूय संयोगमुत्पादयतः प्रत्येकमन्यत्रावधृतशक्तिकत्वादित्यपि द्रष्टव्यम् । तथाहि । चरणक्रियातो विभागः श्येनावयविनि कर्म ततो विभागेन पूर्वसंयोगनिवृत्तिः अवयविकर्मणा विभागः ततश्चरणस्थाणुसंयोगः श्येनविभागात् पूर्वसंयोगनिवृत्तिः तदनन्तरं चरणस्थाणुसंयोगेन श्येनकर्मणा च स्थाणुश्येनसंयोगः । एवमुभयकर्मजेपि संयोगानुप्रवेशो लक्षणीय इति टीकाकृतः । तदसत् । संयोगो हि विभागमनुत्पाद्य तदविरोधिनं संयोगमुत्पादयति । कर्म

---

(१) कारणयोः सम्बद्धयोरिति-पा० ६ पु० ।

(२) अजः संयोगो नाऽस्ति-पा० ५ पु० । नाजः संयोगोस्ति नित्यपारिमाण्डल्यवत्-पा० १ पु० ।

नित्यं परिमण्डल्यमिति(१) एवमन्यतरकर्मजादिसंयोगमुत्पाद्यमुक्त्वा पृथङ्नित्यं ब्रूयान्न त्वेवमब्रवीत् तस्मान्नास्त्यजः संयोगः। परमाणुभिराकाशादीनां प्रदेशवृत्तिरन्यतरकर्मजः संयोगो विभूनां तु परस्परतः संयोगो

---

तु तमुत्पाद्य तद्विरोधिनं ततो विरोधान्न सम्भूयकारितासम्भव इति त्रैविध्यमेवेति । अस्तु तावदेवं संयोगस्तु संयोगकारणमित्यत्र किं प्रमाणं अन्वयव्यतिरेकौ निःक्रिययोः कार्याकार्ययोः संयोगः कारणाकारणसंयोगमन्तरेण न क्वचिद्दृष्टः तस्मिंश्च सति पटतुर्य्यादौ दृश्यत इति । अजसंयोगमिच्छन्तः केचिद्विभागं न सहन्ते तान्प्रत्याह नाजः संयोगोस्तीति । नित्यपरमाणुवदिति व्यतिरेके दृष्टान्तः । अत्र हेतुः । पृथगनभिधानात् सर्वार्थोपदेशप्रवृत्तेन महर्षिणा प्रतिज्ञातं हि तेन यद्भावरूपं तत्सर्वमभिधास्याम इति । एतद्विवृणोति चतुर्विधमिति । ननु कथमस्य प्रयोगः यथाश्रुते प्रतिज्ञापदव्याघातात् । संयोगं पक्षीकृत्याजत्वप्रतिषेधे त्रिविधमुक्तं प्रतिसिद्धसाधनात् । तदतिरिक्तस्याप्रतीतावाश्रयासिद्धेरित्याशंक्याह परमाणुभिरिति । अयमाशयः । न वयं प्रथमतः संयोगमेव प्रतिषेधामस्तस्याजत्वं वा किन्तु त्रिविधे व्युत्पादिते यश्चतुर्थमप्युपगच्छेत् तं प्रति कोसावजः संयोगः कुत्र वेति पृच्छामः । स यदि ब्रूयात् परमाणुभिराकाशादीनां यः संयोगः सोज इति । तत्रेदमुपतिष्ठते । परमाणुभिरिति । सोन्यतरस्य परमाणोर्यत्कर्म्म तज्ज एव । ननु महति प्राप्तिपूर्विकाप्राप्तिः संयोगो न चाकाशस्य परमाणुभिरप्राप्तिरस्ति व्यापकत्वादत उक्तं प्रदेशवृत्तिरिति । अव्याप्य-

---

(१) पारिमाण्डल्यं–पा० ६ पु० ।

नास्ति युतसिद्ध्यभावात् । सा पुनर्द्वयोरन्यतरस्य वा

---

वृत्तिर्व्युत्पादितश्चायमर्थः । तेन परमाणौ वर्तमाना क्रिया संयुक्तेनाकाशादिप्रदेशेन स्वाश्रयं विभज्यासंयुक्तेन संयुनक्तीति न तत्र लक्षणानुपपत्तिः । प्रदेशश्चोपाधिभेद एव । नचैवमुपाधय एव संयोगतदभावाश्रया इत्युक्तम् । अपि च महति न्यग्रोधे मूलादग्रमग्राच्च मूलमुपगच्छतः कपेः यदि मूलाग्राभ्यामेव संयोगविभागौ न न्यग्रोधे न तदा तावपि अवयवापेक्षयाऽवयविनाविति न्यायेन निरवयवे परमाणावेव संयोगः स्यात् तथा च नोपलभ्येतेत्यनुभवविरोधः । सावयव एवावयवे वर्त्तत इति विचारे निरवयवे न स्यादेवेति द्व्यणुकादिप्रक्रमाभावात् सर्वानुत्पत्तिः । भेर्यां च ताडितायां संयोगस्य नभोव्यापकतया तदनुरोधेन शब्द उत्पद्यमानो नभो व्याप्नुयात् । तथा च सर्व्वत्र तदुपलम्भप्रसङ्ग इत्यादि स्वयमूहनीयम् तस्मादाकाशादयः परमाणुभिः परमाणुक्रियया संयुज्यन्ते विभज्यन्ते च नित्यद्रव्यत्वे सति निःक्रियत्वात् चलद्भिः परमाणुभिर्निश्चलपरमाणुवदिति सिद्धम् । विभूनां परस्परमजःसंयोगो भविष्यति तथाहि आकाशं कालादिना संयुज्यते मूर्त्तसंयोगित्वात् द्रव्यत्वाद्वा शरीरवदिति । न चासौ कर्मजस्तेषां निष्क्रियत्वात् नापि संयोगजस्तेषां निरवयवत्वात । इति यदि ब्रूयात्तत्रेदमुपतिष्ठते । विभूनामिति । विभवः परस्परं न संयुज्यन्ते युतसिद्धिरहितत्वात् । अवयवावयविवदित्यापाततः सत्प्रतिपक्षत्वात् संयोग एव तेषां न सिद्ध्यतीत्यर्थः । संयोगगतकार्यत्वप्रयुक्तेयं युतसिद्धिव्याप्तिरिति चेत् । न संयोगसाधकस्य हेतोर्विभागापादकत्वात् । सोऽप्यापद्यतामिति चेत् । न

पृथग्गतिमत्त्वं पृथगाश्रयाश्रयित्वं चेति । विनाशस्तु सर्वस्य संयोगस्यैकार्थसमवेताद्विभागात् क्वचिदाश्रयविनाशादपि। कथम्। यदा तन्त्वोः सत्यन्यतरतन्त्वार-

---

तस्य संयोगप्रतिद्वन्द्वित्वेन तदजत्वव्याघातात् । अजयोर्विरोधो न भविष्यतीति चेत् न । तथात्वे तल्लक्षणव्याघातात् । अप्राप्तिपूर्विका प्राप्तिः संयोगः प्राप्तिविरोधी गुणो विभागः इति हि ते । गुणलक्षणा प्राप्तिः संयोग इत्यस्तु विभागस्तु लक्षणविरोधापत्तेरेव विभूनां न भविष्यतीति चेत् । न । अयुतसिद्धानां प्राप्तिर्नित्या प्राप्तिरिति वा समवायलक्षणाक्रान्ततया गुणत्वानुपपत्तेः । तथापि गुणत्वे समवायोच्छेदात् ओमिति चेत् । न गुणादीनां निर्गुणत्वेनाप्राप्तत्वप्रसङ्गादिति । तस्मादनुकूलतर्काभावात् प्रतिकूलतर्काभावाच्च विभुसंयोगसाधनमन्यथासिद्धं । व्यापकानुपलब्धिस्तदभावसाधने सत्तर्कतयानन्यथासिद्धेति स्थितम्। अथ केयं युतसिद्धिरित्यत आह । सा पुनरिति । द्वयोः सम्बन्धिनोरन्यतरस्य वा सम्बन्धिनः पृथग्गतिमत्त्वं। विभागहेतुक्रियासम्बन्ध इति यावत् युताश्रयाश्रयित्वं परस्परपरीहारेण पृथगाश्रयाश्रयित्वं चेत्यर्थः । इयं द्वयायुतसिद्धिः संयोगव्यापिका यत्र नास्ति तत्र संयोगोपि नास्तीति सङ्क्षेपः। उभयसाधारणं तु युतसिद्धेर्लक्षणमप्राप्तयोर्विद्यमानतेति । अस्त्येव तर्हि विभूनामियं तत्कथं न संयोगः । अस्त्येव न तूत्तरकाले प्राप्तेः कारणमस्ति विशेषावुपादाय तु चिन्ताव्यापकनिवृत्त्या तन्निवृत्तिसाधनाय। अथ व्यापकनिवृत्त्या अयुतसिद्धत्वेन विभूनां समवाय एव किं न स्यात् । न स्यात् । द्रव्यत्वे सत्यकार्यत्वात् परमाणुवत् । न ह्यकार्य

म्भके अंशौ कर्मोत्पद्यते तेन कर्मणा अंश्वन्तराद्विभागः क्रियते विभागाच्च तन्त्वारम्भकसंयोगविनाशः संयोगविनाशात्तन्तुविनाशस्तद्विनाशे तदाश्रितस्य तन्त्वन्तरसंयोगस्य विनाश इति(१)।

विभागो विभक्तप्रत्ययनिमित्तम्। शब्दविभाग-

---

द्रव्यमकारणे समवैति। आधाराधेयभावानियमप्रसंगादिति। एवमुत्पादं निरूप्य विनाशं निरूपयति। विनाशस्त्विति। सर्वस्य त्रिविधस्यापि ययोः संयोगस्तयोरेव वर्तमानाद्विभागाद्विरोधिगुणादित्यर्थः। तत्किं सर्वत्रैवं नेत्याह क्वचिदिति। कथमित्यादिना स्पष्टयति। संयुक्तद्रव्यमक्रियमेवावयवक्रियाविभागादिन्यायेन यदा विनश्यति तदा तद्विनाशात्तदाश्रितरूपादिवत्तदाश्रितः संयोगोपि विनश्यतीत्यर्थः। अंशुसंयोगविनाशसमकालं तन्त्वन्तरे कर्मचिन्तनात् उभाभ्यामपि भवतीति केचित्। तदसत्। द्रव्यनाशकाले विभागानुपपत्तेः। तथाहि अंशोः संयोगनाशतन्तुकर्मयौगपद्ये यदा अंशुसंयोगनाशात्तंतुनाशः। तदा तन्त्वन्तरे कर्मणा विभागः किमाश्रयो जायतां। न च पूर्वकालसद्भावमात्रेण समवायिकारणत्वं कारणत्वाविरोधेपि समवायित्वविरोधात्। तुल्यकालयोः सम्बन्धात्। न चाश्रयनाशेपि यथा कार्यं क्षणमात्रसम्बद्धमवतिष्ठते तथोत्पत्स्यतेपीति साम्प्रतं विनाशस्य सहेतुकत्वनियमेन तदुपपत्तेः। इह त्वसमवाये समवायिकारणत्वानुपपत्तेरिति॥

विभागो विभक्तप्रत्ययनिमित्तमिति। निमित्तमिति विशेषणम्। प्रत्ययः प्रतीतिः प्रतीयते अनेनेति। शब्दश्चेति प्र-

---

(१) तदाश्रितस्य संयोगस्य विनाशः–पा० ६ पु०।

माणकथनम् । संयोगाभावे विभागव्यवहार इति चेत् न रूप-रसादिषु विभक्तप्रत्ययाभावात् । द्रव्ययोरिति चेत् । अवय-वावयविनोस्तदभावात् । संयोगनाशो विभाग इति चेत् । न । अन्यतराश्रयविनाशात् संयोगविनाशे विभक्तप्रत्ययप्रसङ्गात् । न हि द्वयोः संयुक्तयोरेकतरविनाशेऽन्यस्मिन् विभक्तप्रत्ययः कस्यचित् । न च तत्र संयोगो न विनष्टः । न वा संयोग-विनाशो न प्रतीतः । द्वौ संयोगिनौ विनष्टसंयोगौ विभ-क्तप्रत्ययालम्बनमिति चेत् न प्रमेयाधिक्याभावात् । न हि घट-त्वनिमित्तको घटप्रत्ययस्तदेकत्वानेकत्वेनुविधत्ते शुक्लत्वनिमि-त्तको वा शुक्लप्रत्यय इति । न च विरोधिनं गुणमन्तरेण स-त्याश्रये गुणविनाशकारणमस्ति । कर्मैव संयोगविनाशक-मस्तु । तस्मिन् सति तन्निवृत्तिदर्शनात् । अन्वयव्यतिरेकग-म्यत्वाच्च वस्तुसामर्थ्यस्य न हि गुणान्तरस्यापि गुणविनाश-कत्वेन्यत्प्रमाणमस्तीति चेत्र । न तदनुविधानस्य सन्दिग्धत्वात् न ह्यग्निसंयोगात् तृणादिकं विनश्यदुपलभ्यत इत्यग्निसंयोग एवाहत्य तस्य नाशकः इन्धनविनाशाद्वा वन्हिर्विनश्यतीति स एव तस्य नाशकः किन्तु क्रियाविभागादिन्यायेनावयव-विश्लेषविनाशौ न हि तावन्तरेण द्रव्यान्तरसंयोगान्निमित्त-नाशाद्वा द्रव्यं विनश्यतीत्यतिप्रसङ्गात् । तदिह किं कर्म्मैव वि-रोधि विरोधिगुणोत्पादकं वेति संदिह्यते । तत्रायं निर्णयः संक्षेपतस्तावद्विविधमेव जगति विनाशकारणं विरोधिधर्म्मः वि-नाशश्चेति । तत्रापि विरोधी समानाधिकरण एव विनाशस्तु कारणस्यैवेति नियमः । अन्यथाऽतिप्रसङ्गात् । जातिमात्रेण हि गुणान्तरविरोधित्वे तज्जन्मनि वध्यजातीयं कचिन्न वि-रुध्येत । एवमुदासीनविनाशोपि यदि विनाशकः स्यात् सर्वत्र

सर्वं विनश्येत एवंसत्यङ्गुल्यामुत्पन्नेन कर्मणा अङ्गुलीतरुसंयोगनाशेपि हस्ततरुशरीरतरुसंयोगनाशो न स्यात् । हस्तादीनां निःक्रियत्वात् । अङ्गुलीकर्मणश्च व्यधिकरणत्वात् । न चाङ्गुलीतरुसंयोगनाशाद्धस्तादितरुसंयोगनाशो भविष्यति इति युक्तम् । कर्मजं शरीरादिसंयोगं प्रत्यङ्गुलीतरुसंयोगस्याकारणत्वात् । अकारणनाशस्याविनाशकत्वात्तस्मात् कर्मजनितविभागजविभागपरम्परया निःक्रियसंयोगपरम्परा विनाश्यत इति अनिच्छन्नपि गले पादुकयाङ्गीकारयितव्य इति तमिममनुग्राहकं तर्कं लक्षणे अनुपदमेव सूचयिष्यति । व्यधिकरणमपि कर्म्मैव विनाशकमस्तु । न चातिप्रसङ्गः । आश्रयाश्रितपरम्परासंयोगस्यैव विनाश्यत्वात् । न । विरोधिनः समानाधिकरणस्यैव विनाशकत्वमित्यत्रासति बाधके सङ्कोचानुपपत्तेरिति भासर्वज्ञमतनिरासः ॥ कार्येण कारणानुमानमाह शब्दविभागहेतुश्च । न केवलमनुभूयते कार्येणानुमीयते चेति चार्थः । वीणावेण्वादिवद्दवदहनदह्यमानस्फुटद्वेणुटात्कारादयोपि वाय्वभिघातादेव जायन्ते किमत्र गुणान्तरकल्पनयेति चेत् । न एकस्मिन् विदले चरणाविष्टब्धे विदलान्तरे च बलवता नुद्यमाने अभिघातासम्भवात् । न हि तत्र दलेन दलमभिहन्यते विलोमगमनत्वात् । नापि दलेन वायुरभिहन्यते नुद्यमानत्वात् । नापि वायुना दलं वायोः प्रथमतस्तत्र स्तिमितत्वात् । न च नुद्यमानेन द्रव्यान्तरमभिहन्यते निबिडावयवस्य द्रव्यान्तरस्याभावात् । भवितव्यं च कार्यस्य वस्तुनोऽसमवायिकारणेन । न च संयोगनाश एवासौ भावस्य तत्त्वात् । न च कर्म्मैव तदस्तु प्रत्यासत्त्यभावेन तल्लक्षणानुपपत्तेरिति । तदयं प्रमाणार्थः । विवादाध्यासितः शब्दसन्तानः संयोगाद्यतिरिक्ता-

**हेतुश्च । प्राप्तिपूर्विकाऽप्राप्तिर्विभागः । स च त्रिविधः । अन्यतरकर्मज उभयकर्मजो विभागजश्च विभाग इति । तत्रान्यतरकर्मजोभयकर्मजौ(१)**

समवायिकारणप्रभवः । संयोगाद्यनुपपत्तौ सत्यामुपजायमानत्वात् अवयवविरूपवत् । यद्वा यदेवं न भवति तत्संयोगाद्यनुपपत्तौ नोत्पद्यते । यथा संयोगजः शब्द इति व्यतिरेकः । विभागकार्यत्वं चानन्तरमेव वक्ष्यति । लक्षणमाह प्राप्तिपूर्विकेति । न प्राप्तिः अप्राप्तिः प्राप्तिविरोधी गुण इत्यर्थः । अथ प्राप्त्या संयोगेन सह किं देशे कृतः कालकृतः स्वरूपकृतो वा अस्य विरोधः । सर्वं चैतदनुपपन्नमत उक्तं प्राप्तिपूर्विकेति । तथा च प्राप्तेर्वध्यताविभागस्य घातकत्वं दर्शितं तेन संयोगविघातको गुणो विभाग इति संक्षेपः । तथा चाजसंयोगवदजो विभागो नास्तीति सूचितम् । उपपादितं चैतदिति । एवं सति संयोगविभागयोरनन्यथासिद्धपौर्वापर्यनियमलक्षणः कार्यकारणभावोप्यस्तु न नः कश्चिद्दर्शनविरोधः असति संयोगे कस्य विरोधी विभागः स्यादिति विरुद्धस्वभावतानिर्वाहप्रयुक्तोयं पूर्वापरभावो न निरुपाधिरिति चेत् कटिः शृणोतु विरुद्धस्वभावता हि स्वरूपमेव विभागस्य तथाच स्वरूपलाभाय अपेक्षणीयं न कारणमिति सुष्ठ्ववसितं विनाश्यविनाशकयोरपि कार्यकारणभावः स्यादिति चेत् । स्यात् । न हि पौर्वापर्यनियमः कार्यकारणभाव इति हातुमुत्सहामह इति । कारणकृतमवान्तरभेदमाह स चेति । चः समुच्चये संयोगवत् सोपि त्रिविध इत्यर्थः । तदेतद्विशदयति अन्यतरेति । अत्र विधाद्वयमतिदेशेन व्याचष्टे तत्रेति । यथा संयोग उपसर्पणक्रि-

(१) अन्यतरकर्मज उभयकर्मजश्च-पा० ५ पु० ।

संयोगवत्। विभागजस्तु द्विविधः कारणविभागात्(१) कारणाकारणविभागाच्च । तत्र(२) कारणविभागात् तावत्कार्याविष्टे कारणे कर्मोत्पन्नं यदा तस्या(३)वयवान्तराद्विभागं करोति न तदाकाशादिदेशात्(४) यदा त्वाकाशादिदेशाद्विभागं करोति न तदावयवान्तरा-

---

यावता निःक्रियस्यान्यतरकर्मजः तथा विभागोऽप्यपसर्पणक्रियावता निःक्रियस्यान्यतरकर्मजः । यथा स्थाणोः श्येनेनेत्युदाहरणम् यथा विरुद्धदिक्क्रिययोः सन्निपातः संयोग उभयकर्मजस्तथाऽपसर्पणक्रियावतोर्विभाग उभयकर्मजः । यथा मल्लयोर्मेषयोर्वेति । तदेवोदाहरणमित्यर्थः । तृतीयां विधामाह । विभागजस्त्विति । तु शब्देन संयोगाद्व्यवच्छिनत्ति । संयोगजः संयोगः कारणाकारणसंयोगपूर्वक एकविध एव । विभागजविभागस्तु कारणमात्रविभागपूर्वकः कारणाकारणविभागपूर्वकश्चेति द्विविध इत्यर्थः । यथा चैतत्तथा वक्ष्यामः । अत्र प्रथमां विधां व्युत्पादयति । कारणेति । कार्याविष्टे कार्यव्याप्ते । अत्रावयवान्तरादित्यारम्भकं द्रव्यम् आकाशादिदेशादित्यनारम्भकद्रव्यमवधिमभिप्रैति । आरम्भकसंयोगाश्रयश्च द्रव्यमारम्भकं तद्विपरीतमनारम्भकं द्रव्यम् । यद्यपि यदा तदेत्याह तथापि यत्तदिति फलतीति तथैव प्रत्येतव्यं न हि यदा करोत्येकं तदा अपरं न करोत्यन्यदा करोतीत्यभिप्रेतं सम्भवति वा विभागे कर्त्तव्ये कर्मणोऽपेक्षणीयान्तराभावात् प्रतिबन्धानुपपत्तेः । तदयमर्थः । यत्कर्म द्रव्यारम्भकसंयोगविरोधिनं विभागमारभते न तत्कर्म

---

(१) वियोगात्—पा० ६ पु० । (२) तत्रेति नास्ति ५ पु० ।
(३) तस्येति नास्ति ५ पु० । (४) विभागं करोति—इत्यधिकं ५ पु० ।

द्रव्यारम्भकसंयोगविरोधिनं यस्त्वेवं न तदविरोधिनामिति । विकसत्कमलकुड्मलदलादौ तथा दर्शनाच्चैतदवधारणीयं कार्यविपर्ययात् भवितव्यं कारणविरोधेन । न हि कार्यं विरुद्धमविरुद्धजातीयं च कारणमिति सम्भवति तदिह कारणे वर्तमानं कर्म यदि द्रव्यारम्भकसंयोगाविरोधिनं विभागमारभते तदा तद्विरोधिनं न जनयेत् । जनयति च तत् । तेन तदविरोधिनं न जनयतीत्यवसीयते । न च वाच्यं द्रव्यारम्भकसंयोगविरोधितदविरोधिविभागजनकतया कर्मवैचित्र्यं किमस्तु किं वोभयानुभयविभागजनकतयेति सन्दिह्यत इति कार्यविरोधस्य प्रत्यक्षसिद्धत्वात् । उभयजनकत्वे च सन्देहात् । सन्दिग्धमपहाय निश्चितमुपादाय चान्वयव्यतिरेकाभ्यां कार्यकारणभावावधारणात् । अन्यथा शङ्कापिशाचीप्रसरे सर्वत्र तदवधारणानुपपत्तेः । नन्वेवं सति संयोगेऽप्येष न्यायः किं न स्यात् तत्रापि यत्कर्म द्रव्यानारम्भकसंयोगारम्भकं न तत् द्रव्यजनकसंयोगजनकं यथा विकसितकमलदलसंमीलनकर्म तथा चात्रापि कारणसंयोगपूर्वकाः कारणाकारणसंयोगाः कल्पनीया इति । न । संयोगस्य स्वरूपतो विरोधाभावात् । अनारम्भकद्रव्यसमवायाद्धि संयोगो द्रव्यानारम्भको न तु स्वरूपतः । अनारम्भकं च द्रव्यमारब्धद्रव्यमन्त्यावयवीति विजातीयमिति त्रिविधम् । न चैवंभूते वर्तमानं कर्मैवंभूतेनैव अनेवंभूतेनैव वा संयोगमारभते नान्यादृशेनेति नियमोऽस्ति । पृथिव्यां वर्तमानेन कर्मणा पृथिव्यन्तरवत् पाथस्यपि संयोगजननात् । स्थाणुवृत्तिना कर्मणा स्थाण्वन्तरवत् तदवयवेनापि संयोगजननात् । कमलदलसमवेतेन कर्मणा दलान्तरवदाकाशादिनापि संयोगजननात् । तस्मात् कार्ययोरविरोधादत्र कारणविरोधो नावकल्प्यत इति

दिति स्थितिः । अतोऽवयवकर्मावयवान्तरादेव वि- भागमारभते ततो(१) विभागाच्च द्रव्यारम्भक- संयोगविनाशः तस्मिन् विनष्टे कारणाभावात् कार्याभाव इत्यवयविविनाशः तदा कारणयोर्वर्त्त- मानो विभागः कार्यविनाशविशिष्टं कालं स्व-

न नियमसिद्धिः । विभागे तु स्वभावविरोधात् कारणस्य भेदसिद्धिरिति युक्तमुत्पश्यामः । सिद्धायां च व्याप्तौ किं स्यादत आह अत इति । अवयवकर्म कर्मविशेषः अवयवान्तरा- देव विभागं द्रव्यारम्भकसंयोगविरोधिनमेवारभते न तदविरो- धिनमित्येवकारार्थः ततः किमत आह विभागाच्चेति । तस्मा- द्विशिष्टादिति चकारार्थः । एवं कर्म्मविशेषाद्विभागविशेषस्ततो द्रव्यारम्भकसंयोगविनाशस्तस्मादवयविनाश इत्यस्तु विभागज- विभागस्य तु नाद्यापि वार्त्तेत्यत आह तदेति । अथोत्पन्नमात्र एव कारणयोर्वर्त्तमानो विभागः कार्यसंयुक्तादाकाशादिदेशाद्वि- भागं नारभत इत्यत आह कार्यविनाशेति । अयमभिसन्धिः । वि- भागेन हि विभागे कर्तव्ये अवश्यं किंचिदपेक्षणीयम् । अन्यथान- पेक्ष्यविभागकारणत्वेन कर्मत्वापत्तेः । न चाश्रयमेवापेक्षिष्यत इति युक्तं कर्मसमानत्वात् । नापि कर्मैव तस्यापेक्षणीयव्यभिचारात् । उत्तरसंयोगान्निवृत्तेपि हि अवयवकर्मणि चतुर्थपञ्चमादिविभागो- त्पत्तेरविरोधात् तस्मात् कार्यविनाशविशिष्टः कालः स्वतन्त्रो वा अवयवविभागस्यापेक्षणीयः स्वातंत्र्यमप्यवयवस्य कार्य- विनाशाविशिष्टत्वमेव । ततो विवक्षावैचित्र्यमात्रेणायं विकल्पः । केचित्तु कार्यशब्देनात्र द्रव्यारम्भकः संयोगोऽभिसंहितः । तथा च

(१) तत इति नास्ति ६ पु० ।

**तन्त्रं(१) वावयवमपेक्ष्य सक्रियस्यैवावयवस्य कार्य-संयुक्ता(२)दाकाशादिदेशाद्विभागमारभते न निष्क्रियस्य कारणाभावादुत्तरसंयोगानुत्पत्तावनुपभोग्यत्व-**

द्रव्यारम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य स्वतन्त्रं वावयवमिति द्रव्यविनाशविशिष्टं वाऽवयवमपेक्ष्येति व्याचक्षते तदसत् । प्रतिबन्धकाभावो ह्यपेक्षते । न च संयोगः समानाश्रयोऽसमानाश्रयो वा विभागोत्पत्तिं प्रतिबध्नाति । तथात्वे तद्वयत्वानुपपत्तेः द्रव्यं तु तथाभूतविभागोत्पत्तिप्रतिबन्धकं स्यात् । न हि द्रव्यारम्भकसंयोगविरोधिविभागवानवयवः सत्येव द्रव्ये तत्संयोगोपलक्षितादाकाशादिदेशाद्विभज्यत इति सम्भवति सति द्रव्ये धारणाकर्षणोपपत्तौ द्रव्यारम्भकसंयोगाविनाशात् तद्विनाशे वा धारणाकर्षणानुपपत्तौ द्रव्यविनाशात् । तस्मात् द्रव्यमेव तथाभुतविभागोत्पत्तिप्रतिबन्धकमिति तद्विनाश एवापेक्षणीयः । तर्हि प्रथमविभागोत्पत्तिमपि द्रव्यं किं न प्रतिरुणद्धीति चेत् । न तत्प्रतिरोधे सर्वत्र प्रतिरोधापत्तेः । तस्मात् कर्मणा विभागे कर्त्तव्ये न कश्चित् प्रतिमल्ल(३)स्तद्विशेषात्तु विभागविशेष इत्येव रमणीयमिति सक्रियस्यैवावयवस्येत्युक्तम् । अथ कारणाकारणविभागपूर्वकविभागपरंपरा निःक्रियस्यैवेति किं न स्यादित्यत आह न निःक्रियस्येति । कुतः कारणाभावात् क्रियानिवृत्तेरिति विशेषः । उत्तरसंयोगो हि क्रियानिवृत्तेः कारणं स च विभागजविभागात्पूर्वसंयोगनिवृत्तौ सत्यां भवेत् न हि पूर्वस्मिन् संयोगे सत्येवोत्तरसंयोगोत्पत्ति-

(१) कालमपेक्ष्य स्वतंत्रत्वादिति-पा० ६ पु० ।

(२) अवयवकार्यसंयुक्ता-पा० ५ पु० ।

(३) प्रतिबन्ध इत्यर्थः ।

प्रसङ्गः । न तु(१) तदवयवकर्माकाशादिदेशाद्विभागं करोति(२) तदारम्भकालातीतत्वात्(३) । प्रदेशान्तरसंयोगन्तु करोत्येव अकृतसंयोगस्य कर्मणः कालात्ययाभावादिति । कारणाकारणविभागादपि । कथम् ।

रिति भावः । यदि च पूर्वमेव क्रिया निवर्त्तेत कारणाभावादुत्तरसंयोगानुत्पत्तौ कर्मणोऽनुपभोग्यत्वमपुरुषार्थत्वं प्रसज्येतेत्याह उत्तरेति । कारणाभावादित्याद्येकवाक्यतया उत्तरसंयोगप्रयोजनादिक्रियेति सुप्रसिद्धम् । यद्येवमेतावन्तं कालमनुवर्तेत एव कर्म । तर्हि तदेवोत्तरं विभागमारभतां क्लृप्तशक्तिकत्वात् । कृतं विभागेन कल्पनीयशक्तिकेनेत्यत आह नहीति । कुतः तदारम्भककालातीतत्वात् । कर्मणो हि तदारम्भकाल उत्पत्तेरनन्तरं निरपेक्षत्वात् । सहकार्यपेक्षया हि कारणानि विलम्बते अन्यथातिप्रसङ्गात् । सोयमनपेक्षस्यापि कालातिक्रमोऽकारणत्वे पर्यवस्यतीत्यर्थः । नन्वेवमपि उत्तरसंयोगमपि न कुर्यादनपेक्षत्वाविशेषादित्यत आह प्रदेशान्तरसंयोग इति । उत्तरसंयोगे कर्तव्ये पूर्वसंयोगो ऽस्य प्रतिबन्धकः न हि क्रिया प्राप्तापरित्यागेनाप्राप्तप्राप्तये सम्भवति । ततस्तदभावकाल एव संयोगारम्भकालः स च नातीत इत्यतस्तमारभत एवेत्यर्थः । इति शब्दकारणमात्रविभागजविभागव्युत्पादनसमाप्तौ कारणाकारणविभागपूर्वकं विभागं व्युत्पादयति । कारणाकारणेति । अवयवान्तराद्विभागमकुर्वदिति द्रव्यारम्भकसंयोगविरोधिविभागजननस्वाभाव्यव्यवच्छेदः यां दिशमित्यपेक्षाका-

(१) नहीति-पा० ५ पु० ।
(२) विभागमारभते-पा-५ पु० ।
(३) आरम्भकरूपकालातीतत्वात्-पा० ७ पु० ।

यदा हस्ते कर्मोत्पन्नमवयवान्तराद्विभागमकुर्वदा-काशादिदेशेभ्यो विभागानारभ्य(१) प्रदेशान्तरे संयोगानारभते तदा ते कारणाकारणविभागाः कर्म यां दिशं प्रति कार्यारम्भाभिमुखं तामपेक्ष्य कार्याकार्यविभागानारभन्ते तदनन्तरं कारणाकारणसंयोगाश्च(२) कार्याकार्यसंयोगानिति । यदि कारणविभागानन्तरं कार्यविभागोत्पत्तिः कारणसंयोगानन्तरं कार्यसंयोगोत्पत्तिः(३) । नन्वेवमवयवावयविनोर्युतसिद्धिदोषप्रसङ्गः(४) इति । न । युतसिद्ध्यपरिज्ञानात् ।

---

रणमुक्तम् । ननु कारणवर्त्तिना कर्मणोत्तरसंयोगे कृते कारणाकारणविभागाः सकर्मणो निवर्त्तन्तां कार्याकार्यविभागास्तु कुतो निवर्त्तिष्यन्त इत्याशङ्क्याह तदनन्तरमिति । संयोगजसंयोगेभ्यस्तेभ्यः विभागजविभागाः निवर्त्तिष्यन्त इत्यर्थः । तदेतदनूद्य देशयति । यदीति । यद्येवमवयवे चलत्यपि विभज्यमानेपि संयुज्यमानेप्यवयवी न चलेन्न विभज्येत न संयुज्येत तर्हि स्वावयवेभ्यो युतासिद्धिः स्यात् । चलाचलत्व-विभक्ताविभक्तत्वसंयुक्तासंयुक्तत्वानां युतसिद्धिव्याप्तत्वात् । वस्त्रोदकादौ तथा दर्शनात् । तथा च स समवायो व्याहन्येत तल्लक्षणानुपपत्तेरिति भावः । परिहरति नेति । अयमभिप्रायः ।

(१) आकाशादिदेशाद्विभागमारभ्य–पा० ५ पु० ।

(२) संयोगाश्च–पा० ७ पु० ।

(३) कारणाकारणविभागानन्तरं कार्याकार्यविभागोत्पत्तिः कारणाकारणसंयोगानन्तरं कार्याकार्यसंयोगोत्पत्तिः–पा० ५ पु० ।

(४) युतसिद्धिप्रसङ्गः–पा० ५ पु० ।

**सा पुनर्द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वमियन्तु(१) नित्यानामनित्यानान्तु युतेष्वाश्रयेषु समवायो युतसि-**

केयं युतसिद्धिर्या आपादयितुमिष्टा न तावच्चलाचलत्वादिकमेव तेनैव तदापादनानुपपत्तेः अस्यार्थस्येष्टत्वाच्च । नाप्यवयवाव-यविनोर्मिथो विभक्तित्वमापाद्यतेऽसंयोगित्वात् । नापि संयो-गित्वमापादनीयम् अप्राप्तेरभावादप्राप्तौ सत्यां हि संयोगावका-शोऽन्यथा तत्त्वानुपपत्तेः। नाप्यसमवाय एव युतसिद्धिः। गुणा-दावपि समवायोच्छेदप्रसङ्गात् । एवमस्तु न नः किञ्चिद-निष्टं प्रत्युताभिमतमेवेदमिति चेत् । न । समवायासिद्धौ त-न्निषेधानुपपत्तेः न हि निषेध्यसिद्धिमन्तरेण निषेधकं प्रमाण-मात्मानमासादयति तस्माद्युतसिद्धिमपरिजानन्नेव शब्दप्रसि-द्धिमात्रेण परो धन्धयतीति । अथ भवतः का युतसिद्धिरभि-प्रेता तन्निरुक्तिमन्तरेण भवानप्ययुतसिद्धानामित्यादिकमर्थशू-न्यं शब्दमेव केवलमारचयतीत्यत आह सा पुनरिति । द्वयोः परमाण्वोरन्यतरस्य वा व्योमाद्यपेक्षया मूर्त्तस्य पृथग्गतिम-त्त्वम् । नन्वियं युतसिद्धिरस्त्येवावयवावयविनोरत आह इतीयं नित्यानाम्। नित्यानामेवेयं युतसिद्धिरसमवायसहचारिणी नित्या-नां तेषां सत्यप्येवंभूतत्वे स्वाभाविकस्याधार्याधारभावस्य प्र-त्यक्षसिद्धत्वेनाशक्यपरिहारत्वादित्यर्थः । अथानित्यानां के-त्याह । अनित्यानां त्विति । परस्परपरिहारेण द्रव्यादीनां यु-तेषु पृथग्भूतेष्वाश्रयेषु समवायो युतसिद्धिरित्यर्थः । नन्वेवमयु-तसिद्धानामपृथगाश्रयसमवेतानामित्यर्थः स्यात्तथा च समवाये-नैव समवायो लक्षणीयः समवायाभावेन वेति। पूर्वस्मिन्नात्मा-

(१) इतीयं युतसिद्धिः–पा० ५ । ६ पु० ।

द्धिरिति । त्वगिन्द्रियशरीरयोः पृथग्गतिमत्त्वं नास्ति युतेष्वाश्रयेषु समवायोस्तीति परस्परेण संयोगः सिद्धः(१) । अण्वाकाशयोस्त्वाश्रयान्तरा(२)भावेऽप्यन्यतरस्य पृथग्गतिमत्त्वात् संयोगविभागौ सिद्धौ । तन्तुपटयोरनित्ययोराश्रयान्तराभावात्(३) परस्परतः संयोगविभागाभाव इति । दिगादीनान्तु पृथग्गति-

---

श्रयो दोष उत्तरस्मिन् परस्पराश्रयदोष इति । न । एतयोर्लक्षणयोर्व्यापकोपलक्षणत्वात् । अप्राप्तयोर्विद्यमानता हि युतसिद्धिरनयोर्व्यापिका सैव ताभ्यामुपलक्ष्यत इति न किञ्चिदनुपपन्नम् । अथानित्यानामपि पृथग्गतिमत्त्वमेव युतसिद्धिः किं न स्यात् किमुभयोपन्यासस्य प्रयोजनमेकेनाप्युपलक्षणासिद्धिरित्यत आह त्वगिन्द्रियेति । पृथग्गतिमत्त्वं मिथो विभागहेतुक्रियायोगो नास्ति युतेष्वाश्रयेषु समवायस्त्वस्ति । तेनानयोर्युतसिद्धिर्द्रव्यतया मिथः संयोगः सिद्धः । अयमेव तर्हि युतसिद्धेरुपलक्षणमस्तु कृतं प्रथमेनेत्यत आह अत एवाकाशयोस्त्विति । प्रयोजनमुक्त्वा द्वितीयस्य व्यतिरेकोदाहरणमाह । तन्तुपटयोरिति । प्रथमस्याह दिगादीनामिति । न च चलाचलत्वादिनावयवावयविनोर्युतेष्वाश्रयेषु समवाय आपादयितुं शक्यते आश्रयान्तरस्य प्रत्यक्षबाधितत्वादिति तात्पर्यम् । एवं विभागस्योत्पत्तिं व्युत्पाद्य विनाशं व्युत्पादयति विनाशस्त्विति । सर्वस्य त्रिविधस्यापि उत्तरसंयोगस्या-

---

(१) संयोगसिद्धिः—पा० ५, युतसिद्धिः ६ पु० ।
(२) अण्वाकाशयोराश्रया—पा० ५ पु० ।
(३) पृथगाश्रयान्तराभावात्—पा० ५ पु० ।

सत्त्वाभावादिति(१) परस्परेण संयोगविभागाभाव इति(२)। विनाशस्तु सर्वस्य विभागस्य क्षणिकत्वाद् उत्तरसंयोगावधिसद्भावात्(३) क्षणिक इति। न तु संयोगवद्ययोरेव विभागस्तयोरेव संयोगाद्विनाशो भवति। कस्मात्(४) संयुक्तप्रत्ययवद्विभक्तप्रत्ययानुवृत्त्यभावात् तस्मादुत्तरसंयोगावधिसद्भावात् क्षणिक इति। क्वचिच्चाश्रयविनाशादेव विनश्यतीति(५)।

वधेः पर्यन्तस्य सद्भावादुत्पादादिति कारको हेतुरुक्तः। ज्ञापकमाह क्षणिकत्वादिति। आशुतरविनाशित्वात् उत्तरसंयोगावधेराशुतरविनाशस्य प्रत्यक्षसिद्धत्वादित्यर्थः। एतत्तर्केणोपपादयति न तु संयोगवदिति। विभागाधारयोरेव द्रव्ययोः पुनः संयोगेन विभागविनाशे तस्य चिरकालावस्थायित्वमापद्येतेत्यर्थः। ततः किं न ह्येवं सति नः किञ्चिदनिष्टं प्रसज्यत इत्यत आह संयुक्तप्रत्ययवदिति। अयमाशयः। संयोगस्तावच्चिरकालमनुवर्त्तते प्रत्यभिज्ञानस्यानन्यथासिद्धत्वात् न हि यस्य कस्यचित् विभागादेव संयोगो विनश्यति अवयवसंयोगविनाशे द्रव्यानुत्पादप्रसङ्गात् नोदनाद्यनुपपत्तेश्च। तस्मात् ययोरेव संयोगस्तयोरेव विभागात् सत्याश्रये तस्य विनाश इति स्थितिः। तथा चान्तरा विनाशकारणाभावादुत्पादकारणानुपपत्तेस्तत्कार्यस्य च दर्शनात् प्रत्यभिज्ञानमनन्यथा-

(१) गतिमत्त्वं नास्तीति–पा० ५ पु०।
(२) इति–नास्ति ५ पु०।
(३) क्षणिकत्वादुत्तरसंयोगस्यावधेः सद्भावात्–पा० ६। ७ पु०।
(४) कस्मात्—नास्ति ५ पु०।
(५) क्वचिदाश्रयविनाशादपि–पा० ५ पु०।

**कथम् । यदा द्वितन्तुककारणावयवे अंशौ(१) कर्मो-त्पन्नमंश्वन्तराद्विभागमारभते(२) तदैव तन्त्व-न्तरेऽपि कर्मोत्पद्यते विभागाच्च तन्त्वारम्भकसंयो-गविनाशः । तन्तुकर्मणा(३) तन्त्वन्तराद्विभागः क्रियते इत्येकः कालः । ततो यस्मिन्नेव काले**

---

सिद्धम् । विभागस्य तु प्रत्ययानुवृत्तिरेव नास्ति सत्यपि चाबाधि-तत्वाद्भाक्ती । कार्यस्य हि कर्त्तव्यपुरुषार्थापेक्षयोत्पादोऽवस्था-नं च, कृतयावत्कर्त्तव्यस्य च निवृत्तिरिति स्वभावः । न हि कृतयावत्कर्त्तव्यं कार्यमवतिष्ठते चेति सम्भवति । का-र्यं च विभागस्योत्तरविभागशब्दौ पूर्वपूर्वसंयोगनिवृत्तिश्चेसेता-वदेव । न ह्येतदतिरिक्तमस्य युगान्तरेऽपि कर्त्तव्यमस्ति त-च्चानेन सर्वं कृतं तस्मान्निवर्तितव्यमस्यावशिष्यते न चाहेतुका निवृत्तिः स्थैर्यसिद्धान्ते । न च कर्मैवास्य निवर्त्तकमुत्तरविभागा-नुत्पत्तिप्रसङ्गात् तस्मादुत्तरसंयोगादेवास्य विनाशः । न ह्युत्तरसं-योगे सति संयुक्तप्रत्ययवद्विभक्तप्रत्ययोऽनुवर्तते । अनुवर्तते चेत् न संयोगाभावनिबन्धनो बाधकात् । बाधकश्च विवा-दाध्यासितो विभाग उत्तरसंयोगजातः तावतैव कृतकर्त्तव्य-त्वात् कर्मवदिति । कृतकर्त्तव्यस्याप्यवस्थाने प्रायणाद्यनुप-पत्तिप्रसङ्ग इति । एवम् साधारणं विनाशकारणमुक्त्वाऽसाधार-णमाह क्वचिदिति । एतत् कथमित्यादिना व्युत्पादयति यदेति । द्वितन्तुकस्य कारणं तन्तुस्तस्यावयवांशुः तस्मिन् अवयवाव-यवविभागसमकालमवयवान्तरे कर्मचिन्तनादेतत् लभ्यत इत्य-

---

(१) अवयवांशौ–पा० ७ पु० । (२) करोति–पा० ६ पु० ।
(३) तन्त्वन्तरकर्मणा च—पा० ५, कर्मणा च–६ पु० ।

विभागात् तन्तुसंयोगविनाशः(१) तस्मिन्नेव काले संयोगविनाशात् तन्तुविनाशस्तस्मिन् विनष्टे तदाश्रितस्य तन्त्वन्तरविभागस्य विनाश इति । एवं(२) तर्ह्युत्तरविभागानुत्पत्तिप्रसङ्गः । कारणविभागाभावात् । ततः प्रदेशान्तरसंयोगवति(३) संयोगाभाव इत्यतो विरोधिगुणासम्भवात्(४) कर्मण-

र्थः । तथा ह्यंशुकर्मणा अंश्वन्तराद्विभागस्तन्त्वन्तरे च कर्मेत्येकः कालः । ततो विभागादंशुसंयोगविनाशस्तन्त्वन्तरकर्मणा च विनश्यतस्तन्तोर्विभागस्ततोंशुसंयोगविनाशात्तन्तुविनाशः । तन्त्वन्तरविभागात् द्वितन्तुकारकसंयोगविनाशः कालान्तरे च तन्तुविनाशात्तदाश्रितस्य विभागस्य विनाश इति । अत्र चोदयति एवं तर्हीति । कारणविभागेन हि द्रव्यविनाशविशिष्टं कालं स्वतन्त्रं वाऽवयवमपेक्ष्योत्तरविभागः कर्त्तव्यो न तु कर्मणेति पूर्वमेव सिद्धान्तितम् । स चाश्रयविनाशादपेक्षाकारणमप्राप्यैव विनष्ट इति कारणाभावादुत्तरविभागानुत्पत्तिः प्रसज्यत इत्यर्थः । ततः किमनिष्टं स्यादित्यत आह ततश्चेति । उत्तरविभागोत्पत्त्या हि पूर्वसंयोगनिवृत्तौ उत्तरसंयोगोत्पत्तिः स्यात् प्रतिबन्धकसद्भावे तु पूर्वसंयोगे उत्तरसंयोगो नोत्पद्यत इत्यर्थः । किमतो यद्येवमत आहात इति । उत्तरस्य संयोगस्य विनाशकारणस्याभावाद्यावदाश्रयविनाशं कर्मावतिष्ठेतेत्यर्थः । एतच्चा-

(१) तन्त्वन्तरसंयोगविनाशः—पा० ५ पु० ।
(२) नन्वेवं—पा० ६ पु० ।
(३) संयोगवति—इति नास्ति ७ पु० ।
(४) विरोधिगुणान्तराभावात्—पा० ५ पु० ।

श्चिरकालावस्थायित्वं नित्यद्रव्यसमवेतस्य च नित्यत्वमिति दोषः । कथं(१) यदाण्वन्तरे द्व्यणुकारम्भकपरमाणौ कर्मोत्पन्नमण्वन्तराद्विभागं करोति तदैवाण्वन्तरेऽपि कर्म ततो यस्मिन्नेव काले विभागाद् द्रव्यारम्भकसंयोगविनाशस्तदैवाण्वन्तरकर्मणा(२) द्व्यणुकाण्वोर्विभागः क्रियते ततो यस्मिन्नेव काले विभागात् द्व्यणुकसंयोगस्य विनाशः तस्मिन्नेव काले संयोगविनाशाद् द्व्यणुकस्य विनाशः तस्मिन् विनष्टे तदाश्रितस्य द्व्यणुकाणुविभागस्य विनाशः । ततश्च(३) विरोधिगुणासम्भवान्नित्यद्रव्यसमवेतकर्मणो नित्यत्वमिति(४) । तन्त्वण्वन्तरविभागाद्विभाग इत्यदोषः ।

---

निष्टं प्रमाणबाधितत्वात् । न ह्यनुत्पन्नोत्तरसंयोगो यावत् सत्त्वं चलन्नेव कश्चित्तन्तुरस्तीति नित्यत्वमपि कर्मणः क्वचित् प्रसज्येतेत्याह नित्येति । एतत् कथमित्यादिना व्युत्पादयति कथमिति । अण्वन्तरादारम्भकसंयोगिनः अण्वन्तरे अनारम्भकसंयोगिनि द्व्यणुकारम्भकपरमाणुकर्मणा द्रव्यारम्भकसंयोगविरोधिविभागोत्पादसमकालमनारम्भककर्मसंचिन्तनादेतल्लभ्यते इति संक्षेपः । विरोधिगुणोपनिपाताश्रयविनाशयोः विनाशकारणयोरसम्भवान्नित्यत्वम् । न च कर्मान्तरेण विभागान्तरोत्पत्तेः पूर्वसंयोगनिवृत्तावुत्तरसंयोगोत्पत्तौ च तत् कर्म निवर्त्स्यतीति युक्तं कर्म्मैवति कर्म्मान्तरानुत्पत्तेरिति समाधत्ते तन्त्वन्तरविभागादिति । विभाग इति । उत्तरो विभागः इत्यतो हेतोः कर्मणः

---

(१) कथं-नास्ति ६ पु० । (२) तदैवाणुकर्मणा-पा० ७ पु० ।
(३) तस्मात्-पा० ५ पु० ।
(४) गुणासम्भवात्कर्मणो नित्यत्वं-पा० ६ पु० ।

**आश्रयविनाशात्तन्त्वोरेव विभागो विनष्टो न तन्त्वं-द्वन्तरविभाग इति एतस्मादुत्तरो विभागो जायते(१) अङ्गुल्याकाशविभागाच्छरीराकाशविभागवत् तस्मि-**

---

कालान्तरावस्थायित्वमदोषः। एतद्विशदयति। आश्रयेति। यदा हि तन्तौ वर्तमानेन कर्म्मणा तन्त्वन्तराद्विभागः क्रियते तदा तदवयवांशोरपि विभागः क्रियते अङ्गुलिकर्म्मणा कुड्यविभाग-समकालं कुड्यावयवविभागवत्। स च विभागो विनाशकारणा-भावादस्त्येव तस्मादुत्तरो विभागः संजायते अङ्गुल्याकाश-विभागादिव शरीराकाशविभाग इति निदर्शनम्। यद्यपि प्रस्तुते क्रियावतस्तन्तोर्निष्क्रियेणाकाशादिदेशेनोत्तरो विभागो निदर्शने च निःक्रिययोरेव शरीराकाशादिदेशयोरिति वैषम्यं तथापि किमनेन कार्यैकार्थसमवायलक्षणायाः प्रत्यासत्तेः पूर्वभावनि-यमस्य चाविशेषात्। कर्मणोऽकारणत्वस्य चोभयत्रापि स-मानत्वात्। इदं पुनरवशिष्यते द्रव्यारम्भकसंयोगविरोधिवि-भागजनकं यत् कर्म तदविरोधिनं न जनयतीति प्राङ्निष्टंकि-तम्। अन्यथा तन्तौ वर्तमानेन कर्मणा अंश्वन्तरविभागं जनय-ताऽऽकाशादिदेशविभागोऽपि किं न जन्यते को नु खल्वकार-णविभागत्वेनानयोर्विशेषः। मूर्तामूर्तविभागजनकत्वेन प्रा-ग्व्यवस्था कृता यदाऽवयवान्तरान्न तदाकाशादिदेशादिति व-चनादित्यपि नास्ति अमूर्त्तविभागारम्भानारम्भयोरतीन्द्रियत्वा-त् मूर्त्तविभागजनकत्वेन विरोधाच्च तस्मात्तन्तुकर्मणा तन्त्व-न्तरविभागजनकेनांश्वन्तरविभागो न जन्यत एवेति कथं तद्बाधकः परीहार इति। अपरमाणुकारणेऽपि वर्तमानस्य विभागविशेषस्य

---

(१) उत्तरोत्तरो विभागः संजायते—पा० ६ पु०।

णैव काले कर्म(१) संयोगं कृत्वा विनश्यतीत्यदोषः । द्रव्यारम्भकसंयोगविरोधित्वाविशेषात् । यथा ह्यंगुल्यां वर्त्तमानेन कर्मणा कुड्यपरमाणुपर्यन्तविभागाद्द्रव्यारम्भकसंयोगविरोधित्वाविशेषात् युगपज्जन्यते तथा तन्तौ वर्तमानेन कर्मणा तन्त्वन्तरपरमाणुपर्यन्तविभागाद्द्रव्यारम्भकसंयोगविरोधित्वाविशेषाद्युगपज्जन्यत इत्यदोषः । यथा च परमाणवो द्व्यणुकादिप्रक्रमेण स्थूलकार्यमारभन्ते परमाणुकर्माणि तत्संयोगद्वारेण परमाणुसंयोगाश्च द्व्यणुकादिसंयोगद्वारेणेति कारणत्वमविशिष्टं साक्षात्परम्परया वेति सूक्ष्मेक्षिका तथा परमाणुविभागा अपि स्थूलकार्यारम्भकसंयोगविरोधिन एव द्व्यणुकादिविभागजननद्वारेणेति सूक्ष्मेक्षिका । न ह्यंशोर्विभागो द्वितन्तुकारम्भकतन्तुसंयोगविरोधी स विभागो न सम्भवतीति सम्भवति । तस्मात् द्रव्यारम्भकसंयोगविरोधित्वाविशेषात्तन्तुविभागसमकालं अण्वन्तरविभागोपि कर्मणैव क्रियते स चोत्तरविभागमारभत इति सुष्ठूक्तं तन्त्वण्वन्तरविभागाद्विभाग इत्यदोष इति । अथवा तन्तुकर्मसमकालं तदणावपि कर्मोत्पन्नं विनश्यदवस्थतन्तुतदण्वाकाशादिदेशेभ्यो युगपद्विभागानारभते द्रव्यारम्भकसंयोगाविरोधित्वेनाविशेषात् । तत्र तन्तौ नष्टे तदाश्रित एव विभागो नष्टोऽन्यस्तु वर्त्तते । स च तन्त्वण्वन्तरविभाग उच्यते तन्त्वोर्यदण्वन्तरमणुविशेषस्तदीयत्वात् । तेनाण्वाकाशविभागात्तन्त्वाकाशविभागो जायते तथा चाङ्गुल्याकाशविभागाच्छरीराकाशविभाग इत्युदाहरणे स्फुटम् । शरीरशब्दस्त्वत्र हस्तोपलक्षणपरः । आरभ्यारम्भकवादस्य प्रतिषेधात् अङ्गुलीशरीरान्तराले च हस्ताद्युपलब्धेरिति कृतं वि-

(१) शरीराकाशविभागवदिति ततस्तस्मिन्नुत्पन्ने विभागे कर्म–पा० ५ पु० ।

अथ वा अंश्वन्तरविभागोत्पत्तिसमकालं(१) तस्मिन्नेव तन्तौ कर्मोत्पद्यते ततोंऽश्वन्तरविभागात्(२)तन्त्वारम्भकसंयोगविनाशः तन्तुकर्मणा च तन्त्वन्तराद्विभागः क्रियते इत्येकः कालः । ततः संयोगाविनाशात् तन्तुविनाशः तद्विनाशाच्च तदाश्रितयोर्विभागकर्मणोर्युगपद्विनाशः(३) । तन्तुवीरणयोर्वा संयोगे

स्तरेण । निस्तीर्णं कथञ्चित्त्वक्षुरधाराचक्राचक्रमणमिति । नित्यत्वप्रसङ्गस्त्वपरिज्ञातोत्तरं प्रयोजयति अनारम्भके हि परमाणावुत्पन्नकर्म्मद्रव्यारम्भकसंयोगप्रतिद्वन्द्वित्वाविशेषेण द्व्यणुकादिवत् व्योमादिदेशादपि विभागमारभमाणं तत्र कुतश्चिद्विभेति द्रव्यारम्भकसंयोगविरोधिविभागजनकं यत् तत् विरुद्धकार्यतया तत्रारभत इत्युक्तमिति न प्रसमर्तव्यमित्येव तु तत्र परिहार इत्यभिप्रायः । एवं तावदविभक्तावयवद्रव्यकर्मणा जनितो विभागो द्रव्यान्तरस्यावयवक्रियाविभागादिन्यायेन विनाशाद्विनश्यतीति दर्शितम् । सम्प्रति यत्रैवावयवे क्रियाविभाग आरब्धस्तस्यैवावयवक्रियाविभागादिन्यायेन विनाशात् सह कर्म्मणा विभागो विनश्यतीत्यपि क्वापि स्यादित्याह अथवेति । उत्तरसंयोगस्त्वत्र न जायत एव समवायिकारणाभावात् । न चैवं कर्म्मणोनुपभोग्यत्वदोषः सत्याश्रये ह्युत्तरसंयोगानुत्पत्तावनुपभोग्यत्वदोषो नत्वन्यथा आश्रयविनाशे तु कारणसामर्थ्येन लब्धजन्मनः कर्म्मणा प्रक्रियाचिताया एवोपभोग्यत्वादिति ।

(१) अंशुविभागोत्पत्तिसमकाले—पा० ६ पु० ।
(२) ततो विभागात्—पा० ७ पु० ।
(३) इति—अधिकम् ५ पु० ।

**सति द्रव्यानुत्पत्तौ पूर्वोक्तेन विधानेनाश्रयविनाश-संयोगाभ्यां तन्तुवीरणविभागविनाश इति ।**

**परत्वमपरत्वं च(१) परापराभिधानप्रत्ययनिमित्त-**

---

एवमुत्तरसंयोगादाश्रयनाशाच्च प्रत्येकं विभागनाशं व्युत्पाद्य द्वाभ्यां समुच्चिताभ्यां विनाशमाह तन्तुवीरणयोर्वेति । द्रव्यानुत्पत्तावित्यनारम्भके वीरणे वर्त्तमानस्य कर्मणो द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनकतया तन्तोराकाशादिदेशाच्च युगपद्विभागोत्पत्तिं सूचयितुम् तथा च पूर्वोक्तेन विधानेनाणुक्रियाविभागादिना वीरणकर्मविभागादिना च प्रकारेण अणुकर्मसमकालं वीरणकर्मसंचिन्तनादेतल्लभ्यत इति सङ्क्षेपः ।

परस्परानुविद्धव्यवहारकारणतया व्युत्पत्तिवैशद्यार्थं सङ्क्षेपार्थं चैकग्रन्थेन परत्वापरत्वे निरूपयति । परत्वमपरत्वं चेति । यथासंख्यं परापराभिधानयोः परापरप्रत्यययोश्च निमित्तं विशेषणम् । यद्विशिष्टे द्रव्ये परमित्यभिधानं प्रत्ययो वा तत् परत्वम् । यद्विशिष्टे द्रव्ये अपरमित्यभिधानं प्रत्ययो वा तदपरत्वमिति लक्षणमुक्तम् प्रमाणञ्च । संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वयोरेव परापरव्यवहारनिमित्तत्वान्न ततोधिकयोस्तयोः प्रमाणमस्ति संयोगाल्पत्वमेव हि सन्निकृष्टत्वं प्रत्यासन्नत्वमपरत्वं वोच्यते तद्बहुत्वमेव च विप्रकृष्टत्वं दूरत्वं परत्वं वोच्यत इति चेत् । न । तदपेक्षया प्रमातर्यपि परापरप्रत्ययप्रसङ्गात् संयोगबह्वल्पभावस्याविशेषात्, भवति हि यावत्यस्ति मत्तो वाराणसी तावति वाराणस्या अहमपि न तु सा किञ्चिदपेक्ष्य मत्तः परापरा वेति अहमपि तस्याः परो अपरो वेति तदविशेषात् ।

---

(१) परापरत्वं च—पा० १ पु० ।

म्(१)। ननु द्विविधं दिक्कृतं कालकृतं च। तत्र दिक्कृतं दिग्विशेषप्रत्यायकम्। कालकृतं च वयोभेदप्रत्यायकम्। तत्र दिक्कृतस्योत्पत्तिरभिधीयते। कथम्। एकस्यां दि-

परत्वापरत्वोत्पत्तिनियमे कारणं वाच्यमिति चेत्। न। कारणशक्तिनियमादेव तन्नियमोपपत्तेः। भेर्याकाशसंयोगस्योभयाश्रितत्वाविशेषेपि नभस्येव शब्दो न भेर्यामितिवत् संयोगाल्पत्वबहुत्वाविशेषेपि प्रमेय एव परत्वापरत्वे न प्रमातरीति सर्वमुपपन्नम्। ननु व्यवहारनिमित्ताविशेषेपि व्यवहारविशेष उपपद्यते अतिप्रसङ्गात् इत्येवं व्यवस्थिते कारणभेदाद्भेदमाह द्विविधमिति। तत्पुनः परत्वं चापरत्वं च प्रत्येकं द्विविधं दिक्कृतन्दिक्संयोगासमवायिकारणकृतं कालकृतं कालसंयोगासमवायिकारणकृतमित्यर्थः। कार्यविशेषाद्विशेषमाह दिक्कृतं दिग्विशेषप्रत्यायकमित्यादि। विशिष्यत इति विशेषो दिगेव विशेषो दिग्विशेषः कालात्। एवं वयोभेदोपि कालविशेष उच्यते यथा च परत्वापरत्वाभ्यां दिक्कालावनुमीयेते तथा प्रागुक्तम्। अथवा दिग्विशेषो देशविशेषः। सन्निकृष्टविप्रकृष्टलक्षणः। वयोभेदः। शरीरावस्थाविशेषो बाल्यकौमारादिलक्षणः। तत्प्रत्यायकं श्रुताभ्यां हि परत्वापरत्वाभ्यां देशविशेषो वयोविशेषश्चानुमीयते। तथा च लोकव्यवहारो हानोपादानादिः सिद्ध्यतीति शिष्याणामवधानायोत्पत्तिमभिधातुं प्रतिजानीते तत्रेति। यदि हि दिक्पिण्डसंयोगात् परत्वमपरत्वं चोत्पद्यते सर्वत्र सर्वदा सर्वथोत्पद्येताविशेषात्। परस्परापेक्षया च तन्नियमे इतरेतराश्रयत्वं

(१) परापरप्रत्ययनिमित्तम्—पा० ५ पु०।

व्यवस्थितयोः(१) पिण्डयोः संयुक्तसंयोगबह्वल्पभावे सत्येकस्य द्रष्टुः सन्निकृष्टमवधिं कृत्वा(२) एतस्माद्विप्रकृष्टोऽयमिति परत्वाधारेऽसन्निकृष्टा बुद्धिरुत्पद्यते(३)। ततस्तामपेक्ष्य परेण दिक्प्रदेशेन संयोगात् परत्वस्योत्पत्तिः। तथा विप्रकृष्टं चावधिं कृत्वा एतस्मात् सन्निकृष्टोयमिति अपरत्वाधारे इतरस्मिन् सन्निकृष्टा बुद्धिरुत्पद्यते । ततस्तामपेक्ष्यापरेण दिक्प्रदेशेन

स्यादित्यभिप्रायवान् पृच्छति कथमिति । अभिप्रायस्थमाक्षेपं परिहरन्नाह एकस्यामिति । अत्रैकदिङ्नियमान्न सर्वत्र एकद्रष्टृनियमान्न सर्वथा अपेक्षाबुद्धिनियमान्न सर्वदेति संयुक्तसंयोगाल्पत्वबहुत्वलक्षणयोः सन्निकृष्टत्वविप्रकृष्टत्वयोरपेक्षाबुद्धिविशेषयोश्च स्वकारणादुत्पत्तेः स्वप्रमाणात्प्रतीतेश्च परस्परानपेक्षत्वान्न परस्पराश्रयदोष इति । परत्वाधार इति भविष्यत्परत्वाधारे । परेण दिग्देशेनेति । परत्वोत्पादको दिक्प्रदेशः परः स च विप्रकृष्टो बुद्धिसन्निहितः तथा तेन पूर्वमुत्तरत्रापीत्यनेन विधिना समवाय्यसमवायिनिमित्तेभ्यः पिण्डदिक्पिण्डसंयोगापेक्षाबुद्धिभ्यः परत्वोत्पत्तिं दर्शयित्वा अपरत्वस्योत्पत्तिमाह विप्रकृष्टं चेति । एकदिगवस्थितयोरेकस्य द्रष्टुरित्यनुकर्षणार्थश्चकारः । कालकृतयोः परत्वापरत्वयोरुत्पत्तिमाह कालकृतयोरपीति । अत्र पिण्डस्य समवायित्वं कालपिण्डसंयोगस्य चासमवायित्वं अपेक्षाबुद्धेर्निमित्तत्वमित्यपरोऽर्थः । तर्हि कार-

(१) दिशि व्यवस्थितयोः—पा० ५ पु० ।
(२) दत्वा—पा० १ पु० ।
(३) असन्निकृष्टबुद्धिरिति पाठः सम्यक् । (एवमग्रेपि)

संयोगादपरत्वस्योत्पत्तिः । कालकृतयोरपि कथम् । वर्तमानकालयो(१)रनियतदिग्देशसंयुक्तयोर्युवस्थविरयो रूढश्मश्रुकार्कश्य(२)वलिपलितादिसान्निध्ये सत्येकस्य द्रष्टुर्युवानमवधिं कृत्वा स्थविरे विप्रकृष्टा बुद्धिरुत्पद्यते । ततस्तामपेक्ष्य परेण कालप्रदेशेन संयोगात् परत्वस्योत्पत्तिः । स्थविरं चावधिं कृत्वा यूनि सन्निकृष्टा बुद्धिरुत्पद्यते । ततस्तामपेक्ष्यापरेण कालप्रदेशेन संयोगादपरत्वस्योत्पत्तिरिति । विनाशस्त्वपेक्षाबुद्धिसंयोगद्रव्यविनाशात् ।

---

णाविशेषात् कार्यविशेषं कथं भविष्यतीति । न हि तदविशेषे कालकल्पनायामपि किञ्चिद्बीजमस्तीत्यभिप्रायवान् पृच्छति । कथमिति । विदिताभिप्रायस्योत्तरं वर्तमानेति । अवर्तमानस्य समवायिकारणत्वे अवधित्वं च नास्तीति वर्तमानयोरित्युक्तम् । अनियतदिग्देशयोरिति । दिक्कृताव्यवच्छेत्तुं युवत्वस्थविरत्वे शरीरावस्थाविशेषौ तत्प्रतिपत्तये रूढेत्यादि । आदिग्रहणात् परिमाणसामर्थ्याऽनतीन्द्रियापाटवविशेषाः । बहुतरतपनपरिस्पन्दान्तरितजन्मत्वं विप्रकृष्टत्वम् । अन्यतरतमोपहवहनव्यवहितजन्मत्वं सन्निकृष्टत्वम् । परत्वोपादकत्वं कालप्रदेशस्य परत्वम् अपरत्वोत्पादकत्वं चापरत्वमिति । एवमुत्पत्तिं निरूप्य विनाशं निरूपयति विनाशस्त्विति । अपेक्षाबुद्धिसंयोगद्रव्यनाशात् पृथक्पृथक्त्वाभ्यां द्वाभ्यां च सर्वेभ्यो विनाशः सप्रधानयोरिति सङ्ग्रहः । अत्र प्रथमां विधां व्युत्पा-

---

(१) वर्तमानयोरिति–पा० १ । ५ । ६ पु० ।
(२) वार्द्धक्य–पा० ६ पु० ।

अपेक्षाबुद्धिविनाशात्तावदुत्पन्ने परत्वे यस्मिन्काले सामान्यबुद्धिरुत्पन्ना भवति । ततोपेक्षाबुद्धेर्विनश्यत्ता सामान्य(१)ज्ञानतत्सम्बन्धेभ्यः परत्वगुणबुद्धेरुत्पद्यमानतेत्येकः कालः । ततोपेक्षाबुद्धेर्विनाशो गुणबुद्धेश्चोत्पत्तिः ततोऽपेक्षाबुद्धिविनाशाद्गुणस्य विनश्यत्ता गुणज्ञानतत्सम्बन्धेभ्यो द्रव्यबुद्धेरुत्पद्यमानतेत्येकः कालः । ततो द्रव्यबुद्धेरुत्पत्तिर्गुणस्य विनाश इति(२) । संयोगविनाशादपि(३) कथम् । अपेक्षाबुद्धिसमकालमेव परत्वाधारे कर्मोत्पद्यते तेन कर्मणा(४) दिक्पिण्डविभागः क्रियते अपेक्षाबुद्धितः

---

दयति अपेक्षेति । तावच्छब्दः क्रमे । उत्पन्ने परत्वे विभज्यमानावयवस्थिरद्रव्ये समवायिनीति शेषः । ततस्तस्मिन् काले । एवमुत्तरत्रासाधश्चैतत् पूर्ववत् समाधेयमिति । द्वितीयां विधामाह । संयोगेति। अपेक्षाबुद्धिसमकालमविनश्यदवस्थे परत्वाधारे कर्मसञ्चिन्तनादेतल्लभ्यते इति सङ्क्षेपः । तथाहि । अपेक्षाबुद्धिकर्मणी परत्वोत्पत्तिदिक्पिण्डविभागौ परत्वसामान्यबुद्धिदिक्पिण्डसंयोगविनाशौ । अथ सामान्यबुद्धेरपेक्षाबुद्धिविनाशगुणबुद्ध्युत्पत्ती दिक्पिण्डसंयोगनाशात् परत्वस्य नाश इत्यपेक्षाबुद्धिनाशस्य परत्वनाशसमसमयभावितया न तदुत्पादकत्वम् । अथ संयोगनाशस्य परत्वनाशहेतुत्वं कुतः सिद्धं उपपन्नं हि प-

---

(१) परत्वसामान्य–पा० ६ पु० ।

(२) गुणस्य च नाश इति–पा० ६ पु० । अत्र विनाश इत्यत्र नाश इति दृश्यते ।

(३) कालसंयोगविनाशादपि–पा० ६ पु० ।

(४) तत्कर्मणा–पा० १ पु० ।

परत्वस्योत्पत्तिरित्येकः कालः(१)। ततस्सामान्यबुद्धे-रुत्पत्तिः दिक्पिण्डसंयोगस्य च विनाशः ततो यस्मिन् काले गुणबुद्धिरुत्पद्यते तस्मिन्नेव काले दिक्पिण्ड-संयोगविनाशाद्गुणस्य विनाशः । द्रव्यविनाशादपि कथम् । परत्वाधारावयवे कर्मोत्पन्नं यस्मिन्नेव कालेऽवयवान्तराद्विभागं करोति तस्मिन्नेव काले अपेक्षाबुद्धिरुत्पद्यते ततो विभागाद्यस्मिन्नेव काले संयोगविनाशः तस्मिन्नेव काले परत्वमुत्पद्यते ततः संयोगविनाशाद्द्रव्यविनाशस्तद्विनाशाच्च(२)

रत्वमपेक्षाबुद्धिव्यावृत्तेरेव व्यावर्तते दिक्पिण्डसंयोगव्यावृत्तौ तु कारणाभावात् परत्वान्तरं न जायत इत्येतावत्तदनुपलम्भ उपपद्यत इति न विप्रकृष्टत्वेन चापरत्वस्य व्याप्तत्वात् व्यापक-निवृत्तौ च व्याप्यनिवृत्तेरवश्यंभावित्वात् सत्यामपि चापेक्षाबुद्धौ विप्रकृष्टत्वं निवर्त्तते तन्निवृत्तिकारणोपानिपातादिति दर्शितम् । न चाहेतुको विनाशस्तस्माद्विप्रकृष्टलक्षणस्य दिक्पिण्डसंयोगस्य निवृत्तेरपरत्वं निवर्तत इत्येव रमणीयम् । उपलक्षणं चैतत् । परत्वाधारे कर्म्मोत्पद्यत इति । अवधिद्रष्ट्रोरन्यतरकर्मणापि दिगवधिदिग्द्रष्टृसंयोगविनाशादपि परत्वविनाशात् । युक्तेर-विशेषादिति । तृतीयां विधामाह द्रव्येति । परत्वाधारावयव-कर्मजविभागसमकालमपेक्षाबुद्धिसंचिन्तनादेतल्लभ्यत इति संक्षे-पः । तथाहि पिण्डावयवविभागापेक्षाबुद्धी संयोगनाशपरत्वो-त्पत्ती द्रव्यनाशपरत्वसामान्यज्ञाने परत्वनाशगुणबुद्धी इति ।

---

(१) क्रियते परत्वस्योत्पत्तिरिति–पा० ५ पु० ।

(२) द्रव्यनाशः सामान्यबुद्धेश्चोत्पादः द्रव्यनाशाच्च–पा० ६ पु० ।

तदाश्रितस्य गुणस्य विनाशः । द्रव्यापेक्षाबुद्ध्यो-र्युगपद्विनाशादपि(१) कथम् । यदा परत्वाधारावयवे कर्मोत्पद्यते तदैवापेक्षाबुद्धिरुत्पद्यते(२) कर्मणा चावयवान्तराद्विभागः क्रियते परत्वस्योत्पत्तिरित्येकः कालः । ततो यस्मिन्नेव कालेऽवयवविभागाद् द्रव्यारम्भकसंयोगविनाशस्तस्मिन्नेव काले सामान्यबुद्धि-रुत्पद्यते तदनन्तरं संयोगविनाशात् द्रव्यविनाशः सामान्यबुद्धेश्चापेक्षाबुद्धिविनाशः इत्येकः कालः । ततो द्रव्यापेक्षाबुद्ध्योर्विनाशात् परत्वस्य विनाशः । द्रव्यसंयोगविनाशादपि कथम् । यदा परत्वाधारावय-वे(३) कर्मोत्पन्नमवयवान्तराद्विभागं करोति(४) तस्मि-न्नेव काले पिण्डकर्मापेक्षाबुद्ध्योर्युगपदुत्पत्तिः । ततो(५)

---

द्रव्यापेक्षाबुद्ध्योर्युगपद्विनाशेन चतुर्थीं विधामाह द्रव्यापेक्षाबुध्यो-रिति । पिण्डावयवकर्मसमकालमपेक्षाबुध्युत्पत्तेरेतल्लभ्यते । तथाहि परत्वाधारावयवकर्मापेक्षाबुद्धी । अवयवान्तरविभाग-परत्वोत्पत्ती । ततो आरम्भकसंयोगविनाशसामान्यज्ञाने । द्रव्यविनाशापेक्षाबुद्धिविनाशौ । अथ परत्वस्य विनाश इति । द्रव्यसंयोगविनाशाभ्यां पञ्चमीं विधामाह । पिण्डाव-यवकर्मापेक्षाबुद्धियौगपद्यचिन्तयैतल्लभ्यते । तथा ह्यवयववि-भागपिण्डकर्मापेक्षाबुद्धयः अवयवसंयोगनाशादिक्पिण्डविभाग-

---

(१) बुद्ध्योर्विनाशादपि-पा० १ पु० ।
(२) तदैवापेक्षाबुद्धिरुत्पद्यते-इति नास्ति १ पु० ।
(३) द्रव्यावयवे-पा० ३ पु० । यदा कर्मोत्पन्नं-५ पु० ।
(४) तत-इति अधिकं ५ पु० ।
(५) तत-इति नास्ति ५ पु० ।

यस्मिन्नेव काले परत्वस्योत्पत्तिस्तस्मिन्नेव काले विभागाद्(१) द्रव्यारम्भकसंयोगविनाशः पिण्डकर्मणा दिक्पिण्डस्य च विभागः क्रियते(२) इत्येकः कालः । ततो यस्मिन्नेव काले सामान्यबुद्धिरुत्पद्यते तस्मिन्नेव काले द्रव्यारम्भकसंयोगविनाशात् पिण्डविनाशः पिण्डविनाशाच्च पिण्डसंयोगविनाशः(३) ततो गुणबुद्धिसमकालं पिण्डदिक्पिण्डसंयोगविनाशात्(४) परत्वस्य विनाशः । संयोगापेक्षाबुद्ध्योर्युगपद्विनाशादपि कथम् । यदा परत्वमुत्पद्यते तदा परत्वाधारे कर्म ततो यस्मिन्नेव काले परत्वसामान्यबुद्धिरुत्पद्यते तस्मिन्नेव काले पिण्डकर्मणा(५) दिक्पिण्डविभागः क्रियते ततः सामान्यबुद्धितोऽपेक्षाबुद्धिविनाशो विभागाच्च दिक्पिण्डसंयोगविनाश इत्येकः कालः । ततः संयोगापेक्षाबुद्धिविनाशात् परत्वस्य विनाशः । त्रया-

---

परत्वोत्पत्तयः द्रव्यनाशदिक्पिण्डसंयोगनाशपरत्वसामान्यबुद्धयः अथ द्रव्यसंयोगनाशाभ्यां परत्वनाशः । सामान्यबुद्धितो गुणबुद्धेर्जन्मापेक्षाबुद्धेश्च विनाश इति । संयोगनाशापेक्षाबुद्धिनाशाभ्यां षष्ठीं विधामाह । संयोगापेक्षाबुद्ध्योरिति । परत्वोत्पत्तिसमकालं पिण्डकर्मचिन्तयैतल्लभ्यते । तथाहि परत्वोत्पत्ति-

---

(१) विभागात्– नास्ति ५ पु० ।
(२) क्रियते उभयस्मिन्नेव काले–इति ५ पु० ।
(३) पिण्डविनाशो विभागाच्च दिक्पिण्डसंयोगविनाश इति ५ पु० ।
(४) संयोगयोर्विनाशात्–पा० ५ पु० ।
(५) कर्मणा–इति ४ पु० ।

णां समवाय्यसमवायिनिमित्तकारणानां(१) युगपद्वि-
नाशादपि कथम् । यदाऽपेक्षाबुद्धिरुत्पद्यते पिण्डावयवे कर्म ततो यस्मिन्नेव काले कर्मणावयवान्तराद्विभागः क्रियतेऽपेक्षाबुद्धेः(२) परत्वस्य चोत्पत्तिस्तस्मिन्नेव काले पिण्डेपि कर्म ततोऽवयवविभागात्पिण्डारम्भकसंयोग-विनाशः(३) पिण्डकर्मणा च दिक्पिण्डविभागः क्रियते सामान्यबुद्धेश्चोत्पत्तिरित्येकः कालः । ततः संयोगवि-नाशात्पिण्डविनाशः विभागाच्च दिक्पिण्डसंयोगवि-नाशः सामान्यज्ञानादपेक्षाबुद्धेर्विनाश इत्येतत्सर्वं युगपत्त्रयाणां समवाय्यसमवायिनिमित्तकारणानां(४) विनाशात् परत्वस्य विनाश इति ॥

---

पिण्डकर्मणी सामान्यज्ञानदिक्पिण्डविभागौ । अपेक्षाबुद्धिना-शदिक्पिण्डसंयोगनाशौ अथ परत्वस्य नाश इति । समवा-य्यसमवायिनिमित्तानां युगपद्विनाशेन सप्तमीं विधामाह । त्रयाणामिति । परत्वोत्पत्त्यवयवविभागोत्पत्तिसमकालं पि-ण्डकर्मचिन्तयैतत्सुलभम् । तथा ह्यपेक्षाबुद्ध्यवयवकर्मभ्यां परत्वावयवविभागौ स्वकारणात् पिण्डकर्मेत्येकः कालः । अथ परत्वसामान्यज्ञानमवयवसंयोगविनाशः दिक्पिण्डविभागश्च । ततोपेक्षाबुद्धिनाशद्रव्यनाशदिक्पिण्डसंयोगनाशाः । तेभ्यः पर-त्वनाश इति ॥

---

(१) निमित्तानां–पा० १ पु० ।
(२) अपेक्षाबुद्धेरिति–नास्ति १ पु० ।
(३) ततो पिण्डारम्भकसंयोगविनाश–इति ५ पु० ।
(४) निमित्तानां–१ पु० ।

बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इति पर्यायाः(१) । सा

क्रमप्राप्तां बुद्धिं निरूपयति । बुद्धिरिति । यद्यपि बुद्धिर्ज्ञानमित्येतावतैव स्वस्थं यस्मिन् सत्यात्मनि जानामीत्यनुव्यवसायो भवति सा बुद्धिः तथापि बुद्ध्यादिशब्दानां केचिदनुभेदमाहुस्तत्प्रत्याख्यानार्थं पर्यायोत्कीर्तनम् । सांख्या हि प्रकृतेः सत्त्वप्रधानं प्रथमं परिणामं महदाख्यमन्तःकरणविशेषं बुद्धिमाहुः बुद्धेर्विषयाकारः परिणतिभेदो घटपट इत्यादिज्ञानमाचक्षते । बुद्धावादर्शभूतायां वर्त्तमानेन ज्ञानेन चितिशक्तेः पुरुषस्य भेदाग्रहात्तद्वदभिमानमुपलब्धिं प्रचक्षते । बुद्धिस्थं च सुखादिकं परिणतिविशेषं यदुपलभत इति । तदनेन प्रत्याख्यायते । यदि तावद्बुध्यतेनेनेति बुद्धिरित्यन्तःकरणमभिमतन्तन्न वारयामो मनस इष्टत्वात् । ततोऽप्यधिकेन्तःकरणे न प्रमाणमस्ति । ज्ञानायौगपद्यादेस्तावतैवोपपत्तेः । बोधो बुद्धिरिति भावार्थो विवक्षितश्चेत् सोन्तःकरणसाध्यः । स च प्रत्यक्षसिद्धो अहं बुद्ध इत्यपरोक्षानुव्यवसायात् । नास्मदन्तःकरणमतीन्द्रियम् अत एव नतद्धर्मोऽपि आत्मधर्म्मतयैव प्रत्यक्षासिद्धत्वात् । न चात्मधर्मत्वमस्याप्रामाणिकं तदन्यधर्मत्वस्य प्रागेव प्रतिषेधात् यद्धर्मः खल्वियं बुद्धिः तस्यैव लोकवेदयोरात्मत्वेन प्रसिद्धेः । नचैवाकौटस्थ्यविरोधो धर्मस्य प्रवृत्तिनिवृत्त्योरपि धर्मिणोत्यन्तभेदेनापि तत्त्वाविरोधात् । अत्यन्तभेदेपि च स्वभावनियमादेव धर्मधर्मिभावनियमोपपत्तेः । एतेन तद्वदभिमानो व्याख्यातः । तत एव धर्मत्वव्युत्पादनात् । सुखादिकं त्वधिकमिष्यते न तु प्रत्ययशब्दवाच्यं बुद्ध्यते उपलभते जानाति प्रत्येतीति लोके

(१) प्रत्येकं पर्यायाः-पा० ५ पु० । इत्येकपर्यायाः-पा० २ पु० ।

**चानेकप्रकाराऽर्थानन्त्यात्प्रत्यर्थनियतत्वाच्च । तस्याः सत्यप्यनेकविधत्वे समासतो द्वे विधे(१) विद्या चाविद्या चेति । तत्राविद्या चतुर्विधा संशयविपर्ययानध्यवसायस्वप्नलक्षणा ॥**

---

समानार्थम् । न तु प्रत्येतीति सुखी दुःखीति वा कश्चिद्व्यवहरति परिभाषा तु परिशिष्यते सा तु परिभाषैवेति । तस्माद्बुद्ध्यादिशब्दाः पर्यायाः समानार्था इति सुष्ठूक्तम् । भेदस्त्वस्या विषयतः कारणतश्च ताभ्यामेव स्वरूपकृतोपि निरूप्यत इति तद्द्वारैव वक्ष्यते । तत्र विषयतस्तावदाह सा चे ति । अनन्तार्थत्वादित्यर्थः । नन्वर्थस्यानन्त्येपीश्वरबुद्धिरेकैवेत्याशंक्याह प्रत्यर्थनियतत्वाच्चेति । यावन्तमर्थमानन्त्योत्पन्ना बुद्धिः सा तावदर्थे नियताऽर्थान्तरं न स्पृशतीति न चास्पृश्यं परिहरति अभावपरिहारमसङ्गात् । तथा चार्थस्यानन्त्यात् बुद्धिरप्यनन्ता भवतीतीश्वरबुद्धिरपि नियतार्थैव न हि साप्यवगाढमर्थं परिहरति अनवगाढं वावगाहत इति भावः । व्यासमुक्त्वा समासमाह तस्या इति । समासतः सङ्क्षेपतः सेति पूरणीयम् । विद्या चाविद्या चेति । यथार्थं ज्ञानं विद्या अयथार्थं ज्ञानमविद्या परस्परसमुच्चयार्थाभ्यां चकाराभ्यां तृतीयः प्रकारो व्यवच्छिद्यते न चासौ सम्भवति । शङ्काया अपि व्याहतत्वात् । तत्र विद्यापूर्वकत्वादविद्यायाः पश्चादुक्ताया अपि लघुप्रतिपत्तित्वात्प्रथमं विभागमाह तत्राविद्येति । यद्यपि मूलबुद्धावयथार्थायां स्मृतिरप्ययथार्थैव यथा रज्जुं भुजङ्गतयोपलभ्यमानस्य तथैव स्मृतिः स सर्प इति तथापि तदविवक्षया यथायथं संशयादिरूपभेदेनैव तद्व्यवहारः । यथार्था

---

(१) द्विविधा-पा० ५ पु० ।

तु स्मृतिः प्रत्यक्षादिषु विद्याभेदेषु नान्तर्भवतीति पृथग्व्यवहरिष्यत इति । अथ तर्कः किं न गणितः। अनुभूयते हि संशयं निर्णयश्चान्तरा संशयात्प्रच्युतो निर्णयश्चाप्राप्तः प्रमाणानामनुग्राहक ऊहापरनामा प्रसङ्गात्मा प्रमाकरणनिष्ठः पौरुषेयो व्यापारः कुठारगोचर इवोद्यमनानिपातनादिः। अस्य ह्यविज्ञाततत्त्वो विषयः कारणोपपत्तिः पराभ्युपगतहेतुलक्षणा जननी । प्रमाणमनुग्राह्यः अनियतजिज्ञासाविच्छेदेन नियतजिज्ञासाजननमनुग्रहः सैव संभावनेत्युच्यते प्रमाणाङ्गस्य एतस्य तत्फलेनैव फलवत्ता इह भूतले यद्यभविष्यत् घट इदमिव व्यज्ञास्येत इत्येवमाकारं शरीरम् । न च संशय एवायमेककोटिकत्वात् । न निर्णयोऽयथार्थत्वात् । न यथार्थ आकारोपि तद्धेतुरसमर्थत्वात् । यदि स्यात् दृश्येतेति यद्यलंकृतार्थः सत्य एवेति चेन्न । अनियतकोट्युपनिराते नियतकोटिपरिग्रहस्य यद्यर्थत्वात् न चैतावतैव सत्यत्वम् आपादकसत्यत्ववदापाद्यसत्त्वस्यापि बाधितत्वात् । कथं हि प्रमाणमप्यनुगृह्णीयात् अनियतेच्छाविच्छेदेनेत्युक्तम् न हि कुर्यां न कुर्यामित्यनियतचिकीर्षः कर्ता किञ्चित् करोति । अनियतेच्छाविच्छेदे कथं स्यादिति चेत् । अनिष्टापत्तिनियतत्वादस्य । यथा सन्निकर्षान्नभक्षणोद्यतस्य सविषमिदं यदि भक्षयिष्यसि मरिष्यसीत्यनिष्टापत्तेर्न भक्षयेयमिति तत्स्मरणमेवेच्छाविच्छित्तिः । प्रमातुश्च द्वयमनिष्टं प्रमितहानिरप्रामाणिकोपगमश्चेति तदिदं तुरगारूढस्य तुरगविस्मरणं यत्तार्किकाभिमानमुद्वहन्नपि तर्कान्न गणयति। अनेनैव हि परीक्षको लौकिकमनिविशते इति । तसत्यमेवैतत् विपर्ययभेदत्वात् पृथक् नोपदिष्टः । तथापि न्यायाङ्गतया विशेषतो व्युत्पादनमर्हतीति चेत् । तस्य छलादिवत् सर्वतन्त्रविषयत्वादिति ॥

संशयस्तावत् प्रसिद्धानेकविशेषयोः सादृश्यमात्रदर्शनादुभयविशेषानु(१)स्मरणाद्धर्माच्च किंस्विदित्युभयावलम्बी विमर्षः(२) संशयः । स च द्विविधः । अन्तर्बहिश्च । अन्तस्तावत् आदेशिकस्य

तत्रोद्देशक्रमानुसारेण संशयं निरूपयति । संशयस्तावदिति । तावच्छब्दः क्रमे संशयः प्रथमं कथ्यते । ततो विपर्ययः कथयिष्यत इत्यर्थः । किंस्विदित्याकारं दर्शयति किंस्विदिदमेवमथैवमित्येवमाकारः प्रत्ययः संशय इत्यर्थः । विमर्षो विरुद्धनानार्थावमर्ष इति । विषयतः संशयस्वरूपमुपक्रम्येतदेव स्पष्टीकर्त्तुमुभयावलंबीति विरोध्युभयप्रकारवद्धर्म्मावलम्बीत्यर्थः । प्रसिद्धेत्यादिकारणकथनम् । प्रसिद्धाः प्रतीताः अनेकविशेषाः परस्परव्यावर्त्तका धर्म्माः शिरःपाण्यादयो वक्रकोटरादयश्च ययोः विशेषादर्शनादिति लभ्यते। उभयोर्यौ विशेषौ स्थाणुपुरुषत्वे इति यावत् । तयोरनुस्मृतौ सत्यां संशयो जायते । एतदुक्तं भवति । उभयविशेषानुस्मरणनिर्णायकविशेषादर्शनसहितात् समानधर्मवद्धर्मिदर्शनादिति । संशयस्य च नित्यं दुःखहेतुत्वम् अन्यथा तद्बाधनार्थं विशेषजिज्ञासानुपपत्तेः । दुःखतत्साधनयोश्चाधर्महेतुकत्वान्नोक्ताः न त्वकारणत्वादिति। अवान्तरभेदमाह स चेति । ज्ञातृधर्म्मनिमित्तकोन्तःसंशयो ज्ञेयधर्म्मनिमित्तको बहिरिति विभागः। प्रथमां विधामाह अन्तस्तावदिति। आदेशिको ज्योतिषिकोऽविपर्यस्ततया सम्यगप्रतीततया मिथ्यादिश्य ग्रहोपरागादि पुनरादिशतः कथयतः त्रिषु कालेषु प्रतीच्यां पञ्चमेहनि ग्रहयु-

(१) उभयगतविशेषा–पा० ६ पु० ।
(२) उभयावलम्बी विमर्षः–पा० ५ पु० ।

सम्यङ्मिथ्या चोद्दिश्य पुनरादिशतस्त्रिषु कालेषु संशयो भवति(१)। किन्तु सम्यङ्मिथ्या वेति। बहिरपि द्विविधः(२) प्रत्यक्षविषये चाप्रत्यक्षविषये च। तत्राप्रत्यक्षविषये तावत् साधारणलिङ्गदर्शनादुभयविशेषानुस्मरणादधर्माच्च संशयो भवति। यथाटव्यां विषाणमात्रदर्शनाद्गौर्गवयो वेति। प्रत्यक्षविषयेऽपि स्थाणुपुरुषयोरूर्ध्वतामात्रसादृश्यदर्शनात(३) वक्रादिविशेषानुपलब्धितः(४) स्थाणुत्वादिसामान्यविशेषानभिव्यक्तावुभयविशेषानुस्मरणादुभयत्राकृष्यमाणस्य आत्मनः(५) प्रत्ययो दोलायते किन्नु खल्वयं स्थाणुः स्यात्पुरुषो वेति॥

---

द्धमभूत्प्राच्यामद्य पर्जन्यो वर्षति पौर्णमास्यां चन्द्रोपरागो भविष्यतीति सुगणितज्ञाने संशयो भवति। भ्रान्तोहमस्मिन्नर्थे सम्यग्दर्शी वेति। द्वितीयां विधां विभजते। बहिरपीति। साधारणलिङ्गदर्शनादुभयसाधारणचतुःपदमात्रलिङ्गदर्शनात्। उभयविशेषेति। गोगवयरूपविशेषानुस्मरणात्। प्रत्यक्षविषयेपीति। एतदुक्तं भवति। यथा समानधर्मत्वाविशेषेपि प्रत्यक्षाप्रत्यक्षविषयतयान्तर्ज्ञानिको भेदः तथा समानधर्म्मत्वाविशेषेपि ज्ञातुस्तज्ज्ञेयतद्धर्म्मजन्योऽन्तर्ज्ञानिको भेदः न तु समानधर्मज्ञत्व-

---

(१) त्रिष्वपि कालेषु संशयः स्यात्—पा० ६ पु०।
(२) बहिर्द्विविधः—पा० ६ पु०।
(३) ऊर्ध्वतामात्रदर्शनात्—पा० ६ पु०।
(४) उपलब्धेः—पा० ६ पु०।
(५) उभयत आकृष्यमाणस्य—पा० १ पु०।

विपर्ययोपि प्रत्यक्षानुमानविषय एव(१) भवति।

विरोधेन तथाहि ज्ञानत्वाद्ययथार्थं नु यथार्थं वेति ज्ञायमानत्वात्तथाभूतमतथाभूतमिति वा समानादेव धर्मात् । एवमयोग्यत्वे तद्वत्तयाऽनुपलभ्यमानत्वादित्यपि समानादेव धर्मात् तथा व्याहतप्रतिपत्तित्वात् व्याहतप्रतिपत्तिविषयत्वाच्चेति । समानादेव धर्मात् तेषां सर्वेषां तदतत्साधारणत्वादिति । असाधारणस्तु धर्मोऽग्रे निरूपयिष्यत इति इत्येकविध एव संशय इति । ननु स्थाणुर्वा पुरुषो वेति वा शब्दः सादृश्यार्थस्तथाच स्थाणुरिव पुरुष इवेति स्यात् । स्थाणुपुरुषसदृशोयमिति च ज्ञानं यथार्थमेव कथमविद्याप्रभेद इति । न सारूप्यज्ञानाद्विकल्पज्ञानस्याधिकस्यानुभवसिद्धत्वात् असंशयेपि सारूप्योपलब्धिस्तद्यथा स्थाणुपुरुषसदृशीयं छायेति । तथापि सदृशदर्शनजमुभयस्मरणमात्रं विद्यैवेति चेत् । न । उभयस्मृतेरस्यातिरेकात् । स्थाणुपुरुषावयं तत्सदृशः पाषाणस्तम्भ इति निश्चयात्मकः प्रत्ययः संशयस्तु न तदात्मक इति भेदाग्रहं तु वक्ष्यामः । न बाधिकोप्ययं यथार्थः । नो खलु विकल्प्यमानं वस्त्वस्त्यर्थक्रियासु वोपयुज्यते । कथं तर्ह्यारोप्यैतापीति चेत् । न । परस्परविरुद्धयोरेवैकस्मिन्धर्मिणि समारोप्यमाणयोर्विकल्पाविषयत्वात् । तयोरपि प्रत्येकं प्रतीतत्वादित्येतत्सर्वमभिसन्धायोक्तमुभयत आकृष्यमाणस्यात्मनः प्रत्ययो दोलायत इति ॥

तदेवमनर्थजत्वाविशेषेप्यनिश्चयात्मकात् संशयात् निश्चयात्मकतया विपर्ययो भिद्यत इति द्वितीयमविद्याप्रभेदमाह । विपर्ययोपीति । अन्तर्बहिश्चेत्यपेरर्थः । अतस्मिंस्तदिति प्रत्ययो

(१) विशेष–पा० ६ पु० ।

प्रत्यक्षविषये(१) तावत् प्रसिद्धानेकविशेषयोः पित्तकफानिलोपहतेन्द्रियस्यायथार्था(२)लोचनात् असन्निहितविषयज्ञानजसंस्कारापेक्षादात्ममनसोः संयोगादधर्माच्चातस्मिंस्तदिति प्रत्ययो विपर्ययः। यथा गव्येवाश्व

---

विपर्ययः। अतस्मिन्नित्ययथार्थता दर्शिताऽनेन विद्यातोऽसमानजातीयाद्व्यवच्छेद इति। तदिति निश्चयाकारता तेनानिश्चयात्मकात् समानजातीयाद्व्यवच्छेदः। प्रत्यय इति जागरावस्थत्वं तेन स्वप्नव्यवच्छेद इति। एतदुक्तम्भवति। अयथार्थनिश्चयात्मकं जागरावस्थाज्ञानं विपर्यय इति। लोके तथैव प्रसिद्धेः। कारणमाह प्रसिद्धेति। प्रसिद्धाः प्रतीताः अनेके विशेषाः परस्परव्यावृत्तिहेतवो धर्मा ययोरारोप्यारोपविषययोः तौ तथोक्तौ तयोः न ह्यारोप्यारोपविषयापरिज्ञाने कश्चिद्विपर्येति। आरोप्यापरिज्ञाने सामर्थ्यानुपलब्धौ तद्धेतुत्वासम्भवेन हानादिव्यवहारानुपपत्तेः अनुपलब्धे संस्कारस्यासम्भवेन सादृश्यानुपयोगप्रसङ्गाच्च अन्वयव्यतिरेकाभ्यां सादृश्यदर्शनस्य विभ्रमं प्रति कारणत्वावधारणात्। आरोपविषयाप्रतीतौ निरालम्बनत्वापातात्। अन्यथाख्यातिपक्षे च सालम्बनत्वनियमादिति। ननु पीतः शंखस्तिक्तो गुड इति सारूप्याभावेपि भ्रान्तिदर्शनात् कथमेतत्। न आरोप्यज्ञानजनितसंस्कारसहकारितया तदुपस्थापनेन हि सारूप्यमुपपद्यते न त्वन्यथा। न च पीतिमतिक्तत्वयो रजतादेरिव संस्कारोपस्थाप्यत्वं प्रत्यक्षत एवोपस्थितेः। न च तिक्तत्वपीतिम्नों संसर्गत्वं च तथा तच्च संसृष्टगुणे नास्यास्तीति न किञ्चि-

---

(१) प्रत्यक्षत्वविषये–पा० ६ पु०।

(२) सम्प्रत्ययथार्था–पा० ५ पु०।

इति । असत्यपि प्रत्यक्षे प्रत्यक्षाभिमानो भवति ।

---

दनुपपन्नम् । स्यादेतन्न किं तयोरिरुत उक्तम् अयथार्थालोचनात् यथार्थालोचनाभावात् । तत्त्वाग्रहादिति यावत् । सम्प्रति विभ्रमकाले स्वतो विशेषनिषेधात् । साधारणधर्मवतो धर्मिणो ग्रहे सतीति लभ्यते यस्यासौ विभ्रमो भविष्यति तस्य पित्तकफानिलोपहतेन्द्रियस्येति समवायिकारणम् प्रदर्शयता सन्निहितविशेषाग्रहे चासन्निहितविशेषारोपे चेन्द्रियोपघातस्य हेतुत्वमुक्तं भवति । अन्वयव्यतिरेकसिद्धं चैतत् । न च दोषाः सहजशक्तिविघातहेतव एवाविरुद्धसहकारिसन्निवेशादेकस्यापि विरुद्धकार्यजननाविरोधात् । धर्माधर्माभ्यामात्मनः सुखदुःखवत् । परेषां वा तस्यैव ज्ञानस्य भेदग्रहेण विपरीतव्यवहारवत् । असन्निहितेत्यादिनापेक्षणीयं निमित्तमुक्तम् । आत्ममनसोः संयोगादित्यसमवायिकारणमुक्तम् । यद्यपि विभ्रमात् क्वचित् सुखमपि भवति तथापि दुःखोदर्कस्स इत्यवश्यमधर्म्मो हेतुरस्तीति अभिप्रायवतोक्तमधर्म्माच्चेति । उदाहरणं यथा गव्येवाश्व इति । ननु सम्भवत्येतत् दृश्ये दृश्यान्तरस्य सुसदृशस्य समारोपः कथं पुनरतीन्द्रियस्य परात्मनो निमेषोन्मेषाद्यनुपस्थितस्य प्रत्यक्षेऽत्यन्तविसदृशे समारोपो अयमसौ सुखी पण्डितः कामीश्वरइत्यादिप्रत्ययस्तद्वरं सत्य एवायं प्रत्ययोस्त्विति चार्वाकास्तान्प्रत्याख्यातुमाह असत्यपीति । शब्दलिङ्गानुमितं व्यापकममूर्तमाकाशमिति वस्तुगतिः । तत्रापगतजलदपटले विततालोकमण्डलेऽयःस्वच्छानवच्छिन्नदेशतया व्यूहनाविष्टम्भनाप्रेर्यतया सारूप्येणारोप्यत इति लोकानुभवसिद्धम् । तद्वदात्मनोपि दृश्यमूर्तान्तराप्रयोज्यतया तत्प्रयोजकतया च

यथा व्यपगतघनपटलमचलजलनिधिसदृशमम्बर(१)मञ्जनचूर्णपुञ्जश्यामं शार्वरं तम इति । अनुमानविष-

सारूप्येण शरीरतादात्म्यारोप इति भावः । यत्तु त्रिक्षिप्तनयना नीलिमानमाकलयन्ति तदतिदूरङ्गमा नयनरश्मयस्तिग्मकरकिरणाभिघातपरावृत्ताः स्वाधिष्ठानगोलकाभिसम्बद्धास्तदीयामेव श्यामिकां गगने पीतिमानमिव शंखादावारोपयन्तीति केचित् । तत्र काचलाक्षाः साक्षीकर्तुमुचिताः । यथाह भगवान् पातञ्जलिस्तथा ग्राह्यं भूगोलमध्यमेढीभूतस्य सुमेरोः प्रत्यगुदक्प्रागवाक्क्रमेण रजतसुवर्णपद्मरागमरकतमयानि चत्वारि शृङ्गाणि तस्य दक्षिणे इन्द्रनीलमयस्य शिखरस्य प्रभयाकाशं नीलमाभाति अन्यत्र सितपीतलोहितमिति । तथापि निष्क्रिये नीरूपेऽत्यन्तविसदृशे कथं क्रियारूपाद्यारोपः । सादृश्यनिबन्धनत्वात् भ्रान्तेऽस्ति तत् । उदाहरणान्तरमाह । अञ्जनेति । शर्वर्या इदं शार्वरं भाऽवस्थितस्य तमसः चक्षुर्मात्रग्राह्यतया शुक्लभास्वराविरोधितया च सारूप्येण नियमादृष्टवशाच्च संस्कारोपस्थापितश्यामतयाऽवभासो यथा तथा निःक्रियस्यात्मनो देशान्तरोपलब्धिलक्षणक्रियावत्सारूप्यान्नीरूपस्यापि संयुक्तसमवायेन रूपसन्निकर्षलक्षणरूपलक्षणवत्सारूप्यात्तथाभास इति । एवमन्यदपि त्रसरेणौ परमाणुरिति । चलत्सु तारकादिषु वायुरयं वातीति जले चलति तत्प्रतिबिम्बितं सतारकं नभश्चलतीत्युदाहरणमूहनीयम् । अनुमानविषयेपीति । अलिङ्गे लिङ्गाभिमानादतथाभूते तथाभूतानुमानमित्यनुमित्याभास इत्यनेकोदाहरणानुगतः सङ्क्षेपः । एवं लौकिकविपर्ययमुक्त्वा परीक्षकं विपर्ययमुदाहरति ।

(१) सदृशवपुरम्बर-पा० ६ पु० ।

येऽपि वाष्पादिभिर्धूमाभिमतैर्वन्ह्यनुमानं गवयविषाणदर्शनाच्च(१) गौरिति । त्रयीदर्शनविपरीतेषु शाक्यादिदर्शनेष्विदं श्रेय इति मिथ्याप्रत्ययः विपर्ययः । शरीरेन्द्रियमनस्स्वात्माभिमानः(२) कृतके

त्रयीति । ऋग्यजुःसाम्नां त्रयं त्रयी सैव दर्शनम् दृश्यतेऽनेन पारलौकिकः पन्थाः । तद्विपरीतेषु तद्विरुद्धेषु शाक्या बौद्धाः । आदिग्रहणाद्दिगम्बरादयः । तेषां दर्शनेषु दर्शनप्रतिरूपकेषु इदं श्रेयः प्रशस्ततरमिति । वस्तुनः प्राशस्त्यस्य सिद्धप्रामाण्यत्रयीसिद्धत्वात् । शरीरेन्द्रियमनःस्वात्माभिमानस्तेषामनात्मत्वस्य प्रत्यक्षसिद्धत्वात् कृतकेषु पृथिव्यादिषु नित्यत्वदर्शनं दृष्टिः कारणवैकल्ये कार्योत्पत्तिज्ञानमकर्तृकं विश्वं मोक्षे सुखं तत्र ज्ञानं चेति हितमुपदिशत्सु वेदवृद्धेष्वहितमिति अहितं चोपदिशत्सु तथैव हितमिति । अथवा वस्तुगत्या यदहितं तद्धितमिति उपदिशत्सु पाखण्डेषु हितमिति ज्ञानमित्यर्थः । इह विभ्रमतो प्रवृत्तिनिवृत्तियोग्यार्थः परिस्फुरतीत्यनुभवसिद्धम् । न चासतो सत्तया स्फुरणे प्रवृत्तिरस्ति तेन ह्यसादिहेदं रजतमित्यवगम्य रजतार्थी प्रवर्त्तत इति सम्भवति । एवं ज्ञानाकारप्रवेदनेपि प्रवृत्त्यनुपपत्तिः । न हि ज्ञानात्मनो रजतस्य बहिर्व्यवहारे सामर्थ्यमस्ति । न चासमर्थस्यानवगतसामर्थ्यस्य वा प्रवृत्तिविषयत्वं ततोऽसता सत्त्वेनासमर्थस्य समर्थत्वेनावभासनं तद्भेदाग्रहो वेति द्वयमवशिष्यते । विचारासहलक्षणानिर्वचनीयख्यातावपि तथा न हि विचारासहमेतद्रजतमित्यवधार्य कश्चित्प्र-

(१) गवये विषाणमात्रदर्शनाच्च—पा० ६ पु० ।
(२) मनस्यात्माभिमानः—पा० ५ पु० ।

नित्यत्वदर्शनं कारणवैकल्ये कार्योत्पत्तिज्ञानं हित-मुपदिशत्स्वहितमिति ज्ञानम् अहितमुपदिशत्सु हि-तमिति ज्ञानम् ॥

---

वर्तते तस्मात्तत्रापि विचारसहत्वेनावभासनं तद्भेदाग्रहो वेति द्वयमेवावशिष्यते । तत्र प्रथमे विपरीतख्यातिपक्षपात एव वादि-नामित्यर्द्धं तावदवसितं भावस्य। द्वितीये तु विचिन्त्यते । अन्यज्ञा-नादन्यत्र प्रवृत्तावतिप्रसङ्गे कः प्रतीकार इति । प्रवर्तकज्ञानसारू-प्यं भेदाग्रह इति चेत् । न निवर्त्तकसारूप्यस्य भेदाग्रहस्या-सम्भवात् । न च सारूप्यादन्यकार्यमन्यः करोति स्फुलि-ङ्गसारूप्यात् खद्योतेनापि दाहप्रसङ्गात् । स्यादेतत् । न व-यमभेदग्रहव्यवहारेङ्गमङ्गीकृत्य सारूप्याद्विभ्रमो व्यवहारयती-त्याचक्ष्महे किन्नाम सर्वत्र भेदाग्रह एव व्यवहारकारणं तत्र पुरोवर्तिज्ञानस्य यदापेक्षितार्थज्ञानं सन्निहितं तदा तद्भेदाग्रहश्च वर्तते यदा तु हेयज्ञानं सन्निहितं तदा तद्भेदाग्रहान्निवर्तते । यदा तु भयज्ञानं सन्निहितं तदा तद्भेदाग्रहो दोलायत इति को-तिप्रसङ्गः । सत्यज्ञानेपि भेदाग्रहादेव व्यवहरतीत्यनियतहे-तुकत्वेन युगपत्प्रवृत्तिनिवृत्ती इति । न । अस्मन्नये अपे-क्षिताभेदग्रहस्यानपेक्षिताभेदग्रहसाहचर्यनियमवत्तवापि नये अपे-क्षितानपेक्षितभेदाग्रहस्य युगनद्धवाहित्वात् । अन्यथा विपर्य-येऽतिव्याप्त्यापत्तेः । इदं रजतमिति ह्यवधारणात्मकं नेदं रजत-मिति नियतानियतम् । तथा च रजताद्भेदस्य ग्रहे विपरीतख्या-तिरापद्यते । न । अरजतात्मनस्तदनात्मनावभासमानत्वात् भेदा-ग्रहमात्रेण निवृत्तेरप्यापत्तिः अनपेक्षितभेदाग्रहस्य निवृत्तिकार-णत्वेनाभ्युपगमात् । नेदं रजतमित्यनपेक्षिताभेदाग्रहो नञर्थ

**अनध्यवसायोऽपि प्रत्यक्षानुमानविषय एव सञ्जायते। तत्र प्रत्यक्षविषये तावत् प्रसिद्धार्थेष्वप्रसिद्धा-**

---

इति त त्कुतो भेदग्रह इति चेत् । न । माभूत् भेदाग्रहस्तावत्तव कंठगतेरपि प्राणैरपरिहेयः तथाप्यनपेक्षिताभेदाग्रहान्न निवर्त्तत इति चेत् । न । यद्येवमपेक्षिताभेदाग्रहात् प्रवर्ततेपीति नायं पन्थाः । न च सर्वत्र भेदाग्रहस्य प्रवृत्तिकारणत्वमभ्युपगच्छतोऽभेदग्रहे किञ्चित् प्रमाणमस्ति । अबाधितसामानाधिकरण्यप्रतीतिरेव प्रमाणमित्यपि वार्तम् । यदाभेदग्रहादेव सामानाधिकरण्यव्यवहारस्तदा कुतोयं विभाग इति चिन्त्यम् । अभेदग्रहस्य व्यवहारानङ्गतया व्यवहारेण व्यवस्थापयितुमशक्यत्वात् । भेदस्य योग्यानुपलब्धिबाधितत्वादिति चेत् अथ कोयं भेदस्य बाधो यद्यनुपलम्भमात्रं नाभेदसिद्धिः तथा भेदप्रतिपत्तिः । तत्र किमस्यां प्रमाणमित्येव चिन्त्यते व्यवहारस्य अन्यथैव सिद्धेरिति कृतं विस्तरेण ॥

संप्रत्यनध्यवसायलक्षणां तृतीयामविद्यामाह। अनध्यवसायो पीति । अनुपलब्धसपक्षविपक्षसंस्पर्शस्य धर्मस्य दर्शनात् विशेषत उपलब्धानुपलब्धकोटिकं ज्ञानमनध्यवसायः । अत एवायं संशयाद्भिद्यते । स ह्युपलब्धसपक्षविपक्षसंस्पर्शधर्मदर्शनादुत्पद्यते उपलब्धाव्यवस्थितकोटिविषय इति लोकप्रसिद्धिः । तदनुसारित्वाच्च परीक्षकाणां तदिदमुक्तं प्रसिद्धार्थे संज्ञितया आत्मादिषु सुप्रसिद्धार्थेषु च सांज्ञितया । पनसादिष्विति । व्यासङ्गात् विषयान्तराकृष्टत्वात् । ननु तथासति तस्मिन् ज्ञानं न जायेतैव न व्यासङ्गशब्देन तत्कार्यस्य विषयान्तरार्थत्वातिशयस्य विवक्षितत्वात् । घटपटोपलंम्भेपि हि घटार्थी घट एव

र्थेषु वा व्यासङ्गादर्थित्वाद्वा(१) किमित्यालोचनमात्रमनध्यवसायः। यथा वाहीकस्य पनसादिष्वनध्यवसायो भवति। तत्र(२) सत्ताद्रव्यत्वपृथिवीत्ववृक्षत्वरूपवत्त्वादिशाखाद्यपेक्षोऽध्यवसायो(३) भवति। पनसत्वमपि पनसेष्वनुवृत्तमाम्रादिभ्यो व्यावृत्तं प्रत्यक्षमेव केवलं तूपदेशाभावाद्विशेषसंज्ञाप्रतिपत्तिर्न भवति। अनुमानविषयेपि नारिकेल(४)द्वीपवासिनः

---

व्यवहरति न पटे। तदिदमुक्तं भवति। अनर्थित्वाच्चेति। विशेषानिश्चयाभावे सतीति शेषः। किमित्यालोचनमात्रमिति। मात्रशब्देन विशेषनिश्चयानात्मकतां दर्शयति। एतदेव स्पष्टयति तत्रेति। विशेषसंज्ञाविनिश्चयो न भवतीति। निश्चयनिषेधेनानिश्चयात्मकता दर्शिता न तु निश्चयाभावमात्रं विशेषनिषेधस्य शेषाभ्यनुज्ञाफलकत्वात्। सामान्येन ह्यनेन निमित्तेन काचिदत्र संज्ञा प्रवर्त्तते इति निश्चितमेवाविशेषात्। का पुन रसौ प्रसिद्धा अप्रसिद्धा चेत्यनध्यवसाय इत्यर्थः। द्वितीयां विधामाह। अनुमानविषयेपीति। नारिकेलद्वीपवासिन इत्यप्रसिद्धगोत्वोपलक्षणपरम्। सास्नामात्रदर्शनादित्यनन्यत्रोपलब्धचेष्टमानावयवविशेषदर्शनोपलक्षणपरं को नु खल्वत्र प्राणी स्यात् प्रसिद्धोऽप्रसिद्धो वेत्यर्थः। यद्यपि को नु खलु स्यादिति जिज्ञासा तथापि तत्कारणेनानिश्चयात्मना ज्ञानेन भवितव्यं प्रथमं न हि निश्चितेर्थे जिज्ञासोत्पद्यते नापि सर्वथै-

---

(१) अनर्थित्वादिति–पा० १। ६। ७ पु०।
(२) तत्र हि–पा० ५। ६ पु०।
(३) वृक्षरूपमस्त्वादिशाखाद्यपेक्षोऽनध्यवसाय एव–पा० ७ पु०।
(४) नारिकेर–पा० १ पु०।

(१)सास्नामात्रदर्शनात् को नु खल्वयं प्राणी स्यादित्यनध्यवसायो भवति ॥

उपरतेन्द्रियग्रामस्य प्रलीनमनस्कस्येन्द्रियद्वारेणैव यदनुभवनं मानसं तत् स्वप्नज्ञानम् । कथम् । यदा बुद्धिपूर्वादात्मनः(२) शरीरव्यापारादहनि खिन्नस्य प्राणिनः(३) निशि विश्रामार्थ(४)माहारपरिणामार्थं चा-

---

वाज्ञात इति ॥

स्वप्नलक्षणां चतुर्थीमविद्यामाह उपरतेति । स्वकार्याद्विरतवदिन्द्रियवर्गस्य प्रलीनमनसो निरिन्द्रियप्रदेशावस्थितान्तःकरणस्येन्द्रियद्वारेणैव यदनुभवनं पूर्वज्ञानप्रत्यवेक्षणैकं ज्ञानं यत्रासत्यपि चक्षुरादिव्यापारे चक्षुषाऽवश्यामिममर्थं पश्यामीमं श्रोत्रेण श्रृणोमीत्यनुव्यवसायः तत् स्वप्नज्ञानम् । अयथार्थत्वेऽप्युपरतेन्द्रियग्रामस्वभावाद्विपर्ययाद्व्यवच्छेदः नियतकोटिकत्वात् संशयानध्यवसायाभ्यामनुभवनमिति स्मृतेः । यद्यपि यथार्थमपि क्वचित् स्वप्नज्ञानं भवति यथाहमिह शय्यायां संविष्टस्तिष्ठामि तथापीन्द्रियद्वारकता तत्र यथार्थैवेति प्रतिपादनार्थमिन्द्रियद्वारेणेत्युक्तम् । इन्द्रियग्रामोपरमार्थं प्रलीनमनस्कस्येति । तदेतत् प्रश्नपूर्वकं विवृणोति कथमित्यादिना । बुद्धिपूर्वकादितीच्छापूर्वकः प्रयत्नो विवक्षितः शरीरव्यापाराच्चेष्टालक्षणात् । अहनीति जागरावस्थोपलक्षणपरम् । खिन्नस्य विश्रान्तस्य ।

---

(१) वने-इत्यधिकं-पा० ५ पु० ।
(२) पूर्वकादात्मनः-पा० ५ पु० ।
(३) खिन्नानां प्राणिनां-पा० ५ । ६ पु० ।
(४) विश्रामार्थ-पा० ६ पु० ।

दृष्टकारितप्रयत्नापेक्षादात्मान्तःकरणसम्बन्धान्मनसि क्रियाप्रबन्धा(१)दन्तर्हृदये निरिन्द्रिये आत्मप्रदेशे(२) निश्चलं मनस्तिष्ठति तदा प्रलीनमनस्क इत्याख्यायते प्रलीने च तस्मिन्नुपरतेन्द्रियग्रामो भवति तस्यामवस्थायां प्रबन्धेन प्राणापानसन्तान(३)प्रवृत्तावात्ममनःसंयोगविशेषात् स्वापाख्यात् संस्काराच्चेन्द्रियद्वारेणैवासत्सु विषयेषु प्रत्यक्षाकारं स्वप्नज्ञानमुत्पद्यते । तत्तु

---

निशीति । शयनकाले विश्रामार्थं परिश्रमोपशमार्थमाहारस्याशितपीतस्य रसादिभावेन परिणामार्थं परिपाकार्थं चादृष्टजनितं प्रयत्ननिमित्तमपेक्षमाणादात्ममनःसम्बन्धात् संयोगादसमवायिकारणान्मनसि समवायिकारणाक्रियाप्रबन्धात् क्रियासन्तानादन्तर्हृदयं प्राप्य तस्मिन्नन्तर्हृदये तस्य विवरणं निरिन्द्रियात्मप्रदेशे निश्चलं निवृत्तपूर्वक्रियासन्तानं तिष्ठति । पुनः सहसैव न चलति । तदेति । ततः किमत आह । तस्यामिति । प्रबन्धेन प्रस्तावेन । अत्राप्यदृष्टकारितप्रयत्नापेक्ष आत्मप्राणसंयोगः कारणमित्यूहनीयम् । प्राणापानसन्तानेति । प्राणनं प्राणोऽपाननमपानः तत्सन्ताने प्रवृत्तावात्ममनसोः संयोगविशेषाददृष्टादिसाचिव्येन संयोगमात्रव्यावृत्तत्वात् स्वाप इत्याख्या यस्य तस्मात् । एतेन शयनपदार्थस्थले न निरुक्त इति मन्तव्यम् । असत्सु विषयेष्विति । अर्द्धरात्रे प्रसुप्तो यानाह्निकानर्था-

---

(१) सम्बन्धा—पा० १ पु० ।
(२) यदा—इत्यधिकं ५ पु० ।
(३) वायुसन्तान—पा० ६ पु० ।

**त्रिविधम् । संस्कारपाटवाद्धातुदोषाददृष्टाच्च । तत्र संस्कारपाटवात् तावत् कामी क्रुद्धो वा यदा यमर्थमादृतश्चिन्तयन्(१) स्वपिति तदा सैव चिन्तासन्ततिः प्रत्यक्षाकारा सञ्जायते । धातुदोषाद्वातप्रकृ-**

---

ननुपश्यति । न च ते तथा वाराणस्यां सुप्तः पाटलिपुत्रे पश्यति । न चासौ पाटलिपुत्रे न च ते वाराणसीयाः । एवमजातानेव जातान् मृतानिव जीवतः यून एव स्थविरानित्यादि । अनेनाविद्यात्वमुपदर्शितम् । सुप्तेष्ववस्थाविशेषे ज्ञानं स्वप्नज्ञानं कर्मधारयपक्षे सुषुप्तत्वानुपपत्तेः । इन्द्रियद्वारेणैव प्रत्यक्षाकारं साक्षात्करोतीति चोपलक्षणं लिङ्गद्वारेणैवानुमित्याकारं क्वचिदित्यपि द्रष्टव्यम् । यथास्मिन्देशे धूमादग्निरित्ययमेवमाहेत्यादि । तस्यान्तर्गणितं भेदमाह तत्तु त्रिविधमिति । यद्यपि सर्वत्र सर्वेषां कारणत्वमस्ति तथाप्यतिशयमाश्रित्य त्रैविध्यं तदाह तत्रेति । कामी क्रुद्धो वा यमर्थं कामिनीमरातिमर्थं वाऽऽदृतः प्रयत्नवान् चिन्तयन् स्मरन् स्वपिति निद्रयाभिभूयते । तदा सैव चिन्तासन्ततिस्तज्जनितः संस्कारसन्तानः कारणशब्दस्य कार्ये उपचारात्, प्रत्यक्षाकारा साक्षात्कारवती एकविषयत्वात् कार्यकारणरूपत्वाच्च संस्कारसन्ततिरेव स्वप्नप्रतीतिरुक्ता । धातुदोषादिति । धातवोऽसृङ्मांसादयः शरीरधारणात् तेषां दूषकत्वाद्दोषाः । वातपित्तश्लेष्माण एव वा धातवः शरीरास्थितिहेतुत्वात् तद्दोषादुपचयलक्षणान् स्वप्नान् पश्यति । तद्विवृणोति । वातेति । स्वभावादेव वाताधिको वातप्रकृतिरित्युच्यते आगन्तुकेन निमित्तेन क्षोभितवातो वातदूषितः आकाशगमनादीनीत्यादिशब्दे-

---

(१) आदृत्य चिन्तयन्–पा० ५ पु० ।

तिस्तद्दूषितो(१) वा आकाशगमनादीन् पश्यति(२)। पित्तप्रकृतिः पित्तदूषितो वाग्निप्रवेशकनकपर्वतादीन् पश्यति। श्लेष्मप्रकृतिः श्लेष्मदूषितो वा सरित्समुद्रप्रतरणहिमपर्वतादीन् पश्यति। यत्स्वयमनुभूतेष्वननुभूतेषु वा प्रसिद्धार्थेष्वप्रसिद्धार्थेषु वा यच्छुभावेदकं गजारोहणच्छत्रलाभादि तत्सर्वं संस्का-

---

नाधःप्रदेशे फलकपर्यभ्रमणभूकम्पादिग्रहणम्। एवं पित्तप्रकृतिः स्वभावत एव पित्ताधिकः पित्तदूषितो वा आगन्तुकेन निमित्तेन अग्निप्रवेशकनकपर्वतादीनीत्यादिग्रहणान्मध्यान्हातपादिग्दाहादिग्रहणम्। तथा श्लेष्मप्रकृतिः स्वभावत एव श्लेष्माधिकः श्लेष्मदूषितो वा आगन्तुकेन निमित्तेन सरित्समुद्रप्रतरणादीनि पश्यति। तृतीयां विधामाह यदिति। स्वयमनुभूतेषु प्राप्तेष्वननुभूतेषु अप्राप्तेषु च प्रसिद्धेष्वर्थेष्विह जन्मनि प्रतीतेषु अप्रसिद्धेषु चेह जन्मन्यप्रतीतेषु मध्ये यत् शुभावेदकं गजारोहणच्छत्रलाभादीत्यादिग्रहणात् पर्वतारोहणपायसभक्षणादीनि, स्वयं प्राप्ते इह जन्मनि प्रतीतेषु मध्ये यत शुभावेदकं गजारोहणच्छत्रलाभादि लब्धविषयं स्वयं प्राप्ते त्विह जन्मन्यनुपलब्धविषयं यत् ब्राह्मणेन पुण्येनागम्यागमनादि इह जन्मन्यप्रतीतविषयन्तु मेरुपृष्ठारोहणदेवतादर्शनमन्दाकिनीविगाहनादि तत्सर्वं संस्कारधर्माधर्माभ्यां यदि पूर्वदिवसे पुराणादिश्रवणमस्याभूत्। तद्विपरीतमशुभावेदकं तैलाभ्यञ्जनोष्ट्रारोहणादीत्यादिग्रहणाद-

---

(१) वातदूषितो—पा० ६ पु०।

(२) धातुदोषाद्वा वातप्रकृतिर्वा वातदूषितो वा आकाशगमनादीनि पश्यति—पा० ५ पु०।

रधर्माभ्यां भवति विपरीतं च(१) तैलाभ्यञ्जनखरो-ष्ट्रारोहणादि तत्सर्वमधर्मसंस्काराभ्यां भवति(२) । अत्यन्ताप्रसिद्धेष्वदृष्टादेवेति । स्वप्नान्तिकं यद्यप्युपरतेन्द्रियग्रामस्य भवति तथाप्यतीतस्य ज्ञानप्रबन्धस्य प्रत्यवेक्षणात् स्मृतिरेवेति भवत्येषा चतुर्विधाऽविद्येति(३) ॥

---

न्धकारपातपङ्कमज्जनादिकं सर्वमधर्मसंस्काराभ्यां यदि पूर्वदिने कथंचिदस्यार्थस्य चिन्तनमभूत् । अत्यन्ताप्रसिद्धेषु आदित्यविगलनादिषु पूर्वश्चारोपतोप्यचिन्तितेषु । संसर्गविषयश्चात्र संस्कारो नेष्यते संसृज्यमानविषयस्त्वस्त्येवेति अत एव स्मृतिरेव पटीयसीति ये स्वप्नं वदन्ति ते मूढमनसोऽनुकम्पनीयाः इदं रजतमिति विपर्ययस्यापि तथाभावापत्तेश्चेति स्वप्नज्ञानमध्ययाति । स्वप्नज्ञानविषयस्य यत् स्मरणन्तदप्युपरतेन्द्रियग्रामस्य प्रलीनमनसो भवति यस्य स्वपीमीतिप्रसिद्धिः । स्वप्नस्यान्तो अवयवविशेषो विषयतया अस्यास्तीति व्युत्पत्त्या तत् कुत्रान्तर्भवति । न तावदविद्यायां यथार्थत्वात् । नापि विद्यायां उपरतेन्द्रियग्रामस्येत्यादिस्वप्नलक्षणायोगात् । अतिव्यापकतया न चेदं लक्षणमित्याशंक्याह । स्वप्नान्तिकमिति । पूर्वज्ञानप्रत्यवेक्षणादसौ मया दृष्टस्तन्मया पायसम्भाक्षितमित्याद्यनुसन्धानाव स्मृतिरेव तल्लक्षणयोगात् । तथा च विद्यायां व्याख्यास्यते ॥ न चैवं स्वप्नलक्षणस्यातिव्याप्तिः । अनुभवमिति विशेषणादिति भावः । उपसंहरति एषेति ॥

---

(१) तद्विपरीतन्तु—पा० ५ पु० ।
(२) भवत्यधर्मसंस्काराभ्यां—पा० ६ पु० ।
(३) भवत्यविद्येति—पा० ५ पु० ।

**विद्यापि चतुर्विधा प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा। तत्राक्षमक्षं प्रतीत्योत्पद्यते इति प्रत्यक्षम्(१)। अक्षाणीन्द्रियाणि घ्राणरसनचक्षुस्त्वक्छ्रोत्रमनांसि षट्।**

सम्प्रति क्रमप्राप्तां विद्यां विभजते विद्यापीति। यथार्था प्रतिपत्तिर्विद्येति सामान्यलक्षणमुक्तम्। सापि चतुर्विधाऽविद्यावदित्यपेरर्थः। किं नामधेयास्ताश्चतस्रो विधा इत्यत आह प्रत्यक्षेति। लक्ष्यते प्रतिपाद्यतेऽनेनेति लक्षणं नाम सा तथोक्ता। किमनपेक्षितावयवार्थाज्ञानेनेत्याह तत्राक्षमक्षमिति। प्रतीत्य प्राप्य अपार्थकश्चैतत् प्रतिगतमक्षं प्रत्यक्षमिति प्रत्यक्षादिर्नाम यस्याः सा तथोक्ता तत् प्रत्यक्षमिति कुगतिसमासः। अव्ययीभावे हि परवल्लिङ्गतायां प्रत्यक्षा बुद्धिरिति न स्यात्। अक्षशब्दस्य पुण्डरीकाक्षादौ चक्षुष्येव प्रसिद्धिप्राचुर्यात्। सङ्कोचो माभूदित्यभिप्रायवानाह। अक्षाणीन्द्रियाणि घ्राणादीनि षट् न त्वेकादश सांख्यवत् पञ्च वा बौद्धवत्। सत्त्वाहङ्कारप्रभवत्वस्य लक्षणत्वस्य लक्षणस्यासिद्धेरहङ्कारादिप्रक्रियाया एवानभ्युपगमात्। इन्द्रस्यात्मन उपकारकाणीन्द्रियाणीत्यस्य शरीरादिगतत्वेनातिव्यापकत्वात्। शरीरसंयुक्तं साक्षात्प्रतीतिसाधनमित्येव तु लक्षणम् बौद्धोपि युगपत् ज्ञानानुपपत्त्या मनोधिकमिन्द्रियमङ्गीकारयितव्यः। अन्यथा व्यासङ्गानुपपत्तेः। ज्ञानान्तरभावाद्व्यासङ्गोपपत्तौ चक्षुरादिकमपि हापयितव्य इति। तदेतद् व्युत्पत्तिनिमित्तं स्मृतिसंशयादिसाधारणत्वात्। उपलक्षणं चैतत् लक्षणं तु यदनेनोपलक्ष्यते साक्षात्कारि यथार्थं ज्ञानं प्रत्यक्षमिति हि तत्। तत्र बुद्ध्याधिकारेण ज्ञानमिति लब्धे अ-

(१) प्रतीत्य यदुत्पद्यते तत्प्रत्यक्षम्–पा० ५ पु०।

**तद्धि द्रव्यादिषु पदार्थेषूत्पद्यते । द्रव्ये तावद् त्रिविधे (१)महत्यनेकद्रव्यवत्त्वोद्भूतरूपप्रकाशचतुष्टयसन्निकर्षाद् धर्मादिसामग्र्ये च स्वरूपालोचनमात्रम्(२) ।**

---

ज्ञानव्यवच्छेदः । विद्याप्रभेदाधिकारात् यथार्थमिति लब्धे अविद्याप्रभेदविपर्ययाद्व्यवच्छेदः इन्द्रियापोद्यत्वेन च साक्षात्कारित्वे लब्धे क्षिप्तं तेनानुमानादित्रयव्यवच्छेदः । न चैवमिन्द्रियतत्संयोगाव्याप्तिर्दोषाय । न ह्यत्र प्रत्यक्षं प्रमाणमधिकृतमपि तु बुद्धिप्रसङ्गात् यदि तदपि अपेक्षितं तदा तत्साधनमिति गृह्यताम् । तदेतद्विषयतः कारणतः स्वरूपभेदेन प्रपञ्चयति तद्धीति । हिशब्दः स्वल्वर्थः । स्पष्टतामाह । द्रव्यादीति । विषयीकृत्य स्पष्टमुत्पद्यत इति लोकप्रसिद्धमेतन्नाप्रत्यक्षमित्यर्थः । तदेतदनुपदमेव वक्ष्यति इत्येतदस्मदादीनामिति । द्रव्ये तावत् त्रिविधे पृथिव्यामप्सु तेजसि चेत्यर्थः । किमविशेषात्सर्वत्र नेत्याह । महति महत्त्ववति तेन महत्त्वस्य द्रव्यग्रहणकारणत्वमुक्तम् । अकारणत्वे तत्प्रकर्षानुविधानानुपपत्तेः । न ह्यकारणस्य प्रकर्षमकार्यमनुविधत्ते न च परिमाणप्रकर्षः कारणसंख्याप्रकर्षमनादृत्य सम्भवति । तत्र परिमाणप्रकर्षोत्पादद्वारेण तस्यापि प्रत्यक्षकारणत्वमस्ति तदाह अनेकद्रव्यवत्त्व इति । अनेकं द्रव्यमारम्भकं येषामवयवानां तेऽनेकद्रव्या अवयवास्तद्वत्त्वमनेकद्रव्यवत्त्वं च स्वभावं प्रकाशस्यालोकः तैः सहिताः, चतुष्टयसन्निकर्षात् आत्मा मनो बहिरिन्द्रियं ग्राह्यं च द्रव्यमिति चतुष्टयसंयोगात् धर्म्मादिसामग्र्ये सति ध-

---

(१) पृथिव्युदकज्वलनसञ्ज्ञके—इत्यधिकं—५ पु० ।

(२) प्रत्यक्षमित्यधिकम् ६ पु० ।

**सामान्यविशेषद्रव्यगुणकर्मविशेषणापेक्षादात्ममनः(१)सन्निकर्षात् प्रत्यक्षमुत्पद्यते सद् द्रव्यं पृथिवी विषाणी शुक्लो गौर्गच्छतीति। रूपरसगन्धस्पर्शेष्वनेकद्रव्यसमवायात् स्वगतविशेषात् स्वाश्रयसन्निकर्षान्निय-**

---

र्माधर्मौ दिक्कालावीश्वरश्चेति साधारणानि निमित्तानि तेषां समग्राणां भावे सति स्वरूपस्यालोचनं निर्विकल्पकं प्रत्यक्षं साक्षात्कार्य्युत्पद्यत इति भाविनासम्बन्धः । नन्वेतत् स्वचरितविरुद्धं सामान्यज्ञानं द्रव्यज्ञानं गुणज्ञानमिति पूर्वपूर्वापेक्षमुत्तरोत्तरमिति द्वित्वादौ व्युत्पादितं यत्र तु द्रव्यज्ञानमेव प्रथमत इत्याशङ्क्याह सामान्येति। विशेष्यज्ञानमधिकृत्य तदुक्तं नालोचनमधिकृत्यालोचनकाले सर्वेषां योग्यदेशस्थानान्तदुपलब्धिसामग्रीसन्निधाने स्फुरणस्येष्यमाणत्वात् विशेष्यज्ञानं प्रति हि विशेषणज्ञानं कारणं न हि दृढत्वमनुपलभ्य कश्चिद्दण्डीति प्रत्येति स्वरूपन्तु दण्डीप्रतीतावपि गृह्यत एवेति भावः। न च समवायिनो धर्मा द्रव्यस्य व्यञ्जका इति नियमो गोत्वाद्यप्रतीतावपि तदाश्रयस्य प्रतीतेः। अन्यथा संशयाद्यनुपपत्तिप्रसङ्गात् । योपि रूपादिर्व्यंजकः सोपि सत्तया न तु स्वज्ञानेन महारजताद्यभिभूते धवलिम्नि पटस्य प्रतीतेरिति । तथापि सविकल्पकोत्पत्तावपि इन्द्रियार्थयोः सामर्थ्ये निर्विकल्पकसमसमयमेव तदुत्पद्यते असामर्थ्ये पश्चादपि नोत्पद्यत इत्यत्राप्येतदेवोत्तरं सामान्यविशेषेत्यादि न हि कार्यविशेषानुविहितभावाभावं सहकारिविशेषमपेक्ष्यमाणस्य सामर्थ्यं हीयते । तथा च घटस्यालोचनेपि चक्षुषः प्रकाशापेक्षितया शक्तिरवसीदते। ननु वि-

---

(१) आत्ममनसोः-पा० ६ पु०।

शिष्टं वस्तु नास्त्येव स्वरूपतोऽधिकं सामान्यादीनां कल्पितत्वात् व्यावृत्तेश्च व्यावृत्तिमतोऽनन्यत्वात् तुच्छत्वाच्च । ततस्तैमिरिककेशज्ञानवत् वस्त्वननुरोधितया न सविकल्पकज्ञानं प्रत्यक्षम् अत्राप्येतदेवोत्तरं सामान्येति । स्थैर्यसिद्धौ सामान्यादीनां विशेषणानां व्यावृत्तेश्च विशिष्टताया अविरोधेनानुभवासिद्धत्वात् । अन्येषां च बाधकानां निराकृतत्वात् निराकरिष्यमाणत्वादिति भावः । एतेन प्रत्यक्षं यत्तदभिलापसंसर्गयोग्यप्रतिभासं यथा निर्विकल्पकं यदभिलापसंसर्गयोग्यप्रतिभासं तत्प्रत्यक्षं यथा शाब्दलैङ्गिकविकल्पाविति प्रत्यक्षविपर्ययौ प्रत्याख्यातौ वेदितव्यौ अभिलापनिमित्तानां सामान्यादीनां परमार्थसत्त्वे प्रत्यक्षाभिलापसंसर्गयोग्यप्रतिभासत्वयोरबाधात् ? न च निर्विकल्पकस्य प्रत्यक्षत्वप्रयुक्ताभिलापसंसर्गयोग्यप्रतिभासत्वमपि तु तथा प्रतिभाससामग्रीविरहप्रयुक्तम् । नाप्यभिलापसंसर्गयोग्यप्रतिभासप्रयुक्तमप्रत्यक्षत्वं शाब्दलैङ्गिकविकल्पानाम् अपि त्वनिन्द्रियकरणत्वप्रयुक्तमिति त एवान्यौपाधिकमस्य साक्षात्कारत्वं मुख्ये बाधकाभावात् । तद्वत्त्वेनाननुभवाच्च बाधकं विनाप्यनुभयमानस्यावधारणेऽतिप्रसङ्गात् । तदिदमुक्तम् प्रत्यक्षमुत्पद्यत इति । न च साक्षात्कारित्वेऽपि भ्रान्तत्वादस्य प्रत्यक्षाभासत्वमिति युक्तम् । तद्धि न देशकालाकारकृतं जात्यादियोजनायां सम्भवति गेहस्थस्य मणेः क्वचित् वस्तुत्वबेद्देशान्तरस्याभावादर्धरात्रस्थस्य मध्याह्नोपलम्भवत् कालवैकल्यानुपपत्तेः पीतशङ्खवत् स्वरूपविपर्ययानुपपत्तेः अस्थिरस्य स्थिरत्वेनासमर्थस्य समर्थत्वेनास्थूलस्य स्थूलत्वेनावभासो विकल्प इति तु स्वप्नदर्शनम् क्षणभङ्गस्य भङ्गादपोहवादस्यापोह्यत्वादवयव्युपद्रवाणां विद्रावणादिति । नापि डित्थोऽयमित्यादिनामयोजनायामनर्थात्मनः शब्दस्य तदर्थतयावभास-

तेन्द्रियानिमित्त(१)मुत्पद्यते। शब्दस्य त्रय(२)सन्निकर्षा-नादभ्रान्तत्वसम्भवात्। न हि डित्थोयण्डित्थशब्द इति कश्चिदुपदिशति अपि तु डित्थशब्दवाच्य इति। न चैतदन्यथा। अथ श्रौत्रस्य शब्दस्य चिरध्वस्तस्य चाक्षुषे विकल्पे कथमवभासो विभ्रमादन्यत्र न चाक्षुषोयमिति न कथंचित्तटस्थ एव तु स्मर्यमाणः संज्ञिनमुपलक्षयतीति न किंचिदनुपपन्नमिति। न चैवं शाब्दादिस्मृतेरिन्द्रियव्यापारव्यवधायकत्वसहकारित्वाद्व्यवधायकत्वानुपपत्तेः। तथात्वे चातिप्रसङ्गादिति संक्षेपः। सामान्यान्येव परस्परतो विलक्षणत्वात् विशेषाः सामान्यविशेषाः। द्रव्यं च गुणकर्म च तान्येव विशेषणानि व्यवच्छेदकानि। तदपेक्षादात्ममनःसंयोगादित्येकदेशोत्कीर्तनेन सर्वमेव पूर्वोक्तं स्मारयति। उदाहरति। सदिति। सत्ताविशिष्टं, द्रव्यमिति द्रव्यत्वविशिष्टं पृथिवीति पृथिवीत्वविशिष्टं विषाणीति विषाणद्रव्यविशिष्टं शुक्ल इति शुक्लगुणविशिष्टम् गौरिति गोत्वविशिष्टं गच्छतीति क्रियाविशिष्टम्। अथवा सदित्यादि सामान्यद्रव्यगुणकर्मविशिष्टं गोद्रव्यावगाह्येकमेवेदं ज्ञानमिति। एवं प्रत्यक्षं द्रव्यस्य व्याख्याय गुणस्याह। रूपेति। अनेकद्रव्यवद्द्रव्यसमवायान्महत्त्ववद्द्रव्यसमवायात्। स्वगतविशेषादुत्तरसमाख्यातात् सामान्यविशेषात् स्वाश्रयसन्निकर्षात् इन्द्रियेण संयुक्तसमवायादिति यावत्। नियतमिन्द्रियं निमित्तं यस्य चक्षुरेव रूपज्ञानस्य रसनमेव रसनज्ञानस्य घ्राणमेव गन्धज्ञानस्य त्वगिन्द्रियमेव स्पर्शज्ञानस्य तथोक्तम्। शब्दस्य त्रयसन्निकर्षात् आत्ममनःश्रोत्रसन्निकर्षात् संयोगलक्षणात् श्रोत्रसमवेतस्य तेनैव श्रो-

(१) निमित्तज्ञानमुत्पद्यते–पा० ५। ६ पु०।
(२) तु त्रितयसन्निकर्षात्–पा० ५। ६ पु०।

च्छ्रोत्रसमवेतस्य तेनैवोपलब्धिः । संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वस्नेहद्रवत्ववेगकर्मणां प्रत्यक्षद्रव्यसमवायाच्चक्षुः(१)स्पर्शनाभ्यां ग्रहणम् । बुद्धि-

---

त्रेणैवोपलब्धिः संख्यादीनान्द्रव्यग्रहणयोग्यतान्तर्भूतयोग्यतानां द्रव्यवद्ग्राह्यामिन्द्रियाभ्यामुपलब्धिरित्याह संख्येति । तदुक्तं प्रत्यक्षद्रव्यसमवायादिति । सामान्यगुणानां स्नेहस्य विशेषगुणस्य कर्मणश्च कर्मप्रत्यक्षमित्येके न क्षमन्ते । संयोगविभागपरंपरैव केवलमुपलभ्यते यः पुनरयं चलतीति प्रत्ययः संयोगविभागानुमितकर्मगोचर इति तदसत् सिद्धे ह्यप्रत्यक्षप्रत्यक्षत्वे तत्प्रत्ययस्यान्यथासमर्थनमुचितम् यथा वायोर्न त्वन्यथातिप्रसङ्गात् । तदेव तु कुतः सिद्धमिति वाच्यम् न तावदनुपलब्धेरेव तस्याः साध्यत्वात् नाशुतरविनाशित्वादिति व्यभिचारात् । नापि समनन्तरदेशसंयोगव्यवहितत्वात् विभागेन व्यभिचारात् । न परमाणुवृत्तित्वात् तत एवासिद्धेश्च । महति द्रव्येऽतिवर्तमानं तत्प्रत्यक्षमिष्यते न परमाणौ । यदि तत्प्रत्यक्षमेकस्यामपि कर्मव्यक्तौ व्युत्पन्नायां चलतीति प्रत्ययः किं न स्यादिति चेत् न संयोगविभागयोरपि तुल्यमेतत् । तथा च कथमनुमीयेतापि । कर्मत्वादेव परमाणुकर्मवदिति चेत् न परमाणुगुणदृष्टान्तेन सर्वगुणानामप्यतीन्द्रियत्वापातात् । आश्रयामहत्त्वमेव तत्प्रयोजकं न परमाणुगुणत्वमतो रूपादिप्रत्यक्षस्यानन्यथासिद्धेस्तद्बाध एव दूषणमिति चेत् । तुल्यमिति । यदि च पूर्वदेशविभागोत्तरदेशप्राप्तिपरम्परया गतिरनुमीयते आदित्यादेरिव सर्वत्र चलतीति प्रत्ययो न स्यात् । न ह्युपलभ्यमानदेशान्तर-

---

(१) समवायादाश्रयद्रव्यवच्चक्षुः–पा० ५ पु० ।

सुखदुःखेच्छाद्वेषप्रयत्नानां द्वयोरात्ममनसोः संयोगादुपलब्धिः(१) । भावद्रव्यत्वगुणत्वकर्मत्वादीनामुप-

---

प्राप्तिरपि मयूखमाली चलतीति कश्चित्प्रत्येति । तत्र देशान्तरप्राप्तिर्न प्रतीयत एव । देशान्तरस्यैवाकाशादेरप्रतीतिरिति चेत् न तर्हि सन्तमसे खद्योतस्यापि देशान्तरप्राप्तिरवसीयते तथा च गतिरपि नानुमीयेत । तस्य भागैरेव संयोगविभागाः प्रतीयन्त इति चेत् । गभस्तिमालिनोप्येवमस्तु । तदालोकस्य व्यापकत्वात् न तेन संयोगविभागौ लक्ष्येते इतिं चेत् । अव्यापकेनापि खद्योतालोकेन तस्य तौ न लक्ष्येते । घनोदकवत् युगपत् संचारित्वात् अवयवावयवितया संयोगविभागासम्भवाद्वा देशान्तरस्य चाकाशादेरनुपलब्धिरुभयत्रापि तुल्येति । अथ द्रव्यत्वे चाविशिष्टत्वे व्यवधानाद्यनुपपत्तौ अचलनचक्षुषोपलब्धावनुपलभ्यमानत्वाद्देशान्तरप्राप्तिमनुमाय तया गतिरनुमीयते इति मन्यसे तदेतदुभयत्रापि तुल्यं कथमेकत्र चलत्यन्यत्र चलतीतिप्रत्यय इत्येषा दिक् । बुद्ध्यादीनामान्तराणां प्रत्यक्षतामाह बुद्धीति । द्वयोरात्ममनसोः सन्निकर्षात् संयोगात् आत्मसमवेतानामिति शेषः । तत्र बुद्धौ केचित् स्वसंवेदनं प्रत्यक्षमाहुः । अन्ये त्वप्रत्यक्षैव बुद्धिः प्राकट्यानुमेयेत्याचक्षते उभयत्रापि प्रमाणाभावः । बुद्धिः स्वव्यवहारे वेदनान्तरानिरपेक्षा वेदनत्वात् । यत्तु पुनः स्वव्यवहारे वेदनान्तरापेक्षं न तद्वेदनं यथा पटादीति चेत् न । परेण परवेदनव्यवहारे कर्तव्ये वेदनस्यापि वेदनान्तरापेक्षत्वेन बाधितत्वात् । तत्परिहारेणान्यत्र साधने विपक्षगामितया विरुद्धत्वाच्च ।

---

(१) सन्निकर्षादुपलब्धिः--पा० ५ पु० ।

लभ्याधारसमवेतानामाश्रयग्राहकै(१)रिन्द्रियैर्ग्रहणमित्येतदस्मदादीनां प्रत्यक्षम्। अस्मद्विशिष्टानान्तु योगि-

---

एतेन स्वव्यवहारे सर्वे सजातीयापेक्षा यथा घटो घटव्यवहार इत्यादि निरस्तं वेदितव्यम् । अनवस्थाप्रसङ्गस्त्ववश्यवेद्यत्वानभ्युपगमेन निरसनीयः । प्रकाशत्वादित्यसाधारणमसिद्धं वेति । विवादाध्यासितवेदनं वेदनान्तरगोचरः वेदनत्वात् पुरुषान्तरवेदनवत् अवेदने तद्व्यवहाराविलोपप्रसङ्गः । स्वयमेव वेदने पुरुषान्तरवेदनेपि च वेदनान्तरापेक्षत्वप्रसङ्ग इति । कार्यलिङ्गानुमेयत्वे तदसिद्धिप्रसङ्गः वेदनप्राकट्यव्यवहारयोरुपपत्तेरिति संक्षेपः । भावेति । भावः सत्ता तेषां सामान्यानामुपलभ्याधारसमवेतानामिति । आश्रययोग्यतान्तर्भूतयोग्यत्वममीषां दर्शयति । अन्यथा परमाण्वादिष्वपि सत्तादिकं प्रत्यक्षमापद्येत स्वरूपयोग्यताया अविशेषात् । अयोग्यत्वे घटादावनुपलब्धिप्रसङ्गात् अत एवाह स्वाश्रयग्राहकैरिन्द्रियैरिति । तत्र सत्तायां गुणत्वेन सर्वेन्द्रियजज्ञानं द्रव्यत्वसंख्यादिसामान्ये त्वैन्द्रियं पृथिव्यादिषु त्वैन्द्रियकं रूपादिषु नियतेन्द्रियनिमित्तं बुद्धित्वादौ मानमिति । द्रव्ये संयोगात् रूपादिषु बुध्यादिषु च संयुक्तसमवायात् । रूपत्वादौ संयुक्तसमवेतसमवायात् । शब्दत्वादिषु समवेतसमवायात् किमनेन प्रपञ्चेन इन्द्रियेण स्वाश्रयसन्निकर्षात् देवगुणादीनां ग्रहणादीनां ग्रहणादिति केचित् । स्वाश्रयसन्निकर्षादिति कोर्थः । तत्समवेतस्येन्द्रियेण सन्निकर्षादिति । तदेवं विषयविवर्लक्ष्मीमपरीधानमनुहरति । वयं हि ब्रूमो यदिन्द्रियेण सन्निकृष्टं

---

(१) स्वाश्रयग्राहकै-पा० ६ पु० ।

नां युक्तानां योगजधर्मानुगृहीतेन मनसा(१) स्वात्मा-न्तराकाश(२)दिक्कालपरमाणुवायुमनस्सु तत्समवेत(३)-गुणकर्मसामान्यविशेषेषु समवाये चावितथं स्वरूपदर्शं-

तत्समवायादिति । अभावस्य तु योग्यप्रतियोगिनो विशेषणभावादिति चानुक्तमपि लभ्यते तत्र तत्र विशिष्टस्यापदादित्यभिप्रायवानुपसंहरति इत्येतदिति । अयोगिनामित्यर्थः । योगिप्रत्यक्षमाहात्म्यद्विशिष्टानामिति । विवरणं योगिनामिति ध्यानिनामित्यर्थः । ते च द्विविधाः । युक्तवियुक्तभेदात् । तत्र युक्ता इन्द्रियेभ्यः प्रत्याकृत्य साक्षात्कर्त्तव्यवस्तुन्यादरेण मनो विधायाप्रवर्त्तमानचिन्तासन्तानाः वियुक्तास्त्वत्यन्ताभ्यासेन परमवशीकारमापन्नाविगतावरणाः सर्वतः प्रद्योतमानसो निरवशेषिताभ्यासाः । तत्र युक्तानां समाधिस्थानां योगजधर्मानुगृहीतेन मनसेति । आभ्यासिकस्य संस्कारप्रचयस्य कर्मान्तरकामिनीज्ञानसाधारण्येन प्रत्यक्षैकहेतुता । नापि प्रमाणपरिगृहीतार्थविषयत्वं भावनाया विशेषः धूमेन पर्वतनितम्बवर्तिनाग्निमनुमाय शीतार्तस्य ध्यायत इन्धननिवृत्तौ निवृत्तेपि दहने तत्साक्षात्कारस्य प्रत्यक्षतापत्तेः । अत उक्तं योगजधर्मानुगृहीतेनेति । योगाच्च धर्मो जायत इत्यत्र योगविधय एव प्रमाणम् तेषां कर्मविधितुल्ययोगक्षेमत्वात् । तेनानुग्रहः सहकारिता । अस्मिन्नात्मनि ततोन्यास्मिन्वात्मान्तरे आकाशे दिशि काले वायौ परमाणुषु चतुर्विधेषु मनःसु तत्समवेतेषु यथासम्भवं गुणेषु कर्मसु सामान्येषु विशेषेषु समवाये चावि-

(१) योगजधर्मानुपगृहीतेन मनसा–पा० ६ पु० ।
(२) आत्मनि आत्मान्तराकाश–पा० ६ पु० ।
(३) तत्समवेतेषु च–पा० ५ पु० ।

नमुत्पद्यते। वियुक्तानां(१) पुनश्चतुष्टयसन्निकर्षाद्योगजधर्मानुग्रहसामर्थ्यात् सूक्ष्मव्यवहितविप्रकृष्टेषु(२) प्रत्यक्षमुत्पद्यते(३)। तत्र सामान्यविशेषेषु स्वरूपालोचन-

तथं सत्यमस्य विवरणम् अरूपदर्शनमिति। यद्यप्यर्थोऽस्मदादीनां कदाचित् विगलितशरीरादिमिश्रीभावः क्षणमात्रमागत्येव ? । तथापि बलवदविद्यासंस्कारमध्यपतितमेतद्विज्ञानं प्रतिपक्षकक्षाप्रवेशेन वशीकृतशरीरं ज्ञानकलापकवलितायां भूमाविव कलमबीजं संस्काराङ्कुराय न कल्पत इत्यसत्कल्पतया अपेक्ष्य योगिप्रत्यक्षे दर्शितमित्यवधेयम् । वियुक्तानामाह । वियुक्तानां पुनरिति । न हि समाधयः समाधिप्रभावाद्विकरणधर्मा गोणिमाद्याः कार्यसिद्धीर्दूरश्रवणाद्याश्चेन्द्रियसिद्धीरासादितवन्तः तथा च तेषां चक्षुरादिनैव स्पृष्टेऽपि परमाण्वादौ व्यवहिते नागलोके देशविप्रकृष्टे सुरसदनादिके कालविप्रकृष्टे अतीतादिके मनसा योगजधर्मानुग्रहरूपात्सामर्थ्यात् ज्ञानमुत्पद्यत इति चतुष्टयसन्निकर्षादित्यनेनेन्द्रियसन्निकर्षजत्वमुपलक्ष्यते। प्रमाणं तु योगिप्रत्यक्षे स्वर्गापूर्वदेवतादयः कस्यचिन्न प्रत्यक्षाः प्रमेयत्ववस्तुत्वसत्त्वादिभ्यः पटवदिति विपक्षबाधके तदनुविधिवैयर्थ्यप्रसङ्गः । ननु प्रयोजकं सर्वमेतत् स्वकारणसामग्रीसंभवप्रयुक्तिकार्यं न तु विषयधर्मप्रमेयत्वादिमात्रं न हि प्रमेयत्वात् पार्थिवाः परमाणव आप्यद्रव्याश्रयाः तत्परमाणुवत् । नापि रसादयः चाक्षुषाः प्रमेयत्वाद्रूपादिवदिति शक्यम् । न च प्रत्यक्षादिषु प्रत्यक्षसामग्री सम्भवति । चक्षुरादीनां सम्बद्धवर्तमान-

(१) विमुक्तानां तु—पा० ५ पु० । विमुक्तानां च—पा० ६ पु० ।
(२) अर्थेषु—इत्यधिकं पु० ।
(३) ज्ञानम्—इत्यधिकं ५ पु० ।

मात्रं प्रत्यक्षं प्रमाणं प्रमेया द्रव्यादयः पदार्थाः प्रमा-

---

प्रतिनियतविषयत्वात् मनसश्च बहिरस्वातंत्र्यात् । कर्मान्तर-स्वप्नकामिनीज्ञानादौ चक्षुराद्यनपेक्षस्यापि मनसः स्वातन्त्र्यमुपलब्धमिति चेत् । न । तस्य स्वप्नवहनाडीसिद्धोपघातेन विसतत्वात् । ननु विष्णुं ते साक्षात्कारेपि क्वचिन्मनसो बहिः स्वातन्त्र्यमधिगतन्तथा सत्यनुबाधिराद्यभावप्रसङ्गादिति । अत्रोच्यते । न तावद्दृष्टं कारणमनादृत्य स्वर्गादौ प्रत्यक्षं साध्यतां येनाप्रयोजकत्वमाशङ्क्येत किन्तु कारणपुरस्कारेणैव मनसश्च यथा सिद्धोपघातापेक्षस्य बहिरुपप्लवजनकत्वान्नानुबधिराद्यभावप्रसङ्गः तथा योगजधर्मानुगृहीतस्य बहिरनुपप्लवजननेपि सिद्धोपघातादेवान्वयव्यतिरेकाभ्यां मनःसहकारित्वमुपप्लवैव गतिः योगजस्यापि धर्मस्य तद्विधेरनुपप्लव इति न कश्चिद्विशेषः । अप्रामाण्ये वा पुराणादीनां कर्मविधिष्वपि कः समाश्वास इति । यत्तु पार्थिवाः परमाणवः आप्याश्रयद्रव्याश्रया इति किं न साध्यते इत्युक्तं तत्र प्रतिज्ञापदव्याघातनिरस्ततया कथं साध्यताम् । तथाहि यदि पृथिवीकार्यानुमितास्ते कथमाप्यद्रव्याश्रयाः अथाप्यद्रव्याश्रयाः कथं पार्थिवाः । मूर्त्तानां समानदेशताविरोधात् । तेषामारम्भकत्वस्य विजातीयानारम्भकत्वानियतस्यैव धर्मिग्राहकप्रमाणसिद्धेस्तत्साधने बाधनाच्च । एवं रसादयः कस्यचिच्चाक्षुषा इत्यत्रापि रसादिषु मध्ये रूपैकव्यञ्जकमिन्द्रियं चक्षुरिति मतं रूपस्य व्यञ्जकमिति वा यदि हि रसादिषु मध्ये रूपमात्रग्राहकं चक्षुः कथं तद्ग्राह्या रसादयोऽस्य तद्ग्राह्या रसादयः कथम् । तद्रूपमात्रग्राहकमिति द्वितीये सिद्धसाधनं मनसः सर्वविषयत्वादिति । न चैवं त-

त्मा प्रमितिर्द्रव्यादिविषयं ज्ञानम् । सामान्यविशेष-

---

त्रापि व्याघातः स्वर्गादीनामतीन्द्रियत्वेनैव सिद्धेः । तथा च स्वर्गादयः कस्यचित् प्रत्यक्षा इत्यतीन्द्रिया ऐन्द्रियका इत्युक्तं भवति । न । प्रतिपक्षभेदेनाविरोधात् । न हि बुध्यादयो अप्रत्यक्षा इति स्वयमेषां प्रत्यक्षत्वं विरुध्यते । तथापि योगिनो नातीन्द्रियार्थदर्शिनः प्राणित्वादस्मदादिवत् । तद्बुद्धिरपि न परमाण्वादिविषया बुद्धित्वादिति । तदिन्द्रियं नातीन्द्रियार्थविषयमिन्द्रियत्वादस्मदादीन्द्रियवत् इत्यादीनां प्रतिपक्षसाधनानां का गतिरिति चेत् मीमांसागुरवो मीमांसानभिज्ञाः प्राणित्वात् । तद्बुद्धिर्न वेदार्थविवेकवती बुद्धित्वात् । तन्मनो न तद्विषयमिन्द्रियत्वात् । त एव दृष्टान्ताः इत्येषां का गतिरिति संक्षेपः । ननु प्रत्यक्षमिति प्रमाकरणविशेष इति प्रसिद्धम् । तत्कतमदत्र प्रमाणं किं वास्य फलमित्यभिसन्धाय प्रमाणफलविभागमाह । तत्रेति । तेषु साक्षात्कारिषु समीचीनज्ञानेषु मध्ये सामान्यविशेषेषु द्रव्यगुणकर्मसमवेतेषु स्वरूपालोचनमात्रं सविकल्पकं प्रत्यक्षं प्रमाणं प्रमीयतेऽनेनेति व्युत्पत्त्या प्रमेया द्रव्यादयः पदार्था यथायथं सर्व एव परिच्छेद्या विज्ञेया इति यावत् । प्रमाता परिच्छेत्ता आत्मा यथासम्भवं योगी चायोगी च । प्रमितिर्द्रव्यादिविषयं ज्ञानं सम्यक् निश्चयः । अत्र प्रमाकरणमिति प्रमाणलक्षणं प्रमाणविषय इति प्रमेयस्य प्रमाश्रय इति प्रमातुः सम्यगनुभूतिरिति प्रमायाः । साक्षात्कारित्वेन विशेषितमेतदेव प्रत्यक्षप्रमायाः । नन्वेवंलक्षणकतया सामान्यविशेषज्ञानमपि प्रमितिः तथा च तत्र किं प्रमाणमत आह । सामान्येति । अविभक्तं ज्ञानाविशिष्टं शुद्धमिति यावत् । किं तदालोचनमात्रं आलोच्यते-

ज्ञानोत्पत्तावविभक्त(१)मालोचनमात्रं प्रत्यक्षं प्रमाणम् अस्मिन्नान्यत्प्रमाणान्तर(२)मास्त अफलरूपत्वात्(३)। अथवा सर्वेषु पदार्थेषु चतुष्टयसान्निकर्षादवितथमव्यपदेश्यं यज्ज्ञानमुत्पद्यते तत्प्रत्यक्षं प्रमाणम् प्रमेया

---

नेनेत्यालोचनमिन्द्रियार्थसन्निकर्षः स एव मात्रा शरीरं यस्य तत्तथोक्तं तत्प्रत्यक्षं प्रमाणमस्मिन् साध्ये नान्यत्प्रमाणमपि कुतः तस्याफलरूपत्वात्। प्रमारूपं फलं यत्तन्न भवतीत्यर्थः। प्रमा हि प्रमाणसाध्या न तु कार्यमात्रं कारणान्तरन्तु तदपेक्षत इति। न चैवमनवस्था दोषाय अनादित्वादिति। प्रमाणफलविभागे प्रमाणान्तरमाह। अथवेति। वाशब्दः समुच्चये न तु विकल्पे(४) द्व्यादिज्ञानोत्पत्तावपि द्रव्यादिज्ञानं प्रमाणमिति वाक्यार्थः। तदेवाह सर्वेषु पदार्थेषु द्रव्यादिष्व(५)वितथं संशयविपर्ययरहितम् अव्यपदेश्यं शब्दाजन्यं यत्परिज्ञानं जायते तत्प्रत्यक्षं प्रमाणम्। प्रमाकरणं शब्दाजन्यमिति तु न सविकल्पकव्यवच्छेदार्थं किन्तु अव्युत्पन्नस्य सन्निहितेष्वर्थे व्याप्रियमाणे चक्षुपि शब्दश्रुतेरनन्तरं यद्वारिति तत्र ज्ञानं जायते तत्र रेखोपरेखाद्यर्थं प्रत्यक्षोपयोगोपि(६) शब्दस्यैव कारणत्वात् तद्व्यवच्छेदार्थमिति द्रष्टव्यम्। तस्य फलमाह प्रमितिरिति। किं पुनस्तदि-

---

(१) अवियुक्त-पा० ५ पु०।

(२) न च तस्मिन्नन्यत्प्रमाणान्तर-पा० ५ पु०।

(३) अफलस्वरूपत्वात्-पा० ५ पु०।

(४) न विकल्पे-पा २ पु०।

(५) द्रव्यादिषु विषयेषु-पा० २ पु०।

(६) रेखोपरेखादिष्वक्षोपयोगेपि-पा० २ पु०।

द्रव्यादयः पदार्थाः प्रमातात्मा प्रमितिर्गुणदोषमाध्यस्थ्यदर्शनमिति ॥

लिङ्गदर्शनात् सञ्जायमानं लैङ्गिकम् । लिङ्गं पुनः ।

अत आह गुणेति । गुणदर्शनमुपादेयत्वज्ञानं दोषदर्शनं हेयत्वज्ञानं माध्यस्थदर्शनं न हेयं नोपादेयमिति ज्ञानम् । यद्यपि चैतत्पदार्थस्वरूपबोधमात्रेण स्फुरति । तथापि तज्जातीयत्वलिङ्गदर्शनप्रभवतया तस्य च प्रत्यक्षफलतया पारम्पर्येणैतदवगन्तव्यम् ।

प्रत्यक्षानन्तरमुद्देशक्रमानुरोधेनानुमानलक्षणं व्याख्यातुमारभते लिङ्गदर्शनादिति । द्विविधः खल्वयमनुमानशब्दो भावसाधनः करणसाधनश्च । अनुमितिरनुमानम् । अनुमीयतेऽनेनेति चानुमानम् । तत्र यद्यपि प्रमाणत्वेन करणस्वरूपमेव व्युत्पादयितुमभिमतं तथापि करणस्य कारकविशेषतया तस्य क्रियासम्बन्धोपहितसंमततया अनुमितिरूपक्रियास्वरूपोपदर्शनेनैतदुपदर्शितं भवतीति भावप्रधानमेव निष्कृष्य व्याख्यातवान् । लिङ्गदर्शनात्संजायमानं लैङ्गिकं लिङ्गजन्यमनुमितिरूपं फलमित्यर्थः । बुद्ध्यधिकारात् ज्ञानफललाभे लिङ्गदर्शनजन्ये तद्गोचरसंस्कारे नातिप्रसङ्गः(१) । दर्शनं ज्ञानं तथाच दृष्टादनुमितात् स्मृताच्च लिङ्गादित्यर्थः । एतावांस्तु विशेषो वैशेषिकनये शब्दादीन्यनुमानशरीर एवान्तर्भवन्तीत्यनुमितानुमानमेव तत् सर्वमिति । संशब्देन चासम्यगर्थानां संशयविपर्ययस्मृतीनां व्युदासः । स्मृतिरपि यथानुभवा न तु यथार्थेति वक्ष्यमाणत्वात् । सञ्जायमानमिति वर्तमानोपदेशस्यापि यथार्थत्वोऽदर्शन एव तात्पर्यम् ।

(१) ज्ञानफललाभः तेन लिङ्गजन्यतद्गोचरसंस्कारे नातिप्रसक्तिः–पा० २ पु० ।

यदनुमेयेन सम्बद्धं प्रसिद्धं च तदन्विते ।
तदभावे च नास्त्येव तल्लिङ्गमनुमापकम् ॥

ननु लिङ्गं किमुच्यते अत आह लिङ्गं पुनरिति । लिङ्गं पुनः प्रसिद्धमेवेत्यर्थः । निरूपाधिकसाध्यसम्बन्धशालि लिङ्गमिति(१) लोकप्रसिद्धमेवेत्यर्थः । न चैवंविधमपि लिङ्गमितिकर्त्तव्यतामन्तरेण स्वरूपमात्रेण प्रमाणम् । अन्तःकरणव्युत्पत्तिनिमित्तस्य प्रमाणस्य लक्षणार्थं सङ्ग्रहश्लोकं पठति । यदनुमेयेन सम्बद्धमिति । तल्लिङ्गमनुमापकमिति । तल्लिङ्गं प्रमाणमनुमापकम् (२) अनुमितिरूपप्रमाकरणम् । एतेन परामृश्यमाणं लिङ्गमनुमानम् । तथा च लिङ्गस्यावान्तरव्यापारवत्त्वेन करणत्वमिति सङ्गच्छत इति(३) भावः । इह श्लोके तच्छब्दस्योपात्तत्वात्तस्य(४) च नित्यं यच्छब्दसापेक्षत्वात् पूरयति(५) यदिति । यल्लिङ्गमनुमेयेन संबद्धं अनुमितिक्रियाव्याप्तमिष्टं तत्साधर्म्यविशिष्टेन धर्मिणा यत्सम्बद्धसंयुक्तं समवेतं विशेषणीभूतं च तस्मिन्वर्तत इत्यर्थः । एतेन पक्षधर्मता लभ्यते एवं च सति चतुर्विधाः परमाणवो अनित्याः गन्धवत्त्वादिति भागासिद्धमपि परिहृतम् । सपक्षसत्त्वं दर्शयति । प्रसिद्धं च तदन्विते । चशब्दोऽप्यर्थः । तदन्विते साध्यधर्मान्विते सपक्षे प्रसिद्धमपि तेन सपक्षैकदेशवृत्तेरपि ग्रहणम् । तच्छब्देन योग्यतया साध्यधर्म एव परामृश्यते । विपक्षाद्व्यावृत्तिमाह तदभावे च नास्त्येव

(१) सम्बन्धो यस्य तल्लिङ्गमिति–पा० २ पु० ।
(२) तल्लिङ्गमनुमापकमनुमितिरूपप्रमाकरणं–पा० २ पु० ।
(३) मपि संगृहीतमिति–पा० २ पु० ।
(४) तच्छब्दस्य–पा० २ पु० ।
(५) सूचयति–पा० २ पु० ।

विपरीतमतो यत्स्यात् एकेन द्वितयेन(१) वा ।
विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत् ॥

तदभावे अनुमेयाभावे अनुमेयविपर्यये विपक्ष इति यावत् । यथा स्वयमेव च व्याख्यास्यते अनुमेयविपरीते चेति । विपक्षैकदेशवृत्तेरपि निराकरणार्थमवधारणम् । यद्यपि च लिङ्गे निरूपित एव तद्विधर्मा लिङ्गाभासा इत्यर्थो लभ्यते तथाप्यसिद्ध्यादिरूपविशेषसंज्ञाज्ञापनार्थमाह विपरीतमिति । एतेन प्रतियोगिनिरूपणाल्लिङ्गप्रतिपत्तिः शिष्याणां सुकरा भवति । लिङ्गाभासव्यावृत्तं लिङ्गमिति व्यतिरेकिणापि लिङ्गलक्षणं दर्शितं भवति । अत उक्तलक्षणाल्लिङ्गात् कालात्ययापदिष्टप्रकरणसमत्वरहितात् एकेन लिङ्गलक्षणेन द्वाभ्यां लिङ्गलक्षणाभ्यां वा शब्दात् त्रितयेन च यद्विपरीतं रहितं तदलिङ्गं सामान्यतो लिङ्गाभासं कश्यपात्मजः कणादोऽब्रवीत् । का पुनस्तस्य विशेषसंज्ञा अत आह विरुद्धासिद्धमिति । समाहारे द्वन्द्वः । एतेनैतद्दर्शितं भवति । एकस्मिन्नपि दृष्टे यथायोगं बहूनि दूषणानि सम्भवन्ति । परिषदादिजिज्ञासायां समस्तान्यपि तान्युद्भावनीयानि । अजिज्ञासायां त्वेकमेव दूषणमुद्भाव्यमिति । यद्यपि सिद्धे हेतुस्वरूपे तदुत्तरकालमितरेषां विरुद्धत्वादिदोषाणामवकाश इति प्रथममसिद्धमेव हेत्वाभासमुदाहरन्ति । तथापि यद्यत्र स्फुटप्रतिभासं बलवच्च दूषणं तदेव वचनीयम् । अथवा सिद्धिः पक्षव्यवस्थितिः । सा चाविरुद्धस्यैव साधनस्य घटने न तु विरुद्धस्येति प्रथमं विरुद्धस्यैवोपन्यास इति विभावनार्थं समानतन्त्रसिद्धस्य(२) व्यतिक्रमः । तत्र सन्दि-

(१) यस्मादेकेन द्वितीयेन–पा० १ पु० ।
(२) क्रमस्य–इत्यधिकं २ पु० ।

यदनुमेयेनार्थेन देशविशेषे कालविशेषे वा सह-
चारितमनुमेयधर्मान्विते चान्यत्र सर्वस्मिन्नेकदेशे वा
प्रसिद्धमनुमेयविपरीते च सर्वस्मिन् प्रमाणतोऽसदेव

---

यथानैकान्तिको अनैकान्तिक इति यावत् । स हि धर्मद्वयसद्भा-
वेपि न विपक्षात् व्यावर्तक इत्येकेन लिङ्गलक्षणेन विपरीतः ।
यथा शब्दोऽनित्यः प्रमेयत्वादिति । विरुद्धस्तु पक्षधर्मता-
सद्भावेपि न सपक्षे वर्तते नापि विपक्षाद्व्यावृत्त इति धर्मद्वयेन
विपरीतः यथा शब्दो नित्यः कृतकत्वात् । असिद्धस्त्वे-
केन द्वाभ्यां त्रिभिश्च विपरीतो भवति यथा अनित्यः
शब्दः सामान्यवत्त्वे सति चाक्षुषत्वात् इत्येकेन विपरीतः ।
तथाहि तस्य सपक्षे घटादौ सद्भावेपि विपक्षात् सामान्यादे-
र्व्यावृत्तावपि पक्षधर्मत्वं नास्तीति । द्वाभ्यां च विपरीतः यथा
शब्दोऽनित्यः अप्रमेयत्वात् इति । अप्रमेयत्वस्य विपक्षाद्व्यावृत्ता-
वपि न पक्षे सद्भावो नापि सपक्षे इति । त्रिभिर्विपरीतो यथा अ-
नित्यः शब्दोऽकार्यत्वात् अस्य हि न शब्दे सद्भावो नापि
सपक्षे घटादौ नापि विपक्षाद्व्यावृत्तिरिति । पूर्वोक्तसङ्ग्रहवाक्ये
अनुमेयेन सम्बद्धमित्यस्य विवरणम् अनुमेयेनेत्यादि । य-
द्यपि चानुमाने देशकालौ व्यभिचारिणौ न हि पर्वतादिदेश-
एव नापि प्रभातादिकाल एव धूमाद्दहनसिद्धिरिति प्रसिद्धमेव ।
तथापि क्वचिदनुमानविशेषे तयोरपि प्रयोजकत्वद्योतनार्थमुक्तं
देशविशेषे कालविशेषे चेति । एतच्चैवं सर्वत्र देशकालावि-
नाभूतमित्यत्राग्रे स्फुटीभविष्यति । प्रसिद्धं च तदन्वित इत्यस्य
विवरणमनुमेयधर्मान्विते चेति । प्रसिद्धं भूयो दृढव्याप्तिकतया
गृहीतम् प्रमाणत इत्यनुषज्यते । तदभावे च नास्त्येवेत्यस्य विव-

तदप्रसिद्धार्थस्या(१)नुमापकं लिङ्गं भवतीति । यत्तु यथोक्ताल्लिङ्गादेकेन धर्मेण द्वाभ्यां वा विपरीतं तदनुमेयस्याधिगमे लिङ्गं न भवतीत्येतदेवाह सूत्रकारः अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धश्चेति(२) ।

---

रणमनुमेयविपरीते चेति । व्यतिरेकदृष्टान्तस्यापि प्रामाणिकस्यैव परार्थमुपादानम्(३) । अन्यथा काल्पनिकस्यापि दृष्टान्तत्वे हेत्वाभासव्यवस्थानुपपत्तेः । एतच्च व्यतिरेकबलप्रयुक्तक्षणभङ्गादिसाधननिराकरणावसरे तत्तत्प्रदेशे व्याख्यातमेव । तल्लिङ्गमनुमापकमित्यस्य विवरणं तदप्रसिद्धार्थस्येति । द्वितीयसंग्रहवाक्यविवरणं यत्तु यथोक्तादिति । ननु यदि यथोक्तरूपत्रयसम्पत्तिमात्रेण गमकत्वं तदा कालात्ययापदिष्टप्रकरणसमयोरपि गमकत्वं प्राप्तमत आह इत्याह सूत्रकार इति । अपदिश्यते व्यपदिश्यतेनेनेत्यपदेशो हेतुः नापदेशोनपदेशः । अहेतुस्तद्विरोधी हेत्वाभास इत्यर्थः । कोसौ हेत्वाभासस्तत्राहाप्रसिद्ध इति । दृढव्याप्तिकतया हि ज्ञानं प्रसिद्धिः । सा च सपक्ष एव चिन्त्यते । विरुद्धस्तु हेत्वाभासः सजातीये नास्ति प्रत्युत साध्यविपर्ययव्याप्त(४) इति व्युत्पत्त्या पक्षे अप्रसिद्धो अगृहीतव्याप्तिको विरुद्ध एवाभिधीयते इत्यर्थः । न केवलं विरुद्धोनपदेशः किन्तु पक्षेऽसन्नप्यसिद्धोऽनपदेश इत्यर्थः । न केवलं विरुद्धासिद्धो किन्तु सन्दिग्धानैकान्तिकश्चानपदेश इत्यर्थः । चकारादनपदेशस्य च पुनरावर्त्तनादन्योपि

---

(१) अप्रसिद्धस्यार्थस्या–पा० ७ पु० ।
(२) अ.३आ०१सू० १५। असन् सन्दिग्धश्चानपदेश–पा० ६ । ७पु० ।
(३) परमुपादानम्–पा० १ पु० ।
(४) साध्यविपरीत–पा० २ पु० ।

विधिस्तु यत्र धूमस्तत्राग्निरग्न्यभावे धूमोपि न भवतीति । एवं प्रसिद्धसमयस्यासन्दिग्धधूमदर्शनात् साहचर्यानुस्मरणात् तदनन्तरमग्न्यध्यवसायो भवतीति(१) ।

---

कालात्ययापदिष्टप्रकरणसमरूपो हेत्वाभासोस्तीति सूचितम् । निःप्रतिपक्षमेव पटुतरप्रत्यक्षाद्यबाधितमेव हि साध्यं प्रायशः साधनार्हमिति लोकप्रसिद्धत्वादुव्यक्तमनभिधानम् । अप्रसिद्धपदेन संग्रहो(२) न पुनरभावात् तथाच वक्ष्यते । प्रसिद्धं च तदन्विते इत्यनेन च तयोर्निराकरणमिति रमणीयम् । न पुनर्यदनुमेयेन सम्बद्धमित्यनेनापाततस्तयोरपि पक्षधर्मत्वात् व्याख्यानेन त्वपक्षधर्मतायामसिद्धत्वे सर्वमसिद्ध एवान्तर्भवतीति(३) । न चैवं सत्यन्वयव्यतिरेकमात्रस्यैवेदं लक्षणमिति वाच्यम् । केवलान्वयिनः केवलव्यतिरेकिणोपि प्रमाणसिद्धत्वात् । अन्यथा वैधर्म्यदृष्टान्तव्युत्पादनस्यापि वैयर्थ्यात् । ननु स्वरूपत्र(४)यसम्पत्तिमतो न गमकत्वं व्यभिचारात् । ततोप्यधिकस्य गमकत्वे तदुदाहरणप्रसङ्गात् । सत्यं वस्तुगत्या हि चतूरूपसम्पत्तिः पञ्चरूपसम्पत्तिरेव च गमिका । अनुमानत्रयसाधारण्यादबाधितविषयत्वासत्प्रतिपक्षत्वयोः पृथगनुदाहरणम् । प्रयोजकद्वारेण रूपत्रयमात्रमुदाहृतम् । तथाहि सपक्षे सत्त्वं प्रयोजकीकृत्य केवलान्वयी विपक्षासत्त्वं च प्रयोजकीकृत्य केवलव्यतिरेकी । पक्षधर्मतापि तर्हि साधारणत्वान्न वाच्येति चेत् । न तथा सति नि-

(१) तत्परं तद्भवतीति ३ पु० अधिकम् ।
(२) पदेन त्वभिधानमेव–पा० २ पु० ।
(३) व्याख्याने त्वपक्षधर्मताऽसिद्ध एवान्तर्भवतीति–पा० १ पु० ।
(४) रूपत्रय–पा० २ पु० ।

राश्रयस्य हेतोर्निरूपणोपन्यासस्याप्यशक्यत्वात् । न हि निराश्रयं किञ्चिद्विधीयते प्रतिषिध्यते चेति । तस्मात् सुष्ठूक्तं त्रिरूपादिति(१) । तत्रानुमेयेन सम्बद्धं प्रसिद्धं च तदन्वित इत्यन्वयिनो लक्षणम् इदमेव तदभावे च नास्त्येवेति सहितं व्यतिरेकिणः समस्तं त्वन्वयव्यतिरेकिणः । अनुमानजनकत्वं च सामान्यलक्षणं त्रयाणामित्यवगन्तव्यम् । यथोक्तमपि लिङ्गमगृहीताविनाभावस्य सकृद्ग्रहणेपि वा विस्मृताविनाभावस्य न गमकमत आह विधिस्त्विति । तुशब्दस्तादात्म्यतदुत्पत्त्योर्व्याप्तिग्रहणोपायत्वनिरासार्थः । विधिस्त्वविनाभावग्रहणप्रकारस्तु । कोसावित्यत आह यत्रेति । तदनेनान्वयव्यतिरेकावेव भूयोदर्शनसहचारिणौ तद्ग्रहणोपाय इति दर्शितम् । अन्वयव्यतिरेकाभ्यां प्रथमदर्शने एव व्याप्तिर्गृह्यते । शङ्कामात्रं तु भूयोदर्शनेन न निराक्रियत इति मतं व्युदस्यति एवं प्रसिद्धसमयस्येति । एवमन्वयव्यतिरेकाभ्यां प्रसिद्धो गृहीतः सुदृढप्रमाणेन भूयोभूयः समयोऽविनाभावो येन पुरुषेण तस्येत्यर्थः । इदमत्राकूतम् । यो यमुपाधिमादाय येन सह सम्बद्ध्यते स निरुपाध्यवस्थायां तस्य गमकः । यथा वह्निर्धूमस्य । सोपाध्यवस्थायामप्युपाधेः केवलस्यैव सामर्थ्ये स एव गमको न तूपहितः । यथाहारपरिणतिभेदस्यैव गमकत्वे मैत्रीतनयत्वम् । यत्र तूपाधिः केवलो व्यभिचारी तत्र सोपाधिरपि गमक एव । यथार्द्रेन्धनवान् वन्हिर्धूमस्य तत्कस्य हेतोर्विशिष्टस्य निरुपाधित्वात् । भूयोदर्शनं हि तज्ज्ञानजनितसंस्कारसहितमिन्द्रियमुच्यते । मणिभेदतत्त्वं चात्र स्फुटमुदाहरणम् । तथाहि मणिभिर्यैर्विषयैस्त-

---

(१) यथोक्तात्त्रिरूपादिति २ पु० पाठः ।

त्व्यवहारविषयो भवति धारयितुः तत्तत्फलसम्पादकश्चोन्नीयते ते सूक्ष्मविशेषाः(१) परीक्षकेण भूयोभिरेव दर्शनैरुन्नीयन्ते तथात्रापि प्रथमं हि काकतालीयव्युदासाय ततः सातत्योर्ध्वगमनविशेषनिश्चयाय ततश्चोपाधिनिरासाय। न चात्र वारसंख्यानियमोपयोगो निरुपाधिसम्बन्धबोधावधिनियमात्। असन्दिग्धधूमदर्शनाद्धूम एवायमविच्छिन्नमूलो न बाष्पादिकमिति ज्ञानात्। तदनेन विप्रतिपन्नं प्रति विशिष्टधूमवत्त्वादिति प्रयोक्तव्यमिति दर्शितम्(२)। अतथाविधं प्रति करणादेरनङ्गत्वात्(३)। न च पूर्वमविनाभावग्रहेपि तदर्थलिङ्गग्रहेपि(४) विस्मृताविनाभावस्यापि तद्भवतीत्यत उक्तं साहचर्यानुस्मरणादिति। तदनेन दृष्टान्तेन प्रथमत एकं लिङ्गग्रहणं तदनु पक्षे द्वितीयं लिङ्गग्रहणमिति दार्शितम्। न चैतावन्मात्रमनुमितेः कारणं तथाहि द्वितीयलिङ्गग्रहणं(५) वस्तुगत्या लिङ्गग्रहणमित्येतावतैव व्याप्तिस्मृतेः सहकारि लिङ्गत्वरूपेणोल्लेखितया वा। न तावदाद्यः। दूराद्धूमविषयवस्तुत्वज्ञानस्यापि प्रकारान्तरायातव्याप्तिस्मृतिं प्रति सहकारित्वप्रसङ्गात्। द्वितीयस्तु द्वितीयलिङ्गदर्शने नास्त्येव तस्माल्लिङ्गत्वोल्लेखि तृतीयलिङ्गदर्शनमास्थेयम् इत्याह अनन्तरमग्न्यध्यवसायो भवतीति। अग्निरध्यवसीयतेऽनेनेत्यध्यवसायः परामर्शः। तत्परं तद्भवति। प्रमाणं भवतीत्यर्थः। यद्यपि द्वितीयलिङ्गदर्शनस्य स्मृत्या सह विनश्यदव-

(१) ते च सूक्ष्मासूक्ष्मविशेषाः–२ पु० पा०।

(२) भवतीत्यधिकं–२ पु०।

(३)तथाविधं प्रति प्रकरणादेरनङ्गत्वादिति १ पु०पाठः सम्यक्।

(४) तदर्थलिङ्गग्रहेपि–इति नास्ति १ पु०।

(५) लिङ्गदर्शनं-पा० २ पु०।

स्थस्यैव परामर्षज्ञानजनकत्वं क्वचित् दृष्टं तथापि यत्र दृष्टमात्र एव वह्निनिवृत्तौ निवृत्तो धूमः कालान्तरे जिज्ञासावशात् परामृश्यते तत्र द्वयोरपि लिङ्गदर्शनयोरतीतत्वात् परामर्षज्ञानं प्रति साहचर्यानुस्मरणमेव कारणम्(१)। यस्तु सर्वथा परामर्शं(२) नेच्छति तेन वाक्यस्य चतुर्थोऽवयव उपनयो नेष्टव्यः। पक्षधर्मताप्रतिपादकत्वेनास्योपयोगः परार्थानुमाने। स्वार्थानुमाने तु सा द्वितीयलिङ्गदर्शनादेवावगतेति किं परामर्शेणेति चेत् न पक्षधर्मता हि व्याप्त्या सह प्रतिसंहितानुमानोपयोगिनी तादृशी चोपनयेन व्यंज्यते प्रदर्श्यते न द्वितीयलिङ्गदर्शनेन तस्य हि व्याप्त्यनुसन्धानरहितं पक्षधर्मतामात्रमेव गोचरः। न च तदनुमानोपयोगि तस्मादुपनयार्थो न द्वितीयलिङ्गदर्शनविषयः ततः स्वार्थानुमाने यद्यस्ति तस्योपयोगो नूनं परामर्शोऽपि तृतीयः स्वीकर्तव्यः। नास्ति चेत् परार्थानुमानेपि परामर्शैकार्थ उपनयो नादरणीयः। ननु कोयं प्रतिबन्धो नाम। अनौपाधिकः सम्बन्ध इति ब्रूमः। नन्वयमप्यव्यभिचारस्य तन्निदानीभूतोपाध्यभावस्य वाऽनिश्चयेऽशक्यनिश्चय एव न च तादात्म्यतदुत्पत्तिनिश्चयमन्तरेणान्यस्तदुपायः सम्भवति। यदि हि कारणमात्मानं वा कार्यात्मानौ व्यभिचरतस्तदा कार्याकस्मिकत्वप्रसङ्गस्य निःस्वभावत्वप्रसङ्गस्य च विपक्षे बलवद्बाधकोपलम्भस्य(३) सद्भावात्। भवेदेवं यदि तादात्म्यतदुत्पत्तिरूप एव प्रतिबन्धः। ताभ्यां समानोपायो वा तयोरेव वा प्रतिबन्धपर्यवसानमेत एव(४) वा प्रतिबन्धनिश्चयोपायः।

(१) परामर्शज्ञानमेव कारणम्-पा० २ पु०।
(२) परामर्शज्ञानं—पा० २ पु०। (३) कोपष्टम्भस्य-पा० २ पु०।
(४) त एव—पा० ३ पु०।

उपायत्वमपि तयोः सहचारावसाये वा व्यभिचारशङ्कानिरासे वा । व्यभिचारशङ्काप्युपाधिदर्शनाद्वा । तच्छङ्कया वा । भूयोभूयः सहचरितयोश्च(१) कयोश्चिदन्ययोर्व्यभिचारदर्शनानुसन्धानमात्रेण वेति । तत्र सहचारावसायस्तावदिन्द्रियसन्निकर्षाधीनोत्पत्तिः तदुत्पत्त्यनिश्चयेपि वह्निधूमयोः सिद्ध्यति । व्यभिचारशङ्कापि योग्यानामुपाधीनां योग्यानुपलम्भादेव निरस्ता । अतीन्द्रियाणामुपाधीनां तु अन्यत्र प्रमाणपरिदृष्टानां शङ्का यथा निवर्तते तथा वक्ष्यामः । प्रमाणपथानवतीर्णोपाधिशङ्का तु तदुत्पत्तिनिश्चयमप्यास्कन्दतीति कथमेतेन सा निवर्तनीया । सहचरितयोरन्ययोर्व्यभिचारदर्शनमात्रेण तु व्यभिचारशङ्का कार्यकारणयोरपि समाना । तदुत्पत्तिलक्षणविशेषसिद्धौ विपक्षे बाधकप्रमाणप्रवृत्त्याशङ्का निवृत्तिरिति यदि तदाऽस्माकमपि स्वाभाविकसम्बन्धसिद्धौ विपक्षे बाधकप्रमाणप्रवृत्त्यै च शङ्कानिवृत्तिरिति समः समाधिः । विशेषस्तु स्वाभाविकसम्बन्धस्य व्यापकत्वं तदुत्पत्त्यादेस्तु प्रत्येकमव्यापकत्वं न चोभयगामि किञ्चिदेकं साधारण निमित्तमस्ति । न च तादात्म्येपि शिंशपात्ववत् वृक्षत्वमपि गमकं संयोगित्वाविशेषेपि धूमस्यैव वन्हिगमकत्ववत् नियामकस्य सम्बन्धस्वभावस्य बन्धानातिरेकात् । न च समानोपायत्वादुभयोरन्यतरानिश्चये अन्यतरानिश्चयो न भवतीति साम्प्रतम् । प्रतिबन्धानिश्चयेपि हुताशनोष्मणोः(२) कार्यकारणभावावधारणात् । कार्यकारणभावानिश्चयेपि वाऽनलधूमयोः प्रतिबन्धावबोधात् । यतो नातीतमेव वह्निमनुमिमते । न च तयो-

(१) सहचरितयोरपि उपलब्धयोरिति २ पु० ।

(२) हुताशनभस्मनोः-पा० २ पु० ।

रेव प्रतिबन्धः पर्यवस्यति तथा सति रसाद्रूपानुमानं न स्यात् । एकसामग्र्यधीनस्य रूपादे रसतो गतिरिति वदता त्वयैव नानयोस्तादात्म्यं न तदुत्पत्तिरिति प्रतिज्ञातम्(१) । न च भेदे सति व्याप्यव्यापकभाव एव कार्यकारणभाव इति प्रज्ञावता समाधेयम् तस्य पापादपि पापीयस्त्वात् । तथा हि नियामकविरहे भिन्नयोरव्यभिचारः शङ्काकलङ्कित इति दुरवधारणः । तामपनेतुं कार्यकारणभावेनेन दर्शितः स चेत्तद्रूप एव कथं तन्निश्चयेनेवाव्यभिचारनिश्चय इति । न चैतत्सत्कीर्तेरनुमतं यद्रसेन रूपानुमाने अन्यथोपायमाह । यदि च सर्वलोकमतिबाह्य स्वयं कृतलक्षणैर्व्यवहारस्तदा भेदे सतीत्येतदपि त्यज्यताम् । अव्यभिचारमात्रे तदुत्पत्तिरित्येवास्तु लाघवात् तादात्म्येप्येतदस्तीति चेत् । अस्तु शिंशपापि वृक्षकार्यम् । कथं तेनैव तत्कर्तव्यमिति चेत् । को दोषः । असिद्धं सिद्धेन साध्यते न च तदेव सिद्धमसिद्धं चेति सम्भवतीति चेत् हन्तैवमनागतमपि कथं व्यापकतामात्रेण करणमसिद्धत्वात् । वर्तमानमपि कथं व्याप्यतामात्रेण कार्यं सिद्धत्वात् । एवं समानकाले अपि कथमविनाभावमात्रेण कार्यकारणभूत इति । असिद्धावस्थायामुभयोरपि असाधकत्वाविशेषात् । सिद्धावस्थायामुभयोरपि साध्यत्वाविशेषात् । तस्मान्नियतपूर्वापरकालत्वमेव कार्यकारणभावः अविनाभावस्तु नियममात्रमिति भावः । न च त एव प्रतिबन्धा अद्यतनतपनोदयेन श्वस्तनतपनोदयानुमाने तादात्म्यतदुत्पत्त्योरन्यतरस्याभावात् । तादात्म्यं च गमकत्वेन प्रत्युत विरुद्धमेव । न हि तदेव निश्चेयं तदेवानिश्चायकमपि भवति नि-

(१) तदाप्युपगतं त्वयैव नानयोस्तदुत्पत्तिः न च तादात्म्यमिति प्रतिज्ञाहानम्-पा० २ पु० ।

श्चितानिश्चितयोः परस्परविरुद्धत्वात् । भवतु वा अभेदेपि गम्यगमकभावः । तथापि वृक्षत्वसामान्यस्यानिश्चये तद्विशेषशिंशपात्वस्य निश्चय इति दुर्लभम् । यस्तु भिन्नयोरेव व्याप्तयोर्गम्यगमकभावः । किन्त्वभिन्नाध्यवसेयं सम्बन्धात्तादात्म्यं व्यवह्रियते इति समर्थयते स यद्यभिन्नदेवदत्तसम्बन्धात् छत्रकुण्डलयोरपि अभेदं व्यवहरति । तदा को वारयिता प्रमाणाभावः स चेहापि समानः । तस्मादनौपाधिकत्वमेव स्वाभाविकत्वम् । तादात्म्यतदुत्पत्त्यालीढयोरप्यव्यभिचारे निरुपाधिकत्वमेव बीजं निरुपाधित्वनिश्चयेपि यदि शङ्कापिशाच्यवकाशः तदा कार्यकारणभावादिकमपि स्ववचनप्रतिहतमेव । यद्यपि सोपाधावश्यं व्यभिचारो निरुपाधावश्यमव्यभिचारः व्यभिचारे अवश्यमुपाधिः अव्यभिचारे चावश्यमुपाध्यभावः । तथापि यत्र स्फुटो व्यभिचारस्तत्र निष्फलमुपाध्यनुसरणम् । अस्फुटस्तु व्यभिचारस्तन्निदानोपाधिसद्भावनिश्चयेनैव प्रतिपाद्यते । ननु तदभाव एव कथमवगम्यते किमत्र दुर्घटं(१) प्रमाणपदवीमवतीर्णस्यैवोपाधित्वेन शङ्कनीयत्वात् । अन्यथा तदुत्पत्तावपि शङ्काकलङ्कस्य दुःपरिहरत्वात् । सन्ततः सप्तघटिकाद्याहारकरणे(२)प्यप्रवृत्तिप्रसङ्गात् । अर्थसन्देहात्तत्र प्रवृत्तिरिति न युक्तं यत्र प्रमाणानि परिभूय शङ्कापिशाची प्रसरति कुतस्तत्रार्थसम्भावनापि । तदयं संक्षेपः । व्यभिचार एव प्रतिबन्धाभावः । उपाधेरेव व्यभिचारशङ्काऽप्रमाणानिश्चित एवोपाधित्वेन शङ्कनीयः । साधने सोपाधिः साध्ये निरुपाधिरेवोपाधित्वेन निश्चेयः अतोऽन्यथात्वेन न च प्रमाण-

---

(१) दुर्वचं-पा० २ पु० ।
(२) पर्यन्ततः सप्तघटिकादिकरणे-पा० ३ पु० ।

परिदृष्ट एव कश्चिदुपाधित्वेन शङ्कनीयः। तथाहि धूमानुमाने प्रत्यक्षेणोपलभ्यास्तावदुपाधयो योग्यानुपलब्धेरेव निरस्ताः। प्रमाणान्तरपरिदृष्टानां व्यापकानामुपाधित्वे वन्हेः सार्वत्रिकत्वप्रसङ्गात्। अव्यापकानामपि नित्यानामुपाधित्वे वन्हेः सर्वदानुवृत्तिप्रसङ्गः। अनित्यास्तु त्रिविधाः। उभयाव्यभिचारिणः उभयव्यभिचारिणो अन्यतराव्यभिचारिणश्चेति। तत्र प्रथमद्वितीया उपाधिलक्षणाभावान्नोपाधयः। अन्यतराव्यभिचारिणस्तु द्विरूपाः धूममात्राव्यभिचारिणो वह्निमात्राव्यभिचारणश्चेति। पूर्वे लक्षणाभावादेव नोपाधयः। वह्निमात्राव्यभिचारिणोपि द्विविधाः। व्याप्यमात्ररूपा उभयरूपाश्च। पूर्वे पूर्ववत् उभयरूपास्तु सामग्रीतोऽपरे न विद्यन्ते। सामग्री च न क्वचिदुपाधिः धूमस्य वह्निनेव तयापि स्वभावसम्बन्धात्। वह्निजननसामग्र्या वह्नेरप्यन्तर्भावाच्च। न च साध्यधर्मसजातीयेतरत्वमुपाधिः तस्य प्रमाणबाधैकनियतत्वात्। अत एवोपाध्यदर्शनेपि विरोधिप्रमाणसद्सद्भावानिश्चयव्यग्रतया मुहूर्तमनुमितौ विलम्बन्ते तदेवमनुमानमात्रे द्रष्टव्यम्। तर्कश्च सर्वशङ्कानिराकरणपटीयान् विराजते। उपाधिलक्षणं तु साध्यव्यापकत्वे सति साधनाव्यापकत्वमित्युक्तमेव। किं पुनर्व्याप्तिग्रहणे प्रमाणं न तावन्मानसं मनसो बहिरस्वातन्त्र्यात्। दर्शनादर्शनरूपबाह्यसहकारित्वान्नैवमिति चेत्। न असाधारणनिमित्तसव्यपेक्षत्वेन प्रमाणान्तरतापत्तेः। किञ्च जात्यन्धस्य पूर्वानुभूतरूपादिविज्ञानजनितसंस्कारसहकारिणा मनसा रूपादिसाक्षात्कारजनने अन्धानन्धयोरविशेषापत्तिः। कार्यदर्शनादत्रैवं कल्प्यत इति चेत्। न तस्यान्यथाप्युपपत्तेः। तस्माद्व्याप्तिः प्रत्यक्षयोस्सम्बन्धिनोर्बाह्येन्द्रियजन्यसविकल्पकग्राह्यैव संज्ञास्मरणस्य चात्र प्रकारान्त-

**एवं सर्वत्र देशकालाविनाभूतमितरस्य लिङ्गम् ।**

रेणापि सम्भवात् निर्विकल्पकस्यापि नापेक्षेति । क्वचित्सादृश्यादिवन्निर्विकल्पकेनैव गृह्यते इति । तदेवं धूमानुमानं सिद्धवत् व्युत्पाद्यान्यत्रानुमानेष्यतिदिशति । एवं सर्वत्रेति । एवमुक्तेन क्रमेण धूमानुमानवत् सर्वत्रानुमाने व्याप्तिनिश्चय इत्यर्थः । यद्यपि देशकालौ व्यभिचारिणावित्युक्तमेव तथाप्येवमेव निरुपाधित्वेन तावपि गमकावित्याह । देशकालाविनाभूतमित्येत्रमित्यनुषज्यते इतरस्य साध्यधर्मस्य लिङ्गम् यथा मगधायां कर्कटवृश्चिकभीतवत् ऐन्द्रियमृत्तिकालक्षणं तज्जन्यविषापनोदस्य लिङ्गम् । कालाविनाभूतं च यथा भगवतो योगीश्वरस्य विषुवत्पर्वणि श्रद्धातिशयेनोपस्थानं परमाभ्युदयं लिङ्गम् । ननु सूत्रविरुद्धमेतत् । अस्येदं कारणं कार्यं संयोगि विरोधि समवायि चेति(१)लैङ्गिकमिति सूत्रे चतुर्द्धा सम्बन्धिनियमादिति । तथा ह्यस्येदं कार्यं अस्येदं कारणमिति क्वचित् कार्यं क्वचित्कारणं प्रयोजकीकृत्योक्तम् । यथान्त्यतन्तुसंयोगात्पटचरमकारणात् भविष्यत् पटानुमानम् । वस्तुगत्या तु कार्यकारणभाव एकलक्षण एव सम्बन्धः । एतद्द्वितयोदाहरणं स्फुटमेव । विरोध्युदाहरणं तु विस्फूर्जितमहिं दृष्ट्वा घटाद्यन्तरितस्य नकुलस्यानुमानम् । यत्पुनरभूतं वर्षकर्म भूतस्य वा वाय्वभ्रसंयोगस्य कथं विरोधि प्रत्युतानुकूलमेवेति दूषितं किमेतावता । न ह्येकद्विकोदाहरणे दूषित एव विरोधिलक्षणं दूषितं भवति । तत्रापि विरोधस्य दुःपरिहरत्वात् । न ह्यन्यस्याभावमात्रेणान्यस्य भावो नियमेन सम्पद्यते(२) विरोधित्वे तु तथा सम्भवति ।

(१) समवायितेति–पा० २ पु० । (२) गम्यते–पा० २ पु० ।

शास्त्रे(१) कार्यादिग्रहणं निदर्शनार्थं कृतं नावधारणार्थं कस्माद्व्यतिरेकदर्शनात्(२)। तद्यथा अध्वर्युरों श्रावयन्

---

यद्विधौ यस्य नियमेन प्रतिषेधो यन्निषेधेन यस्य नियमेन विधिस्तयोरेव विरोधित्वादिति । समवाय्युदाहरणम् यथा वारिसंयुक्तसमवेत उष्णस्पर्शो वारिस्थं तेजो गमयतीति । तदयं नियमो देशकालाविनाभावमात्रस्य गमकत्वेऽनुपपन्न इत्यत आह । शास्त्र इति । अस्येदमिति सम्बन्धमात्रेऽनुमित्यङ्गतया प्रतिज्ञातेऽपि निदर्शनार्थं निश्चयेन विशेषोदाहरणमनिष्टं कृत्वा तस्यैव दर्शनार्थं कार्यादिग्रहणं न त्ववधारणार्थम् । विप्रतिपन्नः पृच्छति कस्मादिति कथमेतदित्यर्थः । तथा ह्यस्येदमिति सम्बन्धप्रतिपादकेनैव(३) सर्वोपसङ्ग्रहाच्छेषाभिधानं व्यर्थम् । न च सम्बन्धपदोपात्तस्याप्यतिप्रसक्तिः शेषपदैर्निवार्यते । तथा सति शेषपदान्येव सन्तु कृतमस्येति पदेन । तस्मादेव सम्बन्धभेदानामधिगतेः। न चैवं सत्यनुमित्यङ्गस्य सम्बन्धस्य चातुर्विध्यमपि तथेष्यते तस्मादस्येदं कार्यमस्येदं कारणमस्येदं संयोगि अस्येदं विरोध्यस्येदं समवायीत्यवधारणार्थमेवैतदित्यर्थः । ज्ञाताभिप्रायस्योत्तरं व्यतिरेकदर्शनात् कार्यादिव्यतिरेकेणापि लिङ्गदर्शनात् अस्येदमव्यभिचारीति सम्बन्धमात्रमेव गमकम् । तस्यैव तु शिष्यानुरोधाद्विशदीकरणम् एतस्य फलं तत्रोक्तमेव । यत्र कार्यादिव्यतिरेकः तद्दर्शयति यथाध्वर्युरिति । होतुरित्यनेन होतृसन्निहितयागभूमिमुपलक्षयति । प्रयोगस्त्वयम् अध्वर्युरन्ति-

---

(१) शास्त्रे च-पा० ५ पु० ।

(२) व्यतिरेकलिङ्गदर्शनात्-पा० ५, ६ पु० ।

(३) प्रतिपादकपदेनैव-पा० २ पु० ।

व्यवाहितस्य होतुर्लिङ्गम् चन्द्रोदयः समुद्रवृद्धेः कुमुदविकाशस्य च शरदि जलप्रसादोऽगस्त्योदयस्येति । एवमादि तत्सर्वमस्येदमिति सम्बन्धमात्रवचनात्(१) सिद्धम् । तत्तु द्विविधम् । दृष्टं सामान्यतो दृष्टं च । तत्र

---

दूरदेशेन होत्राऽनुसंहितः यागभूमावोंश्रावयेतिशब्दकर्तृत्वात् पूर्वोपलब्धाध्वर्युवत् । अत्र च कार्यताद्यभावः स्पष्ट एव । उदाहरणान्तरमाह चन्द्रोदय इति । न चात्रापि तदनन्तरभाविता-मात्रेण कार्यत्वमाशङ्कनीयमन्यथासिद्धत्वात् । स्वावयवानामुत्तरदेशप्राप्तिरूपायाः समुद्रवृद्धेः परस्परदलविभागरूपस्य कुमुदविकासस्य च पूर्वरूपनिवृत्तौ रूपान्तरोत्पत्तिविशिष्टोत्पाद(२)-लक्षणस्य च जलप्रसादस्य तत्कालसन्निपातिस्वकारणाधीनकर्मनिबन्धनत्वात् । कार्यादिव्यतिरिक्तस्यापि लिङ्गस्य दर्शनान्न्यूनं सूत्रमिति शिष्यभ्रमनिरासार्थं पूर्वोक्तमेव स्मारयन्नुपसंहरति । एवमादि तत् सर्वमिति । अस्येदमिति सम्बन्धमात्रवचनात् सिद्धं सूत्रकृता प्रमाणसिद्धं कृतमित्यर्थः । मात्रशब्दः सम्बन्धविशेषकार्यकारणादेर्व्यवच्छेदार्थः । तदेवं सिद्धे लैङ्गिके तद्भेदं प्रदर्शयति । तत्तु द्विविधमिति । तुशब्दोऽवधारणार्थः । द्विविधमेवेत्यर्थः । नन्वेतत्संज्ञाद्वयमन्वर्थं(३) वा स्यात् । तस्मिन् सति पारिभाषिकं वा । तत्र प्रथमे सर्वमेवानुमानं दृष्टं प्रमाणप्रतीतं सर्वं च सामान्यतो गृहीतव्याप्तिकतयैव दृष्टं भवतीति कथं द्वैविध्यम् । द्वितीये तु समानतन्त्रन्यायेन त्रिविधम् । सामा-

---

(१) सम्बन्धमात्रदर्शनात्-पा० १ पु० ।

(२) अपूर्वविशिष्टरूपोत्पाद-पा० ५ पु० ।

(३) संज्ञाद्वयं सम्बन्धमात्रे-पा० २ पु० ।

दृष्टं प्रसिद्धसाध्ययोरत्यन्तजात्यभेदेऽनुमानम् । यथा गव्येव सास्नामात्रमुपलभ्य(१) देशान्तरेपि सास्नामात्रदर्शनाद्गवि प्रतिपत्तिः(२) । प्रसिद्धसाध्ययो-

---

न्यतोदृष्टपदेन नत्वन्तर्भाव उचित इत्यतो द्वैविध्यं दर्शयति तत्रेति । तत्र द्वयोर्मध्ये दृष्टं प्रसिद्धसाध्ययोरत्यन्तजात्यभेदेऽनुमानम् प्रसिद्धं साध्यं ययोस्तौ तथा पक्षसपक्षावित्यर्थः । एकस्य हि व्याप्त्याऽपरस्य स्वात्मनि व्याप्तिग्रहणविषयतयैव साध्यं प्रसिद्धम् । तदनयोः पक्षसपक्षयोर्जात्यभेदे एकजातीयत्वे सति यदनुमानं तद्दृष्टं यथा गव्येव सास्नामुपलभ्य देशान्तरे गवि प्रतिपत्तिः । सा गौः सास्नावत्त्वात् दृश्यमानगोपिण्डवदिति । अथवा प्रसिद्धं यत्पूर्वलिङ्गेन सह दृष्टं साध्यं यत् सम्प्रत्यनुमेयं तयोरत्यन्तजात्यभेदे सतीति नेयम् । तत्र हि पूर्वं गोत्वजातिविशिष्टाया एव व्यक्तेः सास्नोपलम्भात् सम्प्रत्यपि गोत्वजात्याक्रान्तायाश्च व्यक्तेरनुमानमित्यत्यन्तजात्यभेदः । सामान्यतोदृष्टमुदाहरति प्रसिद्धसाध्ययोरिति । पूर्व-(३)मत्यन्तजातिभेदे सति लिङ्गं चानुमेयधर्मश्च लिङ्गानुमेयधर्मौ तयोः सामान्ये लिङ्गानुमेयधर्मसामान्ये तयोरनुवृत्तितो लिङ्गसामान्यस्य साध्यसामान्येन सहाविनाभावाद्यदनुमानं तत्सामान्यतो दृष्टम् । यथा कर्षकवणिग्राजपुरुषाणां प्रवृत्तेः फलवत्त्वमुपलभ्य वर्णाश्रमिणामपि प्रवृत्तेः फलानुमानम् । अत्र हि धान्यादिकं काञ्चनादिकं वाजिवारणादिकं यथासंख्यं

---

(१) सास्नामात्रदर्शनात्—पा० ७ पु० ।
(२) प्रतीतिः—पा० ६ पु० । भवति—अधिकं ५ पु०
(३) पूर्ववदिति—पा० ३ पु० ।

रत्यन्तजातिभेदे लिङ्गानुमेयधर्मसामान्यानुवृत्तितोऽनुमानं(१) सामान्यतो दृष्टम् । यथा कर्षकवणिग्राजपुरुषाणां च प्रवृत्तेः फलवत्त्वमुपलभ्य(२) वर्णाश्रमिणामपि दृष्टं प्रयोजनमनुद्दिश्य(३) प्रवर्त्तमानानां फला-

---

न्तराणां फलं वर्णाश्रमिणां प्रवृत्तेः फलमित्यत्यन्तजातिभेदः । सिद्धसाध्यतापरिहारार्थं च दृष्टं प्रयोजनमनुद्दिश्येति । अनुमानन्तु प्रवृत्तित्वसामान्यस्य फलत्वसामान्ये सहाविनाभावात् । अत एव सामान्यतोदृष्टं तेनैवानुकारेण(४) नियमदर्शनात् । स्वर्गादिरूपफलविशेषलाभस्तु पक्षधर्मतावशात्(५)। तदेवं प्रमाणशब्दस्य प्रमासाधनत्वाभिधानं करणव्युत्पत्तिसिद्धं फलमन्तरेण न सङ्गच्छते अतः प्रमाणफलविभागं दर्शयति । तत्रेति । तत्र तयोर्मध्ये लिङ्गदर्शनं प्रमाणं प्रमाकरणमित्यर्थः । प्रमितिरग्निज्ञानं प्रमाकरणस्य फलम् । यद्यपि लिङ्गदर्शनस्य परामर्शरूपस्योत्पत्त्यनुबन्धितया लिङ्गमेव विषयस्तथापि व्यापारानुबन्धितया वह्निरेव विषय इति करणफलयोर्न व्यधिकरणत्वम् । नन्वयं प्रमाणप्रमेयभावो न नियतः । सोपाधित्वादुपाधीनां चानियतत्वात् । तथासति यन्नियतं न भवति । न तत्परमार्थसत् । यथा रज्ज्वामारोपितं सर्पत्वमिति युक्त्यनुसारात् प्रमाणप्रमेयभावस्य काल्पनिकत्वमापातितम् अत आह । अथवेति । सत्यमयमनियतः प्रमाणप्रमेयभावो न च परमार्थासत्(६) । उपाधीनां नियतत्वात् । न हि येनोपाधिना प्रमाणत्वमिष्यते ।

---

(१) सामान्यतो–पा० ६ पु० (२) फलमुपलभ्य–पा० ७ पु० ।
(३) मनुपलभ्य–पा० ५ पु० । (४) प्रकारेण–पा० २ पु० ।
(५) इति–इत्यधिकं ३ पु० । (६) न चापरमार्थसत्त्वं–पा० २ पु० ।

नुमानमिति । तत्र लिङ्गदर्शनं प्रमाणं प्रमितिरग्निज्ञानम् । अथवाग्निज्ञानमेव प्रमाणं प्रमितिरग्नौ गुणदोषमाध्यस्थ्यदर्शनमित्येतत् स्वनिश्चितार्थमनुमानम् ॥

---

तदैव तेनोपाधिना तन्नेष्यत इति कस्याभ्युपगमात्(१) । एकोपाधिसद्भावे(२) उपाध्यन्तरमपि सम्भवतीति चेत् किं नः छिन्नं सम्भवति सन्नयं पार्थिवो द्रव्यं घटश्चेति तत्त्वज्ञानमेव यद्धूमलिङ्गदर्शनस्य फलमासीत्तदेव(३) प्रमाणं प्रमाकरणं प्रमितिः प्रमाकरणफलम् । अग्नौ गुणदोषमाध्यस्थ्यज्ञानम् । हेयोपादेयोपेक्षाप्रतिपत्तिरित्यर्थः । वस्तुस्वरूपमात्रदर्शने च तज्जातीयत्वादिलिङ्गप्रतिसन्धानमन्तरेण हेयोपादेयत्वादिकं न परिस्फुरति । अपेक्षाबुद्धिश्च हेयोपादेययोरन्या तृतीयास्तीति व्यक्तमेवेति उपसंहरति । एतत्स्वनिश्चितार्थमिति । स्वनिश्चितमिति भावे क्तः । स्वनिश्चयार्थमित्यर्थः । स्वनिश्चयो हि स्वज्ञानमस्य पञ्चावयवाद्यपरामर्शेऽपि सुकरः । विपर्यस्तादिप्रतिपादने तु सकलपरिकरशुद्धिरवश्यापेक्षणीयेत्यर्थः ॥

इह खलु शब्दे त्रिविधा विप्रतिपत्तिः । प्रामाण्यतो भेदतो लक्षणतश्च । तत्र प्रथमो विकल्पः स्ववचनविरोधादेव निरस्तः । तत्प्रामाण्यमनभ्युपगम्य विवक्षितार्थस्य प्रतिपादयितुमशक्यत्वात् । प्रतिपादने वा तत एव प्रामाण्यसिद्धेः । ननु यस्य यत्र प्रतिबन्धो नास्ति न तत्र तस्य प्रामाण्यं यथा दहने अप्रतिबद्धस्य रासभस्य । न चास्ति शब्दस्य बहिरर्थेन सम्बन्ध इति चेत् न अविनाभावरूपसम्बन्धाभावादप्रामाण्यं तत्सम्बन्धमात्राभावाद्वा

---

(१) भ्युपगमः–पा० ३ पु० । (२) एकोपाधिसम्भवे तु–पा० ५ पु० ।
(३) तद्वदग्निज्ञानमेव यद्धूमरूपमासीत्तदेव–पा० ६ पु० ।

प्रथमे चक्षुषोपि रूपज्ञानेऽप्रामाण्यम् । न हि तत्र तस्याविनाभावः । न च चक्षुरपि रूपकार्यत्वादेव रूपं प्रकाशयतीति वाच्यम् । तथा सति तद्गतत्वादेव रसादीनपि गमयेत् रूपरसादिसमुदायो हि घटादिविषयः । अविनाभावज्ञानं चापेक्षेत न ह्यविनाभावस्यैवं महिमा यदयं सत्तामात्रेणैव(१) गमयति तथात्वे धूमादपि चक्षुष इव सत्तामात्रावस्थितादेव वह्निः प्रतीयते । अपि च ज्ञानसमसमयो वार्थः प्रकाशते । अनन्तरसमयो वा । आद्ये न ग्राह्यग्राहकानियमः सव्येतरविषाणयोरिव । न च तस्माच्चक्षुषो जन्म स्वकारणादेवायमस्य स्वभावभेदलाभो यदनात्मानमप्यकारणमपि कारणत्वाविशेषेपि रूपमेवाज्ञातमेव सत् प्रकाशयतीति रूपोपलब्धिकार्यदर्शनबलादेव व्यवस्थाप्यते । तस्याशक्यापह्नवत्वादिति चेत् । एवं तर्हि यस्य यत्रेत्यादिव्यापकानुपलब्धिस्त्वयैवानैकान्तिकी कृता स्वभावसम्बन्धश्च दर्शित इति किमत्र वक्तव्यम् । तस्माद्यथा चक्षुरादिषु यथार्थानुभवजनननिबन्धनः प्रमाणव्यवहारः तथा तन्निबन्धनः शब्दस्यापि तदनुगुणः स्वभावभेदः स्वकारणादायातो व्यवस्थाप्यते यतस्तत्तत्शक्तितोपधानं तमर्थं(२) प्रतिपादयति । यद्यपि च सङ्केतः पुरुषाधीनत्वादनियतस्तथापि यदा यदन्यत्वे यस्य यत् प्रतिपाद्यं(३)तदा तत्रोपाधिनियमस्य कर्तुमशक्यत्वात् प्रामाण्यकथा सुदूरप्रतिहतेति तद्भेदे लक्षणे च विप्रतिपत्तिरवशिष्यते । तत्र भेदो व्यावर्तकधर्मयोगादेव सिद्ध्यति । लक्षणं च तथाभूतमतस्तदेव निरूपयितुमुचितमित्यभिप्रायेण सिद्धवदाह शब्दादीनामप्यनुमानेन्तर्भाव इति । यद्यपि समानतन्त्रादिषु

(१) न सत्तामात्रेणैव–पा० ७ पु० ।
(२) तत्तत्संकेतोपधानस्तं तमर्थं–पा० २ पु० ।
(३) यदस्य प्रतिपाद्यं–पा० ३ पु० ।

शब्दादीनामप्यनुमानेन्तर्भावः समानविधित्वात् । यथा प्रसिद्धसमयस्यासन्दिग्धलिङ्ग(१)दर्शनप्रसिद्ध्य(२)नुस्मरणाभ्यामतीन्द्रियेर्थे भवत्यनुमानम् । एवं शब्दादिभ्योपि इति । श्रुतिस्मृतिलक्षणोऽप्याम्नायो

---

उपन्यासक्रमेणान्तर्भावक्रमो दर्शयितुमुचितः । तथापि शब्दस्य बहुविषयत्वान्नियतविषयोपमानादेरुत्कर्षः(३) । शब्दादीनां सिद्धप्रमाणभावानामप्यनुमानेन्तर्भावः अपिशब्दश्च वक्ष्यमाणोपमानादिप्रमाणापेक्षया । अथवा शब्दादीनामनुमानेप्यन्तर्भावः अभावादीनां क्वचित्प्रत्यक्षेपीति योजना । अत्र हेतुमाह समानविधित्वात् । समानप्रवृत्तिकारणत्वात् विजातीयलक्षणानाक्रान्तत्वादिति यावत् । अप्रतिबन्धकत्वे अप्रामाण्यमेव साक्षात्प्रतिबन्धकत्वे प्रत्यक्षान्तर्भावः । परम्पराप्रतिबन्धकत्वे चानुमान एवान्तर्भावः । ननु समानविधित्वमेवासिद्धमत आह यथा प्रसिद्धसमयस्येति । समयः सम्बन्धमात्रम् अव्यभिचार इति यावत् । प्रसिद्धः समयोऽव्यभिचारो यस्य तस्य लिङ्गदर्शनप्रसिद्ध्यनुस्मरणाभ्यां लिङ्गदर्शनं च प्रसिद्धेर्व्याप्तेरनुस्मरणं च । यथातीन्द्रियेर्थे अनुमानं भवति । एवमनुमानप्रवृत्तिप्रकारं स्मारयित्वातिदिशति एवं शब्दादिभ्योपीति । इदमत्राकूतम् । यद्यप्येते पदार्था मिथः संसर्गवन्तो वाक्यत्वादिति व्यधिकरणम् पदार्थत्वादिति चानैकान्तिकम् पदैः स्मारितत्वादित्यपि तथा । यद्यपि चैतानि पदानि स्मारितार्थसंसर्गवन्ति तत्स्मारकत्वादित्यादौ साध्याभावः ।

---

(१) समवायस्य लिङ्ग–पा० १ पु० ।
(२) प्रसिद्धार्था–पा० ६ पु० ।
(३) विषयोपमानादिषूत्कर्षः–पा० ४ पु० ।

न ह्यत्र संसर्गः संयोगः समवायः तादात्म्यं विशेषणविशेष्यभावो वा सम्भवति । ज्ञाप्यज्ञापकभावश्च स्वातन्त्र्येणानुमानान्तर्भाववादिभिर्नेष्यते । न च लिङ्गतया ज्ञापकत्वं यल्लिङ्गस्य तदेव तस्य विषयः परस्पराश्रयप्रसङ्गात् । तदुपलम्भे हि व्याप्तिसिद्धिः । तत्सिद्धौ च तदनुमानमिति । तथाऽप्याकाङ्क्षादिमद्भिः पदैः स्मारितत्वात् गामभ्याजेतिपदार्थवत् इति स्यात् । न च विशेषासिद्धिर्दोषः संसर्गस्य संसृज्यमानविशेषापेक्षयैव विशिष्टत्वात् । यद्वैतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्त्वे सति तत्स्मारकत्वात् गामभ्याजेति पदकदम्बवदिति । न चैवमर्थासिद्धिर्दोषः । ज्ञानावच्छेदकतयैव तत्सिद्धेः । तस्य संसृज्यमानोपहितस्यैवावच्छेदकत्वात् न विशेषाप्रतिलम्भ इति । तदेवं प्राप्ते नैयायिकादयः प्रत्यवतिष्ठन्ते । किं पुनरत्र प्रथमानुमाने साध्यम् एते पदार्थाः संसर्गवन्तः संसृष्टा एवेति नियमो वा सम्भावितसंसर्गा इति वा । तत्र न प्रथमः अनाप्तोक्तपदकदम्बस्मारितैरनैकान्तात् । आप्तोक्त्या विशेषणीयमिति चेत् । न वाक्यार्थप्रतीतेः प्राक् तदसिद्धेः । न हि अविप्रलम्भकत्वमात्रमत्राप्तशब्देन विवक्षितम् तदुक्तेरपि पदार्थसंसर्गाव्यभिचारात् । अपि तु तदनुभवप्रामाण्यमपि । न चैतत् शक्यमसर्वज्ञेन सर्वदा सर्वत्रायं सम्यक्ज्ञानवानिति(१) निश्चेतुं भ्रान्तेः पुरुषधर्मत्वात् । यत्र च क्वचिदाप्तत्वमनाप्तस्यापि अस्तीति न तेनोपयोगः । ततोऽस्मिन्नर्थे अयमभ्रान्त इति केनचिदुपायेन ग्राह्यम् । न चैतत् संसर्गविशेषमप्रतीत्य शक्यं बुद्धेरर्थभानमन्तरेण निरूपयितुमशक्यत्वात् । पदार्थमात्रे चाभ्रान्तत्वसिद्धावपि न किञ्चित् अनाप्तसाधारण्यात् ।

(१) सत्यज्ञानवानिति-पा० ५ पु० ।

नापि द्वितीयः । योग्यतामात्रसिद्धावपि संसर्गानिश्चयात् । वाक्यस्य तदेकफलकत्वात् । योग्यतामात्रस्य च प्रागेव सिद्धेः । अन्यथा तदसिद्धावासत्त्याकाङ्क्षपदस्मारितत्वादित्येव हेतुः स्यात् । तथा चाग्निना सिञ्चेदित्यादिस्मारितैरनैकान्तः । तथाविधानां संसर्गायोग्यत्वादिति । एवं द्वितीयेपि प्रयोगे हेतुराकाङ्क्षादिमत्त्वे सतीति । अत्राकाङ्क्षापदार्थो न तावद्विशेषणविशेष्यभावो नापि तद्योग्यता नाप्यविनाभावमात्रम् । नापि विशेषाक्षिप्तसामान्याविनाभावं नापि प्रतिपत्तुर्जिज्ञासा । किं तर्हि ? गुणक्रियाद्यविशेष(१)जिज्ञासायामपि पदस्मारितविशेषजिज्ञासा आकाङ्क्षेति निरूपितम् । तत् किमस्यां ज्ञातायामन्वयप्रत्ययो अज्ञातायामिति । तत्र प्रथमे अनया व्यभिचारानिवर्तनीयो हेतुर्न विशेषणीयो मनःसंयोगादिवत् सत्तामात्रेणोपयोगात् । आसत्तियोग्यतामात्रविशिष्टस्तु निश्चितापि न गमको अयमेति पुत्रो राज्ञः(२) पुरुषोपसार्यतामित्यादौ व्यभिचारात् । द्वितीयस्तु स्यादपि यद्यनुमानान्तरवत् आकाङ्क्षाज्ञानव्यतिरेकेणा(३)न्वयप्रत्ययो न स्यात् । न त्वेवमस्ति आसत्तियोग्यताप्रतिसन्धानमात्रादेव साकाङ्क्षस्य सर्वत्र वाक्यार्थप्रत्ययात् निवृत्ताकाङ्क्षस्य च तदभावात् । सत्तामात्रेणैवोपपत्तावनुपलभ्यमानज्ञानकल्पनानवकाशात् न वाकाङ्क्षायां सत्यामप्यवश्यं वाक्यार्थप्रत्ययः । यदा ह्ययमेति पुत्रो राज्ञः पुरुषोपसार्यतामिति वक्तोच्चारयति श्रोता च व्यासङ्गादिना निमित्तेनायमेति पुत्र इत्यश्रुत्वैव राज्ञः पुरुषोपसार्यतामिति शृणोति तदास्त्याकाङ्क्षादिमत्त्वे सति पदकदम्बकत्वं न च

(१) गुणाद्यशेषविशेष—पा० ४ पु० ।
(२) अयमुपैति पुत्रो राज्ञः—पा० २ पु० ।
(३) ज्ञानवैधुर्यादन्वय—पा० ४ पु० ।

स्मारितार्थसंसर्गज्ञानपूर्वकत्वम् इति । स्यादेतत् । समभिव्याहृतत्वेनाप्तोक्तत्वेन च विशेषितहेतौ नायं दोषः एवं च सति कतिपयपदश्राविणां यः कश्चित् कचित् संसर्गप्रत्ययोऽलिङ्ग एव लिङ्गत्वाध्यारोपात् । असंसर्गाग्रहमात्रेण तत्(१)संसर्गप्रत्ययात् । न चैवं संसर्गो न सिद्ध्यति । आप्तवाक्येषु तत्सिद्धेः । न सर्वविषयाप्तत्वस्यासिद्धेः। यत्र कचिदाप्तत्वस्यानैकान्तिकत्वात् । प्रकृतविषये चाप्तत्वसिद्धौ संसर्गविशेषस्य प्रागेव सिद्ध्यभ्युपगमात् किमनुमानेन्तर्भावनीयम् । न च सर्वत्र जिज्ञासानिबन्धनम् अजिज्ञासोरपि वाक्यार्थप्रत्ययात् । आकाङ्क्षापदार्थस्तर्हि कः जिज्ञासां प्रति योग्यता सा च स्मारिततदाक्षिप्ताविनाभावे सति श्रोतरि तदुत्पाद्य संसर्गावगमप्रागभावः न चैषोपि स्वज्ञानमपेक्षते प्रतियोगिनिरूपणाधीनानिरूपणत्वादभावस्य तस्य च विषयनिरूप्यत्वादिति सिद्धमनुमानात् पृथक्त्वं शब्दस्येति । अत्रोच्यते । संसृष्टा एवेति नियम एव साध्यः आप्तोक्तत्वेन विशेषणान्न व्यभिचारः । न च संसर्गविशेषनिश्चयमन्तरेणाप्तोक्तत्वमशक्यनिश्चयम् । तथा हि निपुणन्तावदालोचयत्वायुष्मान् यद्यपि भवता शब्दः प्रमाणं पृथक् स्वीकृतः तथापि किं शब्दमात्रादर्थप्रतीतिः । आहोस्विदाप्तोक्तत्वादिसहिताच्छब्दविशेषात् । न प्रथमः अनाप्तवाक्ये व्यभिचारात् । ननु तत्राप्यर्थप्रतीतिर्जायत एव कथमन्यथा ततः प्रवर्तेत इतरथा हि द्राविडादिवचनेष्विव गौडदेशीयस्य प्रवृत्तिसङ्कल्पोपि न स्यात् किन्तु ज्ञाताप्यर्थप्रतिपत्तिरप्रामाण्यशङ्काकलङ्कितत्वेन न निःशङ्कप्रवृत्त्युपयोगिनीति प्रामाण्यनिश्चयार्थमाप्तोक्तत्वावधारणप्रयासः । ननु लिङ्गमपि तदानीमर्थज्ञानं जनयत्येव केवलं तत्त्वप्रामाण्यप्रति-

(१) वा तत्र—पा० ५ पु० ।

पत्त्यर्थ(१)मविनाभावप्रतिसन्धानमिति किं न कल्प्यते कथमन्यथा लिङ्गाभासेपि प्रवृत्तिसम्भवः । भवेदेवं यदि शब्दवत् सत्तामात्रेण लिङ्गमपि गमकं स्यात् । न हि धूमस्वरूपमेवात्र(२) लिङ्गमपि तु साध्ये निरुपाधिसम्बन्धशालि अबाधितविषयत्वादिरूपसम्पन्नमेव तथा च साध्ये निरुपाधिसम्बन्धशालि अथ च सम्बन्धं(३) विनापि भविष्यति इति कुतः शङ्काकलङ्कावकाशः प्रामाण्यालिङ्गितस्यैव तद्रूपत्वात् । तदेतत् शब्देपि समानम् न हि शब्दमात्रं विवक्षितार्थप्रतिपादकं घटशब्दस्यापि पटार्थप्रतिपादकतापत्तेः । नाप्यर्थप्रतिपादकत्वमात्रं शब्दत्वं शब्दापशब्दविवेकानुपपत्तेः । तद्विभागव्यवस्थापकव्याकरणादिवैयर्थ्याच्च । किन्तु यः शब्दो यदुपाधिसम्बन्धाद्यस्मिन्नर्थे आप्तेन सङ्केतितः(४) स एव तस्य प्रतिपादक इति । न चैतच्छब्दमात्रे सम्भवति । न चैवं सति सृण्येव जर्फरी तु फर्फरी तु इत्यादेर्वेदवाक्यादाप्तोक्तत्वप्रतिसन्धानमात्रेणाविदितपदार्थस्यापि अर्थप्रतीतिप्रसङ्गः । न ह्याप्तेनोच्चारणमात्रं तदुक्तत्वं किन्तु सङ्केतिसत्तया प्रतिपादनम् । कथं तर्हि शब्दाभासेपि प्रवृत्तिसम्भवः । अशब्द एव शब्दत्वाध्यारोपात् । अलिङ्ग एव लिङ्गत्वाध्यारोपात् यथा चलन्तीं पताकां दृष्ट्वा वायुर्वातीत्यादिष्वव्यविनाभावशालिषु प्रचुरतराभ्यासदशापन्नत्वेन मुहूर्तमप्यनुमितौ न विलम्बन्ते तथा शब्देपीति न कश्चिद्विशेषः अन्यथा त्वा-

---

(१) सत्प्रामाण्यार्थ—पा० ३ पु० ।

(२) धूमस्वरूपमात्रमेव–पा० १ पु० ।

(३) साध्यं–पा० २ पु० ।

(४) यः शब्द उपाधिसम्बन्धाद्यस्मिन्नर्थे आप्तेन सङ्केतितः–पा० ३ पु० ।

मोपदेशः शब्द इति लक्षणस्यापि निर्लक्षणत्वापातात् । द्वितीये तु यदि संसर्गावगमात् पूर्वमशक्यमाप्तोक्तत्वावधारणम् । तदानीमाप्तोपदेशः शब्द इति दुःपरिहरमन्योन्याश्रयत्वम् । यद्येन रूपेण न निश्चीयते न तत्तथा व्यवह्रियते यथा रथ्यापुरुषः सर्वज्ञत्वेन न निश्चीयते च विवादाध्यासितः पुरुष आप्तत्वेनेति बौद्धानुमतव्यापकानुपलब्धिश्च स्वशिरसि पातिता भवति इति । यदि तूभयोः समः समाधिर्दोषो वा न तर्हि वयमेके पर्यनुयोज्या इति । एतेन द्वितीयेऽप्यनुमाने दूषणं प्रत्युक्तम् । यत् पुनराकाङ्क्षायां सत्यामपि क्वचित् संसर्गावगमो न भवति इत्यनुकूलमेवैतत् । न हि सति भावमात्रं कारणत्वम् न च केवलमाकाङ्क्षासत्तियोग्यतारहिता तत्र कारणमपि तु समुदिता । तथा च समुदायात् कारणैकदेशमपकृष्य व्यभिचारदर्शनं मृत्पिण्डादीनामपि कारणत्वं खण्डयति । आकाङ्क्षाव्यतिरेकेणापि क्वचिद्भविष्यतीति चेत् । इदं त्ववाच्यं संसर्गावगमप्रागभावो ह्याकाङ्क्षा इति निरूपितम् । न च भावः स्वप्रागभावमनुपमृद्य जायते न चायमपि सत्तया हेतुः तथा सति सर्वस्य सर्वत्र वाक्यार्थप्रत्ययप्रसङ्गात् । अस्मदादीना(१)मनादौ संसारे संसर्गावगमप्रागभावः(२) क्व नाम नास्ति । स्मारिततदाक्षिप्ताविनाभावे सतीति तु विशेषणे तज्ज्ञानमेव प्रकारान्तरेण वक्ष्यत इत्यलं नैयायिकेष्वतिनिबन्धेनेति । ननु य एवालौकिकास्त एव वैदिका इति न्यायाल्लोके चाप्तत्वावधारणे शब्दादर्थनिश्चयः तर्हि(३) वेदवाक्यस्यापि तथा स्यात् । न च

(१) असर्वज्ञानामित्यधिकं- २ पु० । (२) धाष्ट्र्येनेति-पा० ४ पु० ।
(३) तथा च लोके वेदाप्तोक्तत्वद्वारेण शब्दादर्थनिश्चयः-पा० १ पु० ।

वक्तृप्रामाण्यापेक्षः तद्वचनादाम्नायप्रामाण्यम्(१) लिङ्गाच्चानित्यो बुद्धिपूर्वा वाक्यकृतिर्वेदे(२) बुद्धिपूर्वो ददातिरित्युक्तत्वात्(३) ।

---

तत्र कर्तृमात्रमेव सम्भावितमत आह श्रुतिस्मृतीति । श्रुतिस्मृती एव लक्षणं रूपं यस्य वाक्यसमुदायस्य स तथा । सन्दिग्धाप्तकर्तृत्वेनैतयोरुदाहरणं न केवलं लौकिको वाक्यसमुदायो श्रुतिस्मृतिलक्षणोऽप्याम्नायो वक्तुः प्रामाण्यमपेक्ष्य प्रत्यायकः न त्वाप्तोक्तत्वादिति साध्यविपर्ययव्याप्त एवायं हेतुः विप्रलिप्साविरहेऽपि भ्रमप्रमादयोः पुरुषेऽवश्यंभावितया तच्छङ्कापङ्कलेपस्य दुरुपह्नवत्वात् नित्यत्वे पुनरस्य शङ्कैव नास्तीत्यत आह तद्वचनादाम्नायप्रामाण्यमिति सूत्रकारवचनादित्यर्थः । तदित्यनेन चास्मद्बुद्धिभ्यो लिङ्गमृषेरिति सूत्रे अभिप्रायोक्तस्य(४) चास्मद्विशिष्टस्य वक्तुः परमेश्वरस्य परामर्शः । तद्वचनात्तेन प्रणयनात् आम्नायस्य वेदस्य प्रामाण्यम् । यथार्थानुभवजनकत्वं हि प्रामाण्यं न तु नित्यत्वप्रयुक्तं तदपि दोषाभावप्रयुक्तं(५) तच्च धर्मिग्राहकप्रमाणादेव परमेश्वरे सिद्धमिति भावः । प्रयोगस्तु आप्तोक्ता वेदाः महाजनपरिगृहीतत्वात् । यत् पुनर्नाप्तोक्तं न तत् महाजनपरिगृहीतं यथा रथ्यापुरुषवाक्यम् । इदानीं श्रूयमाणवेदवाक्यसजातीयेषु वेदवाक्येषु

---

(१) वैशेषिकसूत्रे अ० १ आ० सू० ३ ।
(२) वेदः—पा० २ पु० । अ० ६ आ० १ सू० १ ।
(३) अ. १ आ. १ सू. ३ ।
(४) प्रतिपादितस्य—पा० २ पु० ।
(५) यथार्थानुभवजनकत्वप्रयुक्तन्तदपि दोषाभावनिबन्धम्—पा० ३ पु० ।

स्वतन्त्रपुरुषपूर्वकत्वम् आप्तोक्तत्वम् सर्वदर्शनान्तःपातिपुरुषानुष्ठीयमानार्थत्वं च महाजनपरिग्रहः । सिद्धे च प्रामाण्ये क्वचित्फलाभावः कर्मकर्तृसाधनवैगुण्यनिबन्धनो न व्यभिचाराय तत्साकल्ये तत एव फलदर्शनात् । तदेवं वाक्यसमुदायस्यान्यत्रागमने आवरणासम्भवे चाविकले श्रवसि श्रोतरि चावहिते यदुपलभ्य पुनरनुपलम्भनं तत् घटादिवदनित्यत्वैकनिबन्धनमिति यद्यपि प्रत्यक्षत एव परिच्छिन्नं तथाप्यस्मर्यमाणकर्तृकत्वादिना वैधर्म्येण यः प्रत्यवतिष्ठते तं प्रत्याह लिङ्गाच्चानित्य इति । न केवलं प्रत्यक्षाल्लिङ्गाच्चानित्य इति । अनित्यत्वप्रतिपादकं तावत् प्रत्यक्षमनन्यथासिद्धतया दुःपरिहरम् । नित्यत्वप्रतिपादकं तु प्रत्यभिज्ञानमन्यथापि सङ्गच्छते । प्रत्युतानुमानमपि चात्रार्थेऽस्माकमस्ति तदेवमुभयप्रमाणसिद्धे(१) वस्तुनि वैधर्म्यमात्रमप्रयोजकमिति भावः । अनुमानमेव दर्शयति । बुद्धिपूर्वा वाक्यकृतिरिति । यत्र हि शब्दमात्रस्यैवानित्यतामुपपादयिष्यामः । कुतस्तत्र तत्समूहस्य पदस्य कुतश्चित्तद्विशेषसमूहस्य वाक्यस्य नित्यतेत्यर्थः । वेदवाक्यस्य कृतिर्वाक्यरचना बुद्धिपूर्विका वाक्यरचनात्वात् । लौकिकवाक्यरचनावत् । अस्मर्यमाणकर्तृकत्वं चानुकूलमेव यत एव हि स्फुटतरं स्मरणं नास्त्यत एव कर्ता साध्यते न च कदाचित्(२) स्फुटतरास्मरणमात्रेणाकर्तृकत्वं तथात्वे त्वित्यादिवाक्यानामन्धकूपानां चाकर्तृत्वप्रसङ्गात् । न चास्मरणमपि नाहरासीन्न रात्रिरासीदित्यादिवेदवाक्यादेवं तस्मात्तपस्तेपानाच्चत्वारो वेदाऽजायन्त इति कर्तृस्मरणात् । अनुवादमात्रमे-

(१) मन्यभयप्रमाणसिद्धे– पा० ४ पु० ।
(२) कस्यचित् क्वचित्–पा० १ पु० ।

तादिति चेत् न कर्तृस्मरणस्य सर्वत्राविध्यर्थत्वात् तथा च कालिदासादिवाक्यस्याप्यकर्तृकत्वप्रसङ्ग इति। ननु परिदृष्टसामर्थ्यकारकचक्रमधितिष्ठत एवेश्वरस्यापि कर्तृत्वम् तथा च स्थानकरणादीनामन्वयव्यतिरेकाभ्यां वर्णनिष्पत्तिं प्रति सामर्थ्यावगमात्। तदधिष्ठानशून्यतया न वेदकर्तृत्वं भवेत्। न च शरीरमन्तरेण तस्य स्थानकरणादिसम्भवः। तेषां ताल्वादिविवृतत्वादिरूपत्वादिति चेत्। न। अनवबोधात्। न हि वयमस्य भगवतः कार्यविशेषणानुविहितभावतयोपकरणशरीरं निराकुर्मः। त्र्यणुकादिनिष्पत्तये द्व्यणुकादिवत् शरीरान्वयव्यतिरेकानुविधायिकार्यनिष्पत्तये तदुपग्रहस्यापीष्यमाणत्वात् गृह्णातीश्वरोपि शरीरमन्तरान्तरा दर्शयति च विभूतीरिति। अपि त्वाऽऽयतनतया कर्तृत्वनिर्वाहकतया व्यापकतया च तत्तस्य नेष्यते भोगाभावात् कर्तृत्वस्य नित्यत्वात्। कार्यस्य कर्ता निरुपाधिसम्बन्धात् शरीरव्यभिचाराच्चेति। लिङ्गान्तरमाह। वेदे ददातिशब्दो बुद्धिपूर्वको ददातिविमुक्तित्वात् लौकिकददातिशब्दवदिति। लौकिकददातिशब्दो हि सम्प्रदानमभिप्रेत्य प्रयुज्यते। ददातिकर्मणा यमभिप्रैति कर्ता स सम्प्रदानं वेदे च कर्तुरभावाद्ददातिशब्दो व्यर्थ एवेति भावः। ननु नित्यनिर्दोषतया वेदस्य स्वत एव प्रामाण्यमुत्पद्यते कृतं तत्राप्तस्वीकारेणेति चेत्। न प्रामाण्यमुत्पद्यत इत्यस्यैव व्याहतत्वात्। औपाधिकसामान्यविशेषो हि प्रामाण्यं परापरभावानुपपत्तेः। यदि हि ज्ञानत्वं परमपरं च प्रामाण्यं तदाऽज्ञानरूपेष्विन्द्रियादिषु प्रामाण्यं न स्यात्। अथ प्रामाण्यं परं ज्ञानत्वमपरं तदानीं संशयविपर्ययादिष्वप्रमाणेषु ज्ञानत्वं न स्यात्। प्रमारूप उपाधिरुत्पद्यते न चासौ स्वत एवोत्पद्यते(१)। तथाहि। प्रमा ज्ञानहेत्वति-

रिक्तहेत्वधीना कार्यत्वे सति तद्विशेषत्वात् अप्रमावत् (२) । यदि तु तावन्मात्राधीना भवेत् । अप्रमापि प्रमैव भवेत् अस्ति हि तत्र ज्ञानं हेतुः । अथान्यथा ज्ञानमपि सा न स्यात् । ज्ञानत्वेऽप्यतिरिक्तदोषानुप्रवेशादप्रमैवेति चेत् एवं तर्हि दोषाभावमधिकमासाद्य प्रमापि जायेत नियमेन तदपेक्षणात् । अस्तु दोषाभावोऽधिको भावस्तु नेष्यत इति चेत् । भवेदप्येवं यदि दोषैर्भावैरेव भवितव्यं न त्वेवं विशेषादर्शनादेरभावस्यापि हेतुत्वात्(३) दोषत्वात् । कथमन्यथा ततः संशयविपर्ययौ । ततस्तदभावो भाव एवेति स कथं नेष्यत इति प्रामाण्यं प्रति यथा दोषाभावस्य तथा वक्तृगुणस्यापि कारणत्वम् अप्रामाण्यं प्रति यथा दोषस्य तथा वक्तृगुणाभावस्यापि कारणत्वमिति सर्वथा दुःपरिहरम् । एवं प्रामाण्यं परतो ज्ञायते अनभ्यासदशायां सांशयिकत्वात् अप्रामाण्यवत् । यदि तु स्वतो ज्ञायते कदाचिदपि प्रामाण्यसंशयो न स्यात् ज्ञानत्वसंशयवत् । ननु स्वतोपि ज्ञास्यते सन्देहसामग्रीसन्निपातात् सांशयिकमपि भविष्यति विपक्षे किं बाधकमिति चेत् । नैतदेवम् न हि साधकबाधकप्रमाणभावमनभूय समानधर्मदर्शनादेवासौ तथा सति तदनुच्छेद(४)प्रसङ्गात् । प्रमाणवदप्रमाणेपि तत्प्रतिपत्तिदर्शनाद्भवति शङ्केति चेत् । तत् किमप्रमाणज्ञानोपलम्भेपि न तत्प्रामाण्यमुपलब्धम् । प्रमाणज्ञानमेव वा नोपलब्धम् । आद्ये कथं स्वतः प्रामाण्यग्रहः प्रत्ययप्रतीतावपि तदप्रतीतेः । द्वितीये तु कथं शङ्का धर्मिण एवानुपलब्धेरिति । झटिति प्रचुरतर-

---

(१) ज्ञायते-पा० १ पु० । (२) अप्रमावत्-इति नास्ति १ पु० ।
(३) हेतुत्वात्-नास्ति १ पु० । (४) तदनवच्छेदप्रसङ्गात्-पा० ३ पु० ।

प्रसिद्धाभिनयस्य चेष्टया(१) प्रतिपत्तिदर्शनात् तदप्यनुमानमेव ।

---

समर्थप्रवृत्तेरपि न स्वतः प्रामाण्यम् अन्यथैवोपपत्तेः। प्रवृत्तिकारणमिच्छा तत्कारणमिष्टाभ्युपायताज्ञानं तत्कारणमपि तज्जातीयत्वाल्लिङ्गानुभव इत्यादिस्वकारणमाधुर्यादेव सङ्गतम्। न तु प्रामाण्यग्रहस्य क्वचिदप्युपयोगः। न चानवस्था प्रामाण्यस्यावश्यवेद्यत्वानभ्युपगमात्। तथात्वे वा उभयोरपि समत्वादिति।

यद्यपि शब्दानन्तरमुपमानमन्तर्भावयितुमुचितम्। तथापि शब्द एव चेष्टाप्रवेशः समबलप्रवृत्तेः। शब्द एव तु शाब्दव्यवहारो लौकिकः प्रायिकत्वात्। चाक्षुषे ज्ञाने दर्शनवदिति केचित्। तदभिसन्धाय शब्दप्रस्ताव एव चेष्टोपन्यास इति भावः। अन्ये तु पृथगेव चेष्टा प्रमाणमित्याहुः। न ह्यत्र धूमाग्निवन्नियताविनाभावोपलम्भः नापि घटपटादिवन्नियतसङ्केतोपलम्भः किन्तु ऊर्ध्वतर्जनीमात्रविन्यासादृशसंख्यामात्रप्रतिपत्तिः क्वचिदेव केषाञ्चिदेव भवतीति कथमिव नातिरिच्यते। तदेतदुभयमपि दूषयति प्रसिद्धाभिनयस्येति। प्रसिद्धो व्याप्त्या गृहीतोऽभिनयः संस्थानविशेषः सङ्केतविशेषो येन पुरुषेण तस्य चेष्टया कायिकव्यापारेण प्रतिपत्तिदर्शनात् प्रतिपत्तिदर्शनरूपत्वात्। तदपि प्रतिदर्शनमुपलभ्यमानं ज्ञानमनुमानमेवानुमानफलमेवेत्यर्थः। अथवा तदपि चेष्टारूपमप्यनुमानमेवानुमाकरणमेव शब्दस्मृत्यवान्तरव्यापारं तदिति विशेषः(२)। इदमत्राकूतम्। सति चेष्टायाः प्रामाण्ये तदीयप्रवेशश्चिन्तनीयः। प्रामाण्यमेव त्वसौ न भवति द्विविधा हि सा कृता-

(१) चेष्टामात्र–पा० २ पु०।

(२) स्मृत्यवान्तरव्यापारमिति शेषः–पा० २ पु०।

कृतसमय(१)भेदात्। तत्र कृतसमया तावच्चेष्टाऽभिप्रायस्थशब्दस्मरणमात्रोपयोगिनी लिपिवत्। शब्द एव तु चेष्टयोत्पादितस्मरणसमारूढः प्रमाणमर्थे। न च स्मृत्युत्पादनात् शब्दविषयमेवास्याः प्रामाण्यं प्रमाफलस्य तथात्वात्। न च स्मृतिरेवास्यावान्तरव्यापारः। यदि हि चेष्टोपधानमन्तरेणावगतोपि हि शब्दो नार्थं गमयेदेवमपि सम्भवेत्। न चैतदस्ति। नन्वेवं सति चेष्टयैडमूकस्य व्यवहारानुपपत्तिः न ह्यसौ ततः शब्दस्मृतिमान् अगृहीतसमयत्वादिति चेत्। अत एव तं प्रति समयबलेन शब्दवदर्थेपि चेष्टायाः कुण्ठत्वमेव व्यवहारस्त्वन्वयव्यतिरेकाभ्यां नियतविषयाविनाभावस्य प्रवृत्तिनिवृत्त्यौपयिकाभिप्रायानुमानादेडमूकस्य करितुरगयोः कशाङ्कुशाभिघातादिवेति। अकृतसमया चेष्टा न प्रमाणान्तरमविनाभावात्। न हि यत्र धूमस्तत्राग्निरित्यनौपाधिकसम्बन्धवद्यत्रोर्ध्वतर्जनी तत्र दशसंख्यापदार्थस्मरणमिति नियमः। भयोपदर्शनादिषु व्यभिचारात्। स्मारयतु वा पदार्थान् तथापि न प्रमाणम्। द्विधा हि सा समयप्रकारभेदात्। कृत्यन्वयिनी ज्ञप्त्यन्वयिनी च। तत्र कृत्यन्वयिनी प्रयोजकाभिप्रायं स्मारयन्ती प्रवर्तयति न तु किञ्चित्प्रमापयति घटीप्रहरकशङ्खध्वनिवदतो न प्रमाणमेव। ज्ञप्त्यन्वयिनी कारकेषु कर्तृकर्मादिरहिता केवलप्रातिपदिकार्थप्रधाना यथोर्ध्वतर्जन्या दशेति। क्रियासु वर्त्तमानप्रधाना यथा आकुञ्चितहस्ताह्वानादागच्छेति। तथापि गौरश्व इत्यादिपदैरिव स्वतन्त्रेषु पदार्थेषु स्मारितेषु परस्परमन्वयायोगः। पदैकदेशविभक्तिविशेषवच्चेष्टैकदेशविशेषात् प्रकरणविशेषाद्वा कारकादिस्मृतिनियम इति

(१) कृतसमयाकृतसमय-पा० ३ पु०।

आप्तेनाप्रसिद्धस्य(१) गवयस्य गवा गवयप्रतिपादनादुपमानमाप्तवचनमेव ।

---

चेन्न न चेष्टैकदेशेपि विशेषाभावात्(२)। न ह्यतीतानागतवर्त्तमानादिप्रतिपादकं चेष्टैकदेशविशेषं पश्यामः । प्रकरणादयस्तु विषयविशेषे शब्दादीन्नियमयन्ति न तु कारकार्थकालविशेषे नियमयन्ति तथात्वे वा गौरश्व इत्यादावपि प्रकरणादिभिः कर्मत्वादीनुन्नीय विवक्षितानुव्यवसायः स्यात् । न हि चेष्टाकलापे प्रकरणादयः कारकविशेषानाज्ञप्तुमलम् । ननु पदकदम्ब इत्यस्ति नियमः तथा च कालसंख्याविशेषप्रतिपादकविभक्तिसमभिव्याहारवैयर्थ्यप्रसङ्गः । कथं तर्हि ततो व्यवहारविशेषाः संशयप्रतिभयोरन्यतरस्मात् विशेषानुपलम्भेपि दूरवर्त्तिनि समानधर्मिणि स्थाणवर्थिन इवेति । तस्मादुभयथापि चेष्टा न प्रमाणम् तदिदमुक्तं कृताभिनयस्येति । अकृताभिनयतच्चेष्टायाः प्रामाण्यसम्भावनैव नास्ति कृताभिनयस्य तु चेष्टा स्वरूपतो यद्यपि न प्रमाणं तथापि संशयज्ञानवाक्लिङ्गतया प्रमाणमित्यर्थः ॥

उपमानमन्तर्भावयति आप्तेनेति । आप्तेन प्रसिद्धसादृश्येनाप्रसिद्धगवयस्य अज्ञातगवयस्य कीदृग्गवय इति जिज्ञासावतो गवा गोसादृश्येन गवयशब्दवाच्यस्य प्रतिपादनात् यथा गौस्तथा गवय इति आप्तवचनमेवातिदेशवाक्यमेवोपमानं प्रमाणमित्यर्थः । वाक्यादेव संज्ञासंज्ञिसम्बन्धपरिच्छेदस्यापि सिद्धेः । तथा हि न तावदस्य विषयः सादृश्यपदव्यपदेश्यं पदार्थान्तर-

---

(१) अप्रसिद्धावयवस्य–पा० ३ पु० ।

(२) चेष्टैकदेशाभावात्–पा० ४ पु० ।

मेव सम्भावनीयम् सादृश्यस्य सामान्यानातिरेकात् भूयोवयवसामान्ययोग एव हि सादृश्यं न चैतत्सदृशोसाविति ज्ञानं न प्रत्यक्षमिन्द्रियासम्बन्धत्वात् । विशिष्टाननुभवेन चास्मरणरूपत्वादुपमानं प्रमाणमिति वाच्यम् तथा सत्येतद्विसदृशोसावित्यस्याप्युपमानत्वापत्तेः । सादृश्यनियतं चैतत् । अथैतदर्थापत्तिरेवेति मनोरथः तथा च कृतमस्मास्वपि विद्वेषेणेति । संज्ञासंज्ञिसम्बन्धपरिच्छेदः प्रत्यक्षाद्यसाध्यत्वादुपमानफलमिति चेत् न वाक्यादेव समयपरिच्छेदोपपत्तेः । यः खलु गोसदृशस्तस्य गवयशब्दः संज्ञेतिवाक्यादेवानेन समयस्य परिच्छिन्नत्वात् केवलमिदानीं प्रत्यभिजानाति अयमसाविति । भवेदेवं यदि सादृश्यं शब्दप्रवृत्तिनिमित्तं स्यात् तथा सत्यप्रतीतगूनामव्यवहारप्रसङ्गात् । न चोभयमपि निमित्तम् । स्वयंप्रतीतसमयसम्बन्धे(१) अतिदेशवाक्यप्रयोगानुपपत्तिरिति चेत् न गवयशब्दे वृद्धव्यवहारात् गवयत्वे व्युत्पन्नो यदि वा सादृश्य इति कथमेतन्निर्द्धारणीयम् । ननु मानमनिर्द्धार्यताम् तथाप्यापाततः सन्दिहानत्वात् एतावतैव वाक्यमफलमिति चेन्न । पूर्वं निमित्तानुपलब्धेर्न फलसिद्धिः इदानीन्तु तस्मिन्नुपलब्धे तदेव वाक्यं स्मृतिसमयारूढं फलिष्यति । अध्ययनसमयगृहीत इव वेदराशिरङ्गोपाङ्गपर्यवदातस्य कालान्तरे । न च वाक्यं वाक्येन स्वार्थस्य प्रागेव वा बोधितत्वात् पर्यवसितमिति । गोसदृशपदस्योपलक्षणनिमित्तयोरन्यतरतात्पर्यसन्देहात् । इदानीन्तु गवयत्वेऽधिगते तर्कपुरस्कारात् सादृश्यस्योपलक्षणतायां व्यवस्थापितायां गङ्गायां घोष इतिवत् वाक्यादेवान्वयप्रतीत्युपपत्तेः । तदत्र निपुणाः प्रत्यवतिष्ठन्ते । नन्वेवमपि वाक्यं पर्यवसितमेव तथाहि गोसदृशो गवय

(१) स्वयंप्रतीतसमयसंक्रान्तये–पा० २ पु० ।

दर्शनार्थादर्थापत्तिर्विरोध्येव श्रवणा(१)दनुमितानुमानम् ।

---

इति सामानाधिकरण्येनैवान्वयोपपत्तौ विशेषसन्देहेपि वाक्यस्य पर्यवसितत्वेन मानान्तरोपनीतानपेक्षणात् । भवति हि रक्तारक्तसन्देहेपि पटो भवतीति वाक्यपर्यवसानम् अन्यथा वाक्यभेददोषात् । यत्र तु गङ्गायां घोष इत्यादौ पदार्था एवान्वयायोग्यास्तत्र प्रमाणान्तरोपनिपातेनाप्यन्वयः । तस्माद्गोसदृशो गवयशब्दवाच्य इति(२) वाक्यान्निश्चितेपि सामान्यविशेषवाचकत्वे अस्य मानान्तरमनुसरणीयम् । न च तदनुमानादिकं सम्भवतीत्युपमानमेव तदाचक्षत इति साधु विरचितम् । एतत्तु मुहूर्तमात्रमवधीयताम् द्विविधं हि सामानाधिकरण्यं शाब्दमार्थं च तत्र न तावच्छाब्दसामानाधिकरण्यमात्रेणान्वयोपपत्तिः । माता मे वन्ध्येत्यादिष्वपि प्रसङ्गात् । नापि क्रियाकारकयोः परस्परमपेक्षामात्रेण तथा सति गङ्गायां जलमितिवद्गङ्गायां घोष इत्यत्रापि परस्परमाधाराधेयभावप्रतीतावन्वयप्रसङ्गात् । आर्थं तु सामानाधिकरण्यं यथा घोषपदार्थपर्यालोचनायामिह दुर्लभम् तथा गोसदृशो गवय इत्यत्रापि दुर्लभमेव । गोसादृश्यं गवयपदप्रवृत्तिनिमित्तं न भवतीत्यायुष्मतैव निष्टङ्कितम् । उपलक्षणमात्रेण चोदाहृतेन गोसादृश्येन यदुपलक्षणीयं गवयत्वं तेन सह यद्यन्वयः तदा गङ्गापदेनाप्युपलक्षणीयतीरेणैव सह घोषस्यान्वयोपपत्तौ कथमन्वयवैधुर्यम् । तस्माद्वास्तवसामानाधिकरण्यविरहादपर्यवसन्नं वाक्यमेवंविधां प्रमां करोति तच्चानुमानशरीरमेवेति ॥

---

(१) शब्दश्रवणा–पा० २ पु० ।

(२) तस्माद्गवयशब्दो वाचक–पा० ४ पु० ।

अर्थापत्तिमन्तर्भावयति दर्शनार्थापत्तिरिति । दृश्यते उपलभ्यते इति दर्शनमुच्यते । उपलभ्यते हेयोपादेयत्वादिना विषयीक्रियत इत्यर्थः । दर्शनं चासावर्थश्चेति दर्शनार्थः दृश्यमानोर्थो यत्रानुपपद्यमानः सन्नर्थान्तरं कल्पयति सा दर्शनार्थापत्तिः यथा जीवन् देवदत्तो गृहे नास्तीति । इह हि गृहासत्त्वं दृढतरप्रमाणोपलब्धं जीवता क्वापि भवितव्यमिति सामान्यतः प्रवृत्तानुमानविरोधादन्यथानुपपद्यमानमर्थान्तरं बहिःसत्त्वरूपं कल्पयतीति तदेतद्दूषयति विरोध्येवेति । विरोध्यनुमानमेवेत्यर्थः । यद्यपि जीवतो गृहाभावस्य बहिःसद्भावो न विरोधी किन्त्वनुकूल एवोपपादकत्वात् तथापि जीवनगृहासत्त्वयोः परस्परविरोधित्वादनुमानं विरोध्यनुमानम् । इदमत्राभिसंहितम् । न तावदनियम्यानियामकयोः परस्परमुपपाद्योपपादकभावः । अतिप्रसङ्गात् । अथानेन सहैव स्थितिरनेन विना नावस्था यस्य स्वभावादेव मिलितम् । एवं तर्हि व्याप्तिरेवेयमन्वयव्यतिरेकमुखनिरूप्येति कुतमर्थान्तरत्वग्रहेणेति(१) । न च सत्यप्यविनाभावे तज्ज्ञानवैधुर्यात् प्रमाणान्तरत्वम् अनुपपत्तिप्रतिसन्धानस्यावश्याभ्युपगन्तव्यत्वात् । अन्यथाऽतिप्रसङ्गात् । अर्थापत्त्याभासानवकाशाच्च । यदाहमिह तदा नान्यत्र यदा वान्यत्र तदा नेहेति(२) व्याप्तिग्रहस्य च प्रत्यक्षत एव सुकरत्वात् । न चाविनाभावनिश्चयेप्यपक्षधर्मत्वादर्थापत्तित्वं व्यधिकरणेनाविनाभावस्यैव निश्चयायोगात् । न चात्र प्रमाणद्वयविरोधोपि तथासति रज्जुसर्पवदेकस्य मिथ्यात्वप्रसङ्गात् विभिन्नविषयत्वाच्च । क्वाप्यस्तीति सामा-

---

(१) अतिप्रसङ्गात् तथाचानेन व्याप्तिरेवेयमन्वयव्यतिरेकमुखेन निरूप्येति कृतमर्थान्तरत्वग्रहेण–पा० २ पु० ।

(२) यदाहमिह तदानान्यत्र यदा नान्यत्र तदाहमिहेति–पा० ३ पु० ।

न्यतो गेहस्यापि प्रवेशादेकविषयताप्यस्तीति चेत् यद्येवं क्वचिदस्ति क्वचिन्नास्तीतिवन्न विरोधः । नन्वत्रापि विरोध एवार्थापत्त्या चोभयोरप्युपादानाद्विषयव्यवस्थेति चेत् न विभिन्नदेशतयानयोः सर्वत्र सम्भव(१)व्यतिरेकेणैकविषयतया विरोध एव न सङ्गच्छते तच्च व्याप्तिशरीरमेवेति । प्रसिद्धानुमानसाधारणं चैतत् न हि धूमोपि विना वह्निनोत्पद्यते धूमाद्वह्निना भवितव्यमनुपलब्धेश्च न भवितव्यमिति । प्रमाणद्वयविरोधे चार्वाग्भागपरभागव्यवस्थापनस्य सफलत्वात् । अनुमानाभावे विरोधस्यैवासिद्धेरिति चेत् न व्याप्तिग्राहकेण प्रमाणेन विरोधस्योक्तत्वात् । तस्मात् सुष्ठूक्तं विरोध्यनुमानमेवेति । ननु तथापि श्रुतार्थापत्तिः पृथगस्तु केवलव्यतिरेक्यादिवत् किञ्चिद्वैधर्म्यादित्याह श्रवणादिति । एकस्य शब्दस्य श्रवणादनुपपद्यमानतया यच्छब्दान्तरकल्पनं सा श्रुतार्थापत्तिः । यथा पीनो देवदत्तो दिवा न भुङ्क्त इति श्रवणाद्रात्रौ भुङ्क्त इति वाक्यकल्पना शाब्दी ह्याकाङ्क्षा शब्देनैव परिपूर्यते न हि भवति किं पचतीत्युक्ते कलायमिति शब्दप्रयोगमन्तरेण प्रत्यक्षोपदर्शिते कर्मणि श्रोतुराकाङ्क्षानिवृत्तिः । क्वचिद्भ्रूसङ्केतादाव(२)पि चेष्टाविशेषादभिप्रायस्थशब्दविशेषानुमानादेव तद्विनिवृत्तेः । ननु वाक्येन प्रागेव स्वार्थस्य बोधितत्वात् किमत्रानुपपन्नम् वाक्यस्वरूपमेव गौरश्व इतिवत् परस्परमन्वयाभावात् इति दूषयति अनुमितानुमानमिति । लिङ्गभूताद्वाक्यादनुमितेन पीनत्वेन तत्कारणीभूतं हि रात्रिभोजनमनुमीयते अत्राप्येतदभिसंहितम् श्रुतार्थापत्तिस्तावत् स्वसिद्धान्तविरोधिनी तथाहि सिद्धस्तावदर्थः प्रमाणस्य विषयो न तु तेनैव कर्तव्यः । न च पीनो

(१) सर्वत्रोपलम्भ—पा० ३ पु० ।
(२) भ्रूसङ्केतादावपि—पा० २ पु० ।

सम्भवोऽप्यविनाभावित्वादनुमानमेव ।

अभावोऽप्यनुमानमेव यथोत्पन्नं कार्यं कारणसद्भावे लिङ्गम् । एवमनुत्पन्नं कार्यं कारणासद्भावे लिङ्गम् ।

---

देवदत्तो दिवा न भुङ्क्ते इत्यत्र रात्रौ भुङ्क्ते इति वाक्यशेषोऽस्ति अनुपलम्भबाधितत्वात् । उत्पत्तिव्यक्तिसामग्रीताल्वादिव्यापारविरहादयोग्यस्याशङ्कितुमशक्यत्वात् । तस्मादभिप्रायस्य एव परिशिष्यते । गत्यन्तराभावात् वेदरूपे च वाक्ये वक्तुरभावात् स चेदभिप्रायो नास्ति नास्ति श्रुतार्थापत्तिरिति । न च लोके तद्व्युत्पादनं निष्प्रयोजनत्वात् । लौकिकवैदिकयोरल्पत्वाच्च । तस्मात्स्वीकरणीयं वेदस्य पौरुषेयत्वं प्रतिहर्तव्या वा श्रुतार्थापत्तिरिति दुरुत्तरं व्यसनम् । यत् पुनः शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यत इति किमेतावता यस्य यथा नियमस्तस्य तथैव गमकत्वम् अर्थवच्छब्देऽपि तस्याविशेषात् । तस्मात् सूक्तम् अनुमितानुमानमिति ॥

सम्भवमन्तर्भावयति । सम्भवोपीति । द्विविधो हि सम्भवो योग्यताकारो निश्चयाकारश्च । तत्र प्रथमोऽप्रमाणमेव अनिश्चायकत्वात् । यथा सम्भवति क्षत्रिये शौर्यं सम्भवति च ब्राह्मणे तपः । द्वितीयस्तु यथा सम्भवति शतं सहस्रे सम्भवति पुण्यं पुराणेष्विति । तदर्थमाह । अविनाभावित्वादिति । सहस्रं हि शतेनाविनाभूतं न हि कार्यं कारणेन विना भवतीत्यनुमानमेव ॥

स्यादेतत् । उपमानादौ प्रमाणान्तरप्रसक्तिसंभावनया यत् तत्रान्तर्भावचिन्तनं तदुचितमेव यत्र तु प्रमाणान्तरस्यैव प्रसक्तिविरोध(१)स्तदभावाख्यं प्रमाणमवश्याभ्युपगन्तव्यमत

---

(१) प्रमाणस्यैव प्रसक्तिनिषेधः–पा० २ पु० ।

आहाभावोऽप्यनुमानमेवेति । अपिशब्दात् क्वचित्प्रत्यक्षमेवेत्यर्थः । नन्वभावस्य नेन्द्रियेण सन्निकर्षो नापि सत्तामात्रेण व्याप्रियमाणस्य क्वचित्(१) लिङ्गत्वमत आह । यथोत्पन्नमिति । यथोत्पन्नं कार्यं कारणस्य सामग्र्याः सद्भावे लिङ्गमेवमनुत्पन्नं कार्यं कार्यप्रागभावः कारणाभावे सामग्र्या अभावे लिङ्गं ज्ञापकम्(२) । स चाभावः क्वचित् प्रत्यक्षः क्वचिच्चानुमानिक इति लोकसिद्धमेवेत्यर्थः । ननु इह भूतले घटो नास्तीतिप्रतीतेः साक्षात्कारित्वमसिद्धम् । प्राङ्मास्तितादिष्विन्द्रियव्यतिरेकेणापि तथाविधाभावप्रतीतेरिति चेत् । न वैजात्यात् । न हि साक्षात्कृत्यनुमित्योरेकजातीयत्वम् । तथा व्यभिचारे वा साक्षात्परिदृश्यमानमपि वह्निज्ञानं न प्रत्यक्षतामियात् । तत्राप्यनुमीयमानवह्न्यादाविन्द्रियव्यभिचारसम्भवात् साक्षात्कारिजातीये चाभावज्ञाने तस्य वज्रलेपायमानत्वात् । अभावज्ञानमानुमानिकमित्येतदेवासङ्गतम् । तथाविधलिङ्गाभाव इत्यपि न वाच्यम् । भवति हि तद्भूतलं तदा चैत्राभाववत् एकज्ञानग्रहणयोग्यस्य ज्ञायमानत्वेऽपि चैत्रस्तया अज्ञायमानत्वादिति । न च प्रदेशान्तरे घटवत्तया अज्ञायमाने प्रदेशान्तरे च तद्वत्तया ज्ञायमानेन भूतलेनेदमनैकान्तिकमिति वाच्यम् । तत्रेतिपदेन विशेषणात् । न चैवं सति ज्ञानाभावस्यात्मधर्मत्वेन भूतलधर्मत्वाभावाद्व्यधिकरणत्वं भूतलज्ञानाभावयोर्विषयविषयिभावलक्षणसम्बन्धस्य विद्यमानत्वात् । यत् पुनरत्र प्रलपितम् ज्ञानाभावो न तावद्भूतलमात्रेण निरूप्यते घटवत्यपि तथाभावप्रसङ्गात् घटाभाववद्भूतलनिरूप्यत्वपक्षेऽन्योन्याश्रयः(३) । प्रवृत्ते ह्यनुमाने तत्राभावग्रहणं गृहीते

(१) कस्यचित्–पा० ४ पु० ।  (२) ज्ञापकः–पा० ४ पु० ।
(३) प्रसङ्गात् द्वितीयेऽप्यन्योन्याश्रयः–पा० २ पु० ।

च तस्मिंस्तस्य लिङ्गतायामनुमानप्रवृत्तिः। परस्य तु व्यधिकरणा-ऽप्यनुपलब्धिर्व्यवहारयतीति। तदसत्। वस्तुगत्या घटाभाववतैव भूतलमात्रेण ज्ञानाभावस्य निरूपणाभ्युपगमात्। न चातिप्रसङ्गः तत्र घटाभावात्। न चान्योन्याश्रयः सत्तामात्रेणोपयोगात्। यदि घटाभाववता भूतलेनानुपलब्धिर्निरूप्येत तदा विपरीतस्यैव घटसम्बन्धस्य प्रसङ्गः स्यात्। तस्य जात्युत्तरत्वमेव न चेदेवमनुपलब्धिस्वीकारेऽप्यप्रतीकारादिति। स्यादेतत् इन्द्रियान्वयव्यतिरेकानुविधाने सत्यपि तेन सहाभावस्यायोग्यत्वेन सम्बन्धाभावात्। अधिकरणमात्रानिष्ठतया तत् सङ्कोच्यते यथा पर्वतोऽयं वह्निमान् धूमवत्त्वादिति चेत्। भवेदेवं यदि रूपादिष्वपि चक्षुरादेर्योग्यतामीक्षामहे कार्यदर्शनात्तु तत्कल्पनमिहापि समानम्। न च योग्यताया अनिश्चयमात्रेण स्फुटतरसाक्षात्कारापह्नवः। तथा सत्यन्योन्याश्रयप्रसङ्गात्। कुतो वानुमीयमानवह्न्यादावपि चक्षुर्न प्रवर्तते। तस्य सम्बद्धवर्तमानविषयत्वात्। वह्नेश्च व्यवधानवशेनासम्बद्धत्वादिति चेत्। नन्वेतदेव कुतः। व्यवधाने साक्षात्कारिप्रत्ययप्रसङ्गादिति चेत्। तर्हि यत्र साक्षात्कारस्तत्राव्यवधानमिति कृतमस्मासु मिथ्याभिनिवेशेन। यद्यधिकरणग्रहणे तदुपक्षीणं स्यात् अन्धस्यापि त्वगिन्द्रियोपनीतघटादौ रूपविशेषाभावप्रतीतिः स्यात्। अस्ति हि तस्याधिकरणग्रहणमस्ति च प्रतियोगिस्मरणम्। अस्ति च श्यामे रक्तत्वस्य योग्यस्याभावोऽनुपलब्धिश्च। अधिकरणग्राहकेन्द्रियग्राह्याभाववादिनोऽपि समानमेतदिति चेत् न प्रतियोगिग्राहकेन्द्रियग्राह्योऽभाव इत्यभ्युपगमात्। ममापि प्रतियोगिग्राहकेन्द्रियेणाधिकरणग्रहणे अनुपलब्धिः प्रमाणमित्यभ्युपगम इति चेत्। न वायौ त्वगिन्द्रियोपनीते रूपाभावप्रतीत्यनुदयप्रसङ्गात्। तथापि तत्तत्र सान्नि-

कृष्टमिति चेत् । हन्तैवं तदन्यत्र चरितार्थमिन्द्रियमवश्यापेक्षणीयं च रूपाभावाद्यनुभवेनेति सिद्धं नः समीहितम् । यत्पुनरेकाकिभूतलस्वरूपातिरिक्तमभावाख्यं प्रमेयमेव नास्तीति । तदसत् । एकत्वसंख्याया घटेपि सति तदवस्थत्वात् । अद्वितीयमात्रस्य व्यभिचारात् । घटद्वितीयभूतलेऽघटव्यवहारात् अद्वितीयमात्रेण च घटाभाववत् पटाभावव्यवहारस्यापि प्रसक्तेरविशेषात् । प्रतियोगिविशेषाद्विशेषो दृश्यमाने स्मर्यमाणे वा प्रतियोगिनि तथाभूतभूतलस्याभावाव्यवहारहेतुत्वादिति चेत् । कस्य पुनः प्रतियोगी घटः । न तावद्भूतलतद्विज्ञानयोर्घटेन सह सम्भवात् । परस्परमबध्यत्वाच्च । नाप्यभावव्यवहारस्य असत्यप्यभावे सघटेपि घटाभावव्यवहारस्यापि(१) प्रसञ्जितत्वात् । यत् पुनः कीदृशेन भूतलेनाभावो निरूप्यते इति तदसत् भावव्यवहारस्यापि लोपप्रसङ्गात् । तथाहि घटस्य व्यवहारो न तावद्भूतलमात्रेण निरूप्यते अघटवत्यपि प्रसङ्गात् । नापि सद्वितीयेन पटशकटवत्यपि प्रसङ्गात् । (व्यवहर्तव्यद्वितीयेनेति चेत् । तत्रैव संशयः । किं विरोधिना भूतलेन सम्बद्ध्यते अनुकूलेन वा । विरोधित्वादेव न प्रथमः । द्वितीये तु घटवद्भूतलेनैव निर्वाह इति ।)(२) व्यवस्थानुपपत्तेश्च । घटवत्ता तु तन्निरूपणे घटसम्बन्धात् प्राक् तत्सम्बन्धानुपपत्तेः । सति सम्बन्धे वा पश्चात् घटस्वीकारवैयर्थ्यप्रसङ्गात् । तस्माद्भावव्यसनमपि त्यज्यतां स्वीक्रियतां वाऽभावः प्रमेयमिति । स च प्रथमतो द्विधा संसर्गाभावः तादात्म्याभावश्च । संसृज्यमानप्रतियोगिनिरूप्योऽभावः संसर्गाभावः । तदात्मत्वाभिमानप्रतियोगिनिरूप्यश्च तादात्म्याभावः । न च स्तम्भेधिकर-

(१) घटाभावस्य-पा० २ पु० ।
(२) () एतच्चिह्नस्थः पाठो २ पु० नास्ति ।

तथैवैतिह्यमप्यवितथमाप्तोपदेश(१) एवेति।

णे पिशाचस्य तादात्म्यं नास्तीति अयमपि संसर्गाभाव एवेति वाच्यम् न वै स्तम्भपिशाचयोस्तादात्म्यं प्रमाणसिद्धं किञ्चिदस्ति यत् प्रतिषेधनीयम्। किन्तु स्तम्भात्मतया प्रसञ्जितस्य पिशाचस्यायं प्रतिषेध इति। संसर्गाभावः प्राक्ध्वंसात्यन्तभेदेन त्रिधा भिद्यते। चरमसामग्रीनिपतितसमवायिकारणजातीये सम्भावितोत्पत्तिकस्य कार्यजातीयस्य स्वोत्पत्तेः प्राक् संसर्गाभावः प्रागभावः। तथाजातीये कारणे उत्पन्नस्य पश्चात् संसर्गाभावः प्रध्वंसाभावः। सम्बन्धिमात्रे सम्बन्धिमात्रस्यानियतकालसंसर्गाभावोऽत्यन्ताभावः। तदनेनेह भूतले घटो नास्तीति व्याख्यातम्। घटतत्संसर्गाभावयो(२)रत्यन्तनिषेधासम्भवेपि संसर्गविशेषव्यक्तेरत्यन्तमभावात्। न चाप्रसक्तप्रतिषेधः सामान्यतस्तस्यापि प्रसक्तत्वादिति। स चायं नोत्पद्यते नापि विनश्यति इतरेतराभावो सामान्यवदविनाशित्वान्नित्य इति॥

तथैतिह्यमन्तर्भावयति तथैतिह्यमिति। इतिहेतिनिपातसमुदायः। पुरावृत्ते वर्तते तस्य भाव ऐतिह्यम् यथादूरनिर्दिष्टप्रवक्तृकप्रवादपारम्पर्यमैतिह्यम्। श्रुतिस्मृत्यादिवाक्यवत् प्रसिद्धप्रकृष्टवक्तृकं यन्न भवति। लोके च प्रसिद्धमबाधिताकारं प्रवादपरम्परया यदभिसन्धाय पठन्ति आचारात् स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनमिति। एतादृशं चावितथमेवेत्याप्तोपदेश एव। तथा चानुमान एवान्तर्भवतीति भावः।

ननु सिद्धमनुमानं पञ्चावयवप्रयोगसहायता तु तज्ज्ञानस्या(३)नुपपन्ना तद्व्यतिरेकेणापि सुखमनुमानोदयात्। न चात्रार्थे

(१) आप्तवचनमिति–पा० ५। ७ पु०।

(२) घटतत्संसर्गमात्रयो–पा० ३ पु०। (३) तस्या पा० ५ पु०।

पञ्चावयवेन वाक्येन स्वनिश्चितार्थप्रतिपादनं परार्थानुमानम् । पञ्चावयवेनैव वाक्येन संशयितविपर्यस्ताव्युत्पन्नानां परेषां स्वनिश्चितार्थ(१)प्रतिपादनं परार्थानुमानं विज्ञेयम् ।

अप्रतिपन्न एवासौ तथा सति परप्रतिपादनस्याप्यनुपपत्तेरतआह पञ्चावयवेनेति । अर्थ्यते गम्यते अनुमेयमनेनेत्यर्थो लिङ्गं तस्यार्थस्य स्वनिश्चितस्य साध्याविनाभावितया स्वयं गृहीतस्य प्रतिपाद्यतेऽनेनेति प्रतिपादनं प्रतिपादकं यत् परार्थं परसन्देहव्युदासार्थं तत् परार्थानुमानम् । केन रूपेण पुनस्तत्प्रतिपादकत्वं तदाह पञ्चावयवेन वाक्येनेति । इत्थंभूतलक्षणे तृतीया पञ्चावयववाक्यरूपं तदित्यर्थः । अथवा सुनिश्चित(२)स्यानुमेयस्य प्रतिपादनं प्रतिपत्तिर्येन लिङ्गप्रतिपादनानन्तरव्यापारवता पञ्चावयवेन वाक्येन स्मृतिसमारूढेन परार्थं भवति तत्तथाभूतं वाक्यं परार्थानुमानमिति । न चैवं सत्यनुमेयप्रतिपत्तेः शाब्दत्वप्रसङ्गः केवलस्य शब्दस्यानिमित्तत्वात् । न च लिङ्गप्रतिपादनमात्रेण विरम्य व्यापाराभावो विभिन्नविषयत्वादिति । ननु बौद्धानां त्र्यवयववादिनामपि वाक्येन संव्यवहारो भवत्यतस्तद्व्युदासार्थं स्वोक्तमेव विवेचयति पञ्चावयवेनेति । इतरव्यवच्छेदाऽवधारणार्थः । तत्र व्युत्पादयिष्यते प्रकृतमर्थमधिकृत्य सन्दिग्धवद्विपर्यस्ताव्युत्पन्नयोरपि जल्पवितण्डाभ्यां गलितेऽहङ्कारे सन्दिग्धतामेव नीत्वा प्रतिपादनम् । इयांस्त्वत्र विशेषः कस्यचित् स्वरसवाही सन्देहः कस्यचित्त्वाहार्य इति । तदनेन सन्दिग्धप्रतिपत्तये पञ्चावयववाक्यमङ्गमेवेति(३) दर्शितम् । न हि स्वयं स्वभ्यस्तशा-

(१) परेषामनिश्चितार्थ–पा० १ पु० ।

(२) स्वनिश्चित–पा० ४ पु० । (३) सङ्गतमेवेति–पा० २ पु० ।

ख्रस्य पुस्तकोपादानमेकान्ततोऽनुपयुक्तमिति अनभ्यस्तस्याऽपि तथा सम्भवतीति भावः । पदानि पुनः परस्परान्वितं स्वार्थं बोधयन्ति । वाक्यार्थस्य लिङ्गमन्यथैवेति किमार्द्रकवणिजो वहित्रचिन्तया । न हि स्वातन्त्र्येण शब्दस्य प्रामाण्यमस्माद्भविष्यते किन्तु वक्तृज्ञानोपक्षया । न चा(१)न्विताभिधाने प्रमाणमस्ति । अन्वितार्थप्रतीतेरन्यथाप्युपपत्तेः । यत्र व्युत्पत्तिस्तद्वस्तुगत्या पदार्थान्तरान्वितमिति तु न प्रकृतोपयोगि न हि यत्र चक्षुषः सामर्थ्यमधिगतं तद्वस्तुगत्या स्पर्शवादिति तद्वत्ताप्यस्य विषयः । आकाङ्क्षानुपपत्तिरस्तु न हि सामान्यतोनधिगमे(२) विशेषजिज्ञासा स्यादिति चेत् । न दृष्टेरविशेषे जिज्ञासावदाक्षेपतोऽप्युपपत्तेः । शब्दमहिमानमन्तरेण यतः कुतश्चिदपि स्मृतेषु पदार्थेषु अन्वयप्रतीतिः स्यात् । न चैवं ततः शब्दशक्तिरवश्यं कल्पनीयेति चेत् । आधुनिककविकाव्यानुपपत्तेः । न हि संसर्गविशेषमप्रतीत्य वाक्यरचना नाम। न च स्वोत्प्रेक्षायां चिन्तावशेन पदार्थस्मरणव्यतिरिक्तमन्यत् प्रत्यक्षादि सम्भवति ततः स्मृतानां कविभिः संसर्गो नावगम्येत न हि येन यन्नियमेनापेक्षते तत्र तेनावश्यं स्वशक्तिराधेया । तथा च सति कारकज्ञापकादिभिः कार्यज्ञेयादिषु शक्तिकल्पनागौरवस्य सर्वत्र दुर्वारत्वात् । स्यादेतत् । पञ्चावयववाक्यं तदर्थधियमाधत्त इत्यसङ्गतं निरवयवस्य हि स्फोटस्य शब्दरूपत्वात् । यद्यपि च नाप्रतिपादितात् शब्दादर्थप्रतीतिरर्थप्रतिपत्तौ च सत्यां तदन्यथानुपपत्त्या स्फोटाभिधानस्य प्रतिपत्तिरित्यन्योन्याश्रयग्रस्ततया नार्थापत्तिः प्रमाणं तथापि

(१) प्रामाण्यमिष्यते । न चा-पा० ३ पु० ।

(२) सामान्यतोन्विताविगमे-पा० २ पु० ।

गोपदमित्याभिन्नाकारावगाहि प्रत्यक्षमेव नानावर्णातिरिक्तमेकमवयव्यादिवदभिन्नार्थं स्फोटं साधयति । न चैतदौपाधिकन्तदभावात् । न तावदेकधीविषयत्वमुपाधिः । अनुभवानां क्रमशालितया तत्प्रभवसंस्काराणां क्रमवत्त्वात् तज्जनितस्मृतीणामपि क्रमवत्त्वात् । अननुसंहितोपाधेरुपहितप्रत्यययायोगाच्च । नाप्येकत्वप्रतीति(१)हेतुत्वमुपाधिः । अन्योन्याश्रयप्रसङ्गात् । प्रतीते ह्येकपदत्व एकत्वप्रतीतिहेतुत्वमवगते तस्मिन् एकपदत्वसिद्धिरिति । अतः एवं नैकार्थसम्बन्धाख्यानमप्युपाधिः तस्मादुपाधेरसंवेदनात् वनादिप्रत्ययवदयं प्रत्ययो न भ्रान्त इति । अत्रोच्यते । औपाधिक एवायमभिन्नार्थप्रत्ययः । सम्भवति च एकार्थप्रतीतिहेतुत्वमेवोपाधिः । न चान्योन्याश्रयत्वं पूर्वमेकपदत्वावधारणानभ्युपगमात् । एकत्वप्रतीतिहेतुत्वं च क्षणिकत्वेपि स्मर्यमाणानां नियतानुपूर्वीविशिष्टानां यावन्तो यादृशा ये चेत्यादिपरिगृहीतानां सुकरमेव अन्यथा तु स्फोटस्वीकारेपि समानत्वादिति कृतं विस्तरेण । पूर्वपूर्वपदस्मरणानुगृहीतमन्त्यपदं स्मर्यमाणं वाक्यं न पुनरनुभूयमानं क्रमवद्वर्णसमुदायस्य पदस्य श्रवणेन्द्रियजातानुभवगोचरत्वासम्भवात्(२) । यथा च पूर्ववर्णानुस्मृतिनिचयसहितान्त्यवर्णानुभवस्योपान्त्यान्त्यवर्णवस्तुस्मृत्यनुभवयोर्निरन्तरं द्रुतमुच्चार्यमाणवस्तुपक्षे विनश्यदवस्थयोरुपान्त्यान्त्यानुभवयोः लब्धस्मृत्यनुभवरूपवैचित्र्यस्यैकस्य वा ज्ञानकारणत्वं न सम्भवति तत् सर्वं समानतन्त्रासिद्धत्वात् । नेह प्रतन्यते । पदप्रक्रिया तु प्रथमवर्णज्ञानस्योत्पादः संस्कारस्योत्पद्यमानतेत्येकः कालः ततः संस्कारस्योत्पादः तेनैव

(१) एकार्थप्रत्यय-पा० ३ पु० ।

(२) ज्ञानगोचरत्वासम्भवात्-पा० २ पु० ।

पूर्ववर्णानुभवसंस्कारसचिवेन द्वितीयसंस्कारस्योत्पद्यमानता प्रथमवर्णज्ञानस्य विनश्यत्तेत्येकः कालः। ततः संस्कारस्योत्पादः द्वितीयवर्णज्ञानस्य विनश्यत्ता प्रथमवर्णज्ञानस्य च विनाशः। अन्त्यवर्णानुभवस्योत्पादः उत्पन्नेन संस्कारेणान्त्यवर्णानुभवसहकारिणा पूर्ववर्णद्वयविषयस्मरणस्योत्पाद्यमानतेत्येकः कालः(१) ततः स्मरणस्योत्पादः अन्त्यवर्णानुभवस्य विनश्यत्ता द्वितीयवर्णज्ञानस्य नाशः ततः समयस्मृतेरुत्पद्यमानतेत्येकः कालः । ततः समयस्मृतेरुत्पादः। स्मरणस्य विनश्यत्ता अन्त्यवर्णानुभवस्य विनाशः पदार्थप्रतिपत्तेरुत्पद्यमानतेत्येकः कालः ततः पदार्थप्रतिपत्तेरपि संस्कारोत्पत्तिः(२) । स्मरणस्य विनाशः । सङ्केतस्मृतेर्विनश्यत्ता संस्कारस्योत्पद्यमानतेत्येकः कालः । ततः संस्कारस्योत्पादः । पदार्थस्मृतिप्रतिपत्ते(३)-र्विनश्यत्ता सङ्केतस्मृतेर्विनश्यत्तेत्येकः कालः । पदार्थस्मृतिप्रतिपत्तेरपि(४) संस्काराद्विनाश इति । अस्यां तु प्रक्रियायां सङ्केतस्मृतिसमय एवान्त्यवर्णानुभवस्य स्मरणेन विनाशितत्वात् । पदार्थप्रतिपत्तौ पूर्वभावित्वमपि नास्तीति कारणत्वं न स्यात् इति दोषस्मरणानुभवयोरविरोध एव परिहार इति मन्तव्यम् । वाक्यप्रक्रिया तु अन्त्यवर्णानुभवस्योत्पादः स्मरणस्य विनश्यत्ता। ततः संस्कारपदप्रतिसन्धानयोरुत्पद्यमानतेत्येकः कालः। अथ तयोरुत्पादः। स एव पदप्रतिसन्धानात्मा समयसंस्कारो-

---

(१) उत्पन्नेन च संस्कारेणान्त्यवर्णानुभवसहकारिणा पूर्ववर्णद्वयनिचयस्मरणस्योत्पद्यमानतेत्येकः कालः–पा० २ पु० ।

(२) पदार्थप्रतिपत्तेरुत्पत्तिः–पा० २ पु० ।

(३) पदार्थप्रतिपत्तेर्विनश्यत्ता–पा० ३ पु० ।

(४) पदार्थस्मृतेरपि–पा० ४ पु० ।

अवयवाः पुनः प्रतिज्ञापदेशनिदर्शनानुसन्धानप्रत्याम्नायाः । तत्रानुमेयोद्देशोऽविरोधी प्रतिज्ञा प्रतिपिपादयिषितधर्मविशिष्टस्य धर्मिणोऽपदेशविषयमापादयितु(१)मुद्देशमात्रं प्रतिज्ञा । यथा द्रव्यं वायुरिति ।

---

द्बोधः । सम्बन्धस्मरणस्योत्पद्यमानता संस्काराद्विचित्रस्याप्रत्ययस्य विनश्यत्तेत्येकः कालः । अथ समयस्मरणस्योत्पादः विचित्रप्रत्ययस्य विनाशः । पदार्थानुसन्धानस्याविनश्यत्तेत्येकः कालः ।

पञ्चावयवं वाक्यमित्युक्तं तत्र च विशेषनिश्चयार्थमाहावयवा इति । पुनःशब्देनावधारणार्थेन जिज्ञासादयो निराकृताः । तेषामशब्दरूपत्वात् । तत्र न्यायप्राप्तत्वात् प्रथमं प्रतिज्ञामुदाहरति । तत्रानुमेयोद्देशोऽविरोधी प्रतिज्ञेति । तत्र तेष्ववयवेषु मध्ये । नन्वेवं सति यत् कृतकं तदनित्यमित्यस्यापि प्रतिज्ञात्वं स्यात् अनुमेयोद्देशत्वात् । अतः प्रोक्तमेव विवृणोति प्रतिपिपादयिषितेत्यादिना । अस्तित्वादिधर्मापेक्षया सर्व एव हि धर्मिणो धर्मविशिष्टाः । अतः प्रतिपादयितुमिष्टेन धर्मेण विशिष्टो यो धर्मी पक्षस्तस्योद्देशमात्रमभिधानमात्रं साधनरहितं प्रतिज्ञा । न च तच्छून्यमुद्देशमात्रं किञ्चित्करमित्याह । अपदेशविषयमापादयितुमिति । अपदेशो हेतुः । नन्वेवमप्यसाधनाङ्गत्वात् नैतत् प्रयोगार्हमिति चेत् । कथं न पुनरस्याः साधनाङ्गत्वम् किं सर्वथैव कथास्वनुपयोगात् । अथोपयुक्तस्याप्यन्यथैव परिग्रहात् । आद्ये विप्रतिपत्तिमपि नोद्भावयेत् । अनुद्भावयन् कथमपि विवदेत्(२) । अविवदतः कथं वचनं कथाङ्गत्वमियात् । तथाच कथं कथको

---

(१) अपदेशविषयापादनार्थ—पा० १ । ६ पु० ।
(२) कथमिव प्रतिवदेत्—पा० २ पु० ।

निगृह्येत(१) निगृह्णीयाद्वा। नापि द्वितीयः। स हि विवादाद्वा अ- वयवान्तराद्वा। विवादादपि व्यवहिताद्वा अवयवान्तरैकवाक्य- तापन्नाद्वा। अवयवान्तरादपि साक्षादाक्षेपाद्वा। न तावदाद्यः। आसत्तेरभावात् एकवाक्यतानुपपत्तेः। आसत्तावान्तरा- लिकसाधनाङ्गवचनेन निगृह्यते। आनिग्रहे वा परः पर्य- नुयोज्योपेक्षणमासादयेत्। द्वितीये त्वविवाद एव। वयमपि च पराभ्युपेतपक्षविपरीतां कोटिमुपनीय तत्सिद्धयेऽवयवान्तरमभि- दध्यादिति ब्रूमः। न ह्येवंभूतविपरीतकोट्युपनीतदर्शकवाक्यव्य- तिरेकेणान्यतरवाक्यप्रतिज्ञास्वरूपमस्ति(२)। नापि तृतीयः। न हि प्रतिज्ञार्थो हेत्वादिभिश्चतुर्भिरभिधीयत इति वक्ष्यामः। नापि चतुर्थः। स हि अपेक्षाकाले वाऽन्यदा वा। न तावदाद्यः। न ह्यनित्यं शब्दं बुभुत्समानानामनित्यः शब्द इत्यनुक्त्वान्यत् किञ्चिदपेक्षितम् कृतकत्वादिति वा यत् कृतकं तदनित्यमिति वा कृतकश्च शब्द इति वा सर्वस्यापाततोऽन्वयेनावगतिहेतुत्वा- भावात्। प्रतिपन्नविवादविषयाः हि तदर्थतन्नियतहेतुं साधनं(३) बुभुत्सामहे। न तु साधनं प्रथमतः प्रतीत्य पश्चाद्विवादविषयम्। तथाच तस्यैव प्रथममभिधाने प्राप्ते अन्याभिधानानुपयोगादाक्षे- पस्यापि कुतोवकाशः। अपेक्षितकरणेपि वचनव्यतिरेकेणापेक्षित- सिद्धेरभावात्। नाप्यन्यदा न हि यत् कृतकं तदनित्यं यथा घटः कृतकश्च शब्द इति वचनमवधानकारकम् परस्पराश्रयप्रसङ्गा- त्। अवधाने सत्यर्थनिश्चयस्तस्माच्चावधानमिति। वाक्यसाम-

(१) ऽनुगृह्येत—पा० ४ पु०।

(२) न ह्येवं भूतकोट्युपदर्शनमन्तरेण प्रतिज्ञायाः शङ्क- मस्ति—पा० ४ पु०।

(३) तदनु तन्निर्णयाय हेतुसाधनं—पा० ५ पु०

अविरोधिग्रहणात् प्रत्यक्षानुमानाभ्युपगतस्वशास्त्रस्व-
वचन(१)विरोधिनो निरस्ता भवन्ति । यथानुष्णोऽग्नि-

र्ग्नीनियमानादरे तु तदुदाहरणक्रमोऽपि नाद्रियेत । प्रतिपाद्यापेक्ष-
नियमानुरोधश्च समान इति । अनित्यः शब्द इत्यपेक्षिताभिधा-
नविषये(२) कृते कुत इत्यपेक्षायां कृतकत्वादिति हेतोः समुचितं
समुत्थानमिति रमणीयम् । प्रतिज्ञोदाहरणमाह द्रव्यं वायुरिति ।
वायुर्द्रव्यमित्यर्थः । यो हि वायुरूपं जानन्नपि तस्य द्रव्यत्वे
सन्दिग्धस्तं प्रति सिषाधयिषितेन द्रव्यत्वेन विशिष्टस्य वा-
योरभिधानं प्रतिज्ञा । कथायां नियमः शास्त्रे तु प्रतिपत्तिमात्रं
समीहितमिति भावः । द्रव्यं वायुरिति व्यत्ययाभिधानम् ।
अविरोधिपदस्य तात्पर्यमाह अविरोधिग्रहणादिति । प्रत्यक्षेणानु-
मानेन वाभ्युपगतं प्रतिपन्नं तद्विरोध्यनुमानाभास इत्यर्थः । एवं-
विधस्य भ्रमादिना कदाचित् अनुमातुमिष्टत्वात् । ननु वैशे-
षिकस्य प्रत्यक्षानुमानरूपप्रमाणद्वयमात्रमभ्युपगच्छतः स्वशास्त्रा-
दिविरोधस्य कुतः प्रसक्तिः न हि शास्त्रं नाम पृथक् प्रमाणम-
स्तीत्यत आह अभ्युपगतेति । न केवलमुभयसिद्धेनानुमानेना-
पि तु लोके शब्दतया प्रसिद्धेन अस्माभिश्चानुमानतयाभ्युप-
गतेनेति नेयम् अभ्युपगमनमात्रस्य स्वशब्देनैव लब्धत्वात् । अथ
वा न केवलं प्रत्यक्षानुमानाभ्याम् । अपि तु परशास्त्रमपि यत्
स्वयमभ्युपगतम् आगमतयाभ्युपगतप्रामाण्यं तेनापि यद्विरुद्धं त-
दपि प्रतिज्ञाभासमित्यर्थः । प्रत्यक्षविरुद्धमुदाहरति यथाऽनु-
ष्णोऽग्निरिति । प्रत्यक्षविरोधी यथाग्निरर्थस्त्विति योजना । प्रस-

(१) शास्त्रवचन—पा० ७ पु ।

(२) भिधायिप्रतिज्ञावचने—पा० ६ पु० ।

रिति(१) प्रत्यक्षविरोधी घनमम्बरमित्यनुमानविरोधी ब्राह्मणेन(२) सुरा पेयेत्यागमविरोधी वैशेषिकस्य

क्तं प्रतिषिध्यते न च तेजोऽव्यतिरिक्तेन्यास्मिन् क्वचित् उष्णत्वमुपलब्धम् । अनुमानादेवावगते त्वन्धपरम्परापातप्रसङ्गात् प्रत्यक्षेण प्रतीतौ तद्विषयमनुमानमनेनैव बाध्यत इति । नन्वयुक्तमेतद्बाध्याविनाभावयोः सहासम्भवात् । बाधे ह्यपक्षधर्मत्वमनैकान्तिकत्वं च स्यात् इति चेत् । अत एवेदं पृथक् दूषणमिति वदामः । न हि सर्वोपसंहारव्याप्त्यादिपरिगृहीतस्य वह्नेर्विपक्षत्वमपक्षत्वं वा असति बाधे वेधसापि सुवचम् । बाधे तु दृष्टे तूत्तरकालीनमनैकान्तिकत्वादि सम्भवत्यपि किन्तेनोपजीवकेनोपजीव्यस्य बाध्यस्य क्रियते अन्यथा विरुद्धस्यापि परिहारप्रसङ्गात् । तत्र हि साध्यस्य निश्चितत्वे हेतुरसिद्धो हेतुनिश्चयेनैव साध्यं बाधितमिति वा कुतो विरुद्धावकाशः । उपजीव्योपजीवकभावेन तद्व्यवस्था प्रकृतेपि समानेति । अनुमानविरुद्धमुदाहरति । घनमम्बरमिति । अनुमानविरोधीति । आकाशं हि स्वकार्यभूतेन शब्देन समवायिकारणतयाऽनुमीयते । शब्दश्च विभुगुणत्वात् सार्वत्रिकोऽप्यसमवायिकारणप्रादेशिकत्वान्नियम्यते । यदि पुनरसमवायिवत् समवायिकारणमप्यस्य निबिडावयवतया नियतदेशं स्यात् न तर्हि गन्धवत् सर्वत्रोपलभ्येत । ततो धर्मिग्राहकप्रमाणादेव घनमम्बरमिति प्रतिज्ञा बाध्येत इति । आगमविरुद्धमुदाहरति । ब्राह्मणेनेति । क्षीरपानोदाहरणबलेन हि द्रवद्रव्यत्वात् सुरापानस्य पवित्रत्वं दर्शयता तत्साधनत्वं तावदवश्याभ्युपगन्तव्यम् । न च तत्रानुमानं प्रभवति श्रुतिस्मृतिभ्यामे-

(१) बहिरिति-पा० ५ पु० । (२) ब्राह्मणैः-पा० ५ पु० ।

कसमाधिगम्यत्वात्(१) । तथा च दृष्टान्तसाधकेनैव स्वयमभ्युपगतेन सुरापानस्य पवित्रत्वं बाधितं भवति । स्वशास्त्रविरुद्धमुदाहरति । वैशेषिकस्येति । ननु किमियं परिभाषा यत् स्वशास्त्रेणोक्तं तत्तथैव श्रद्धेयमत आह वैशेषिकस्येति । विशेषो व्यवच्छेदः तत्त्वनिश्चयः । तेन व्यवहरतीत्यर्थः । न च सत्कार्यवादे प्रमाणं निश्चायकमस्तीत्यर्थः । विवादाध्यासितो भावः कारणव्यापारादपि प्राक्काले सन् कार्यत्वात् यत् पुनः कारणव्यापारात् प्राक् सन्न भवति न तत् कार्यम् । यथा प्रधानमिति चेत् । न व्याघातात् । यद्यपि साध्यक्रियासाधारणक्रियामात्रविषयत्वं रूपकार्यत्वत्वहेतौ नासिद्धिः नाप्यसत इव गगनकुसुमादेः सतोपि प्रधानादेः कार्यत्वस्य व्यावृत्तत्त्वादसाधारणव्यापारात् प्राक् प्रतीतिविशेषणात् । नाप्यसन्दिग्धव्यतिरेकित्वं घटो जायते जनिक्रियाप्रतिकर्ता भवतीत्यादिप्राक्कारणत्वोपदर्शकप्रयोगस्य विपक्षे बाधकस्य सम्भवात् न हि कारकमसद्भवति । न चेदं भ्रान्तं मुख्ये बाधकाभावात् । न च सत्कार्यदूषणमेव बाधकम् अन्योन्याश्रयप्रसङ्गात् । तथापि कारकव्यापारात् प्रागपि सन्निति प्रतिज्ञापदयोरेव व्याघातात् । न हि सति कारकव्यापारसाफल्यमाकलयामः । असत्यपि तुल्यमेतदिति चेन्न न सतोऽसतोजन्यत्वात् । स्वकारणसत्तासमवायरूपाया उत्पत्तेर्नित्यत्वेपि तत्क्रियाविषयत्वेपि भावरूपे वस्तुनि हि कारकसाफल्यात् । सत्कार्यवादपक्षे त्वभिव्यक्तिभूतिव्यंग्यस्यापि सत्त्वात् । अतिप्रसक्तिश्च सत्त्वेपि समानाधिकरणविशेषनियमान्नियमः । सोपि तुल्यः कारणसम्बन्धस्त्वसति सम्भाव्यते न त्वप्रतीति तु विशेषः । न च कर्तव्य-

(१) श्रुतिस्मृत्यागमकसमाधिगम्यत्वात्—पा० २ पु० ।

सत्कार्यमिति ब्रुवतः स्वशास्त्रविरोधी न शब्दोऽर्थ-प्रत्यायक(१) इति स्ववचनविरोधी ॥

इति प्रशस्तपादभाष्ये बुद्धिनिरूपणम् ॥

---

स्वरूपसाधनत्वे क्रियामात्रात्तत्त्वविरहादकारणत्वप्रसक्तिः । कृतिविशेषस्यैव क्रियात्वव्यपदेशात् । धात्वर्थमात्रस्य चातिव्यापकत्वात् अन्यथा सत्कार्यवादेऽप्यप्रतीकारात् । एतेनोपादानग्रहणात् । सर्वसम्भवाभावात् । शक्तस्य शक्यकरणात् । कारणभावात् । सत् कार्यमित्यहेतुचतुष्टयं निरस्तमिति ॥

इति श्रीमहामहोपाध्यायश्रीमदुदयनाचार्यविरचितायां गुणकिरणावल्यां बुद्धिनिरूपणं समाप्तम् ॥



---

(१) प्रतिपादक—पा० ६ पु० ।

(१)लिङ्गवचनमपदेशः । यदनुमेयेन सहचरितं तत्समानजातीये सर्वत्र सामान्येन प्रसिद्धं तद्विपरीते सर्वस्मिन्नसदेव तल्लिङ्गमुक्तं तस्य वचनमपदेशः । यथा क्रियावत्त्वाद्गुणवत्त्वाच्च(२) तथा च तदनुमेयेऽस्ति तत्समानजातीये च सर्वस्मिन् गुणवत्त्वमसर्वस्मिन् क्रियावत्त्वम् । उभयमप्येतदद्रव्ये नास्त्येव तस्मात् तस्य वचनमपदेश इति सिद्धम्(३) ॥

एतेनासिद्धविरुद्धसन्दिग्धानध्यवसितवचनानामनपदेशत्वमुक्तम्भवति । तत्रासिद्धश्चतुर्विधः । उभयासिद्धोऽन्यतरासिद्धः तद्भावासिद्धोऽनुमेयासिद्धश्चेति । तत्रोभयासिद्धः उभयोर्वादिप्रतिवादिनोरसिद्धः यथाऽनित्यः शब्दः सावयवत्वादिति । अन्यतरासिद्धः यथाऽनित्यः शब्दः कार्यत्वादिति । तद्भावासिद्धो यथा धूमभावेनाग्न्यधिगतौ कर्तव्यायामुपन्यस्यमानो वाष्पो धूमभावेनासिद्ध इति । अनुमेयासिद्धो यथा पार्थिवं द्रव्यं तमः कृष्णरूपवत्त्वादिति । यो ह्यनुमेयेऽविद्यमानोऽपि तत्समानजातीये सर्वस्मिन्नास्ति तद्विपरीते चास्ति स विपरीतसाधनाद्विरुद्धः यथा यस्माद्विषाणी तस्मादश्व इति(४) । यस्तु

(१) किरणावलीटीका अतः परं नोपलभ्यत इति ग्रन्थपूर्त्यर्थं प्रशस्तपादभाष्यं मूलमात्रं मुद्रितं भवतीति विज्ञेयम् ।

(२) चेति सिद्धम्–पा० ६ पु० ।

(३) यथा क्रियावत्त्वाद्गुणवत्त्वाच्च तथा च तदुभयमपि द्रव्येऽस्ति अद्रव्ये नास्त्येव तस्य वचनमपदेश इति सिद्धम्–पा १ पु० ।

(४) तस्मादुष्ट्र इति–पा० ५ पु०

सन्ननुमेये तत्समानासमानजातीययोः साधारणः सन्नेवोभयत्र सन्देहजनकत्वात् सन्दिग्धः यथा यस्माद्विषाणी तस्माद्गौरिति । एकस्मिंश्च द्वयोर्हेत्वोर्यथोक्तलक्षणयोर्विरुद्धयोः सन्निपाते सति संशयदर्शनादयमन्यः सन्दिग्ध इति केचित् । यथा मूर्तत्वामूर्तत्वं प्रति मनसः क्रियावत्त्वास्पर्शवत्त्वयोरिति । नन्वयमसाधारण एवाचाक्षुषत्वप्रत्यक्षत्ववत् संहतयोरन्यतरपक्षासम्भवात्(१) ततश्चानध्यवसित इति वक्ष्यामः। ननु शास्त्रे तत्रतत्रोभयथा दर्शनं संशयकारणमपदिश्यत इति न संशयो विषयद्वैतदर्शनात् । संशयोत्पत्तौ विषयद्वैतदर्शनं कारणम् तुल्यबलत्वे च तयोः परस्परविरोधान्निर्णयानुत्पादकत्वं स्यान्न तु संशयहेतुत्वम् न च तयोस्तुल्यबलवत्त्वमस्ति अन्यतरस्यानुमेयोद्देशस्यागमबाधितत्वादयं(२) तु विरुद्धभेद एव। यश्चानुमेये विद्यमानस्तत्समानासमानजातीययोरसन्नेव सोऽन्यतरासिद्धोऽनध्यवसायहेतुत्वादनध्यवसितः यथा सत्कार्यमुत्पत्तेरिति । अयमप्रसिद्धोऽनपदेश इति वचनादवरुद्धः(३)। ननु चायं विशेषः संशयहेतुरभिहितः(४) शास्त्रे तुल्यजातीयेष्वर्थान्तरभूतेषु(५) विशेषस्योभयथा दृष्टत्वादिति(६) नान्यार्थत्वाच्छन्दे

(१) पक्षः सम्भवति–पा० ६ पु० ।
(२) आगमविरोधित्वात्–पा० ६ पु० ।
(३) दविरुद्धः–पा० १ । ६ । ७ पु० ।
(४) उक्तः–पा० ६ पु० । (५) अर्थान्तरेषु च–पा० ५ पु० ।
(६) दर्शनात्–पा० ६ पु० ।

विशेषदर्शनात् । संशयानुत्पत्तिरित्युक्ते(१) नायं द्रव्यादीनामन्यतमस्य विशेषः स्याच्छ्रावणत्वं किन्तु सामान्यमेव सम्पद्यते कस्मात्(२) तुल्यजातीयेष्वर्थान्तरभूतेषु(३) द्रव्यादिभेदानामेकैकशो विशेषस्योभयथा दृष्टत्वादित्युक्तं न संशयकारणम् अन्यथा षट्स्वपि पदार्थेषु संशयप्रसङ्गात् तस्मात् सामान्यप्रत्ययादेव संशय इति ॥

द्विविधं निदर्शनं साधर्म्येण वैधर्म्येण च । तत्रानुमेयसामान्येन लिङ्गसामान्यस्यानुविधानदर्शनं (४) साधर्म्यनिदर्शनम् । तद्यथा यत् क्रियावत् तद्द्रव्यं दृष्टं यथा शर इति(५) । अनुमेयविपर्यये(६) च लिङ्गस्याभावदर्शनं(७) वैधर्म्यनिदर्शनम् । तद्यथा यदद्रव्यं तत् क्रियावन्न भवति यथा सत्तेति ॥

अनेन(८) निदर्शनाभासा निरस्ता भवन्ति । तद्यथा नित्यः शब्दोऽमूर्तत्वात् यदमूर्तं दृष्टं तन्नित्यम् यथा परमाणु(९)र्यथा कर्म यथा स्थाली यथा त-

---

(१) नुत्पत्तिरित्युक्तम्–पा० ६ पु० ।

(२) कस्मात्–इति नास्ति १ पु० । (३) अर्थान्तरेषु–पा० १ पु० ।

(४) दर्शनात्–पा० ५ पु० । (५) अन्वयव्याप्तिदर्शनमिति यावत् ।

(६) यथा वाण इति एवं विपर्यये–पा० ५ पु० ।

(७) व्यतिरेकव्याप्तिदर्शनमिति यावत् ।

(८) एतेन–पा० ६ । ७ पु० ।

(९) यथा परमाणुरिति लिङ्गासिद्धो निदर्शनाभासः परमाणोरमूर्तत्वात् । यथा कर्मेति अनुमेयासिद्धः कर्मणोऽनित्यत्वात् । यथा स्थालीत्युभयासिद्धः स्थाल्यां नित्यत्वामूर्तत्वयोस्साध्यहेत्वोरभावात् । तम इत्याश्रयेणासिद्धः तस्य वस्तुत्वाभावात् । अम्बरवदिति

मः(१) अम्बरवदिति यद् द्रव्यं तत् क्रियावद्दृष्ट-मिति च लिङ्गानुमेयोभयाश्रयासिद्धाननुगतविपरी-तानुगताः साधर्म्यनिदर्शनाभासाः। यदनित्यं तन्मूर्तं दृष्टम्। (२)यथा कर्म यथा परमाणुर्यथाकाशं यथा तमः घटवत् यन्निष्क्रियं तदद्रव्यञ्चेति लिङ्गानुमेयो-भयाव्यावृत्ताश्रयासिद्धाव्यावृत्तविपरीतव्यावृत्ता वै-धर्म्यनिदर्शनाभासा इति॥

निदर्शने(३)ऽनुमेयसामान्येन सह दृष्टस्य लि-ङ्गसामान्यस्यानुमेयेऽन्वानयनमनुसन्धानम्। अनुमे-यधर्ममात्रत्वेनाभिहितं लिङ्गसामान्यमनुपलब्धशक्ति-कं निदर्शने साध्यधर्मसामान्येन सह दृष्टमनुमेये येन वचनेनानुसन्धीयते तदनुसन्धानम्। तथा च वायुः क्रियावानिति। अनुमेयाभावे च तस्यासत्त्व-मुपलभ्य न च तथा वायु(४)र्निष्क्रिय इति॥

---

अननुगतो निदर्शनाभासः। तत्रोभयसत्त्वेपि यदमूर्तं तन्नित्यमिति प्रतीत्यभावात् अम्बरवदिति साधारणनिदर्शनेऽप्रतिपन्नसाध्यसा-धनयोरम्बरे न सद्भावप्रतीतिरित्यननुगतोयं निदर्शनाभासः।

(१) तमोऽवयवः-पा० ६। ७ पु०।

(२) यथा कर्मेति लिङ्गाव्यावृत्तो वैधर्म्यनिदर्शनाभासः कर्मणो-ऽमूर्तत्वात्। यथा परमाणुरिति अनुमेयाव्यावृत्तोऽनुमेयस्य नित्यत्व-स्य तत्र भावात्। आकाशमित्युभयाव्यावृत्तो ततोऽमूर्तत्वनित्य-त्वयोरव्यावृत्तत्वात्। यथा तम इति आश्रयासिद्धः पूर्ववत् ततश्च कथमुभयव्यावृत्तिः? घटवदित्यव्यावृत्तः तत्रोभयव्यावृत्तिसत्त्वे-पि यदनित्यं तन्मूर्तमिति अनुक्ते न उभयव्यावृत्तिप्रतिपत्तिः। य-न्निष्क्रियं तदद्रव्यमिति विपरीतव्यावृत्तः साध्यसाधनयोरिव तद-भावयोर्व्याप्यव्यापकभावात्।

(३) निदर्शनेन-पा० ६। ७ पु०। (४) वायुः-पा० १ पु०।

अनुमेयत्वेनोद्दिष्टे(१) चानिश्चिते च परेषां निश्चया(२)पादनार्थं प्रतिज्ञायाः पुनर्वचनं(३) प्रत्याम्नायः। प्रतिपाद्यत्वेनोद्दिष्टे चानिश्चिते च परेषां हेत्वादिभिरवयवैराहितशक्तीनां परिसमाप्तेन वाक्येन निश्चयापादनार्थं प्रतिज्ञायाः पुनर्वचनं प्रत्याम्नायः(४)। तस्माद्द्रव्यमेवेति। न ह्येतस्मिन्नसति परेषा(५)मवयवानां समस्तानां व्यस्तानां वा तदर्थवाचकत्वमस्ति(६)। गम्यमानार्थत्वादिति चेन्न अतिप्रसङ्गात्। तथाहि प्रतिज्ञानन्तरं हेतुमात्राभिधानं कर्तव्यम् विदुषामन्वयव्यतिरेकस्मरणात्(७) तदर्थावगतिर्भविष्यतीति तस्मादत्रैवार्थपरिसमाप्तिः(८)। (९)कथम् अनित्यः शब्द इत्यनेनानिश्चिता(१०)नित्यत्वमात्राविशिष्टः शब्दः कथ्यते प्रयत्नानन्तरीयकत्वादित्यनेनानित्यत्वसाधनधर्ममात्रमभिधीयते। इह यत्

---

(१) निर्दिष्टे—पा० ५ पु०।

(२) अनुमेयत्वेनोद्दिष्टेषु च परेषां पूर्वनिश्चया—पा० ७ पु०।

(३) प्रतिज्ञावचनं—पा० ५ पु०।

(४) प्रतिपाद्यत्वेन—इत्यादिः प्रत्याम्नायः—इत्यन्तः पाठो नास्ति ६। ७ पु०।

(५) पूर्वेषां—पा० ६। ७ पु०। (६) वाचकत्वमेवेति—पा० ५ पु०।

(७) व्यतिरेकाभ्यां—पा० ५ पु०। अनुस्मरणात्—पा० ६ पु०।

(८) निगमनवाक्यादेव सकलसामर्थ्येऽधिगते तत्रैवार्थस्य साध्यस्य प्रतीतिपर्यवसानसम्भवे कृतम् हेत्वादिनेति तात्पर्यम्।

(९) एकत्रैवाखिलावयवानां रूपं संहृत्य प्रश्नपूर्वकं पञ्चावयववाक्यप्रयोगापेक्षां दर्शयति कथमिति।

(१०) इत्यनेन साध्ये सामान्येनानिश्चिता—पा० ५ पु०।

प्रयत्नानन्तरीयकं तदनित्यं दृष्टम् यथा घट इत्यनेन साध्यसामान्येन साधनसामान्यस्यानुगममात्रमुच्यते। नित्यमप्रयत्नानन्तरीयकं दृष्टम् यथाकाशमित्यनेन साध्याभावेन साधनस्यासत्त्वं प्रदर्श्यते । तथा च प्रयत्नानन्तरीयकः शब्दो दृष्टो न च तथाकाशवदप्रयत्नानन्तरीयकः शब्द इत्यन्वयव्यतिरेकाभ्यां दृष्टसामर्थ्यस्य साधनसामान्यस्य(१) शब्देऽनुसन्धानं गम्यते तस्मादनित्यः शब्द इत्यनेनानित्य एव शब्द इति प्रतिपिपादयिषितार्थपरिसमाप्तिर्गम्यते तस्मात् पञ्चावयवेनैव वाक्येन परेषां स्वनिश्चितार्थप्रतिपादनं क्रियते इत्येतत्परार्थानुमानं सिद्धमिति ॥

विशेषदर्शनजमवधारणज्ञानं संशयविरोधी निर्णयः। एतदेव प्रत्यक्षमनुमानं वा(२) । यद् विशेषदर्शनात् संशयविरोध्युत्पद्यते(३) स प्रत्यक्षनिर्णयः । यथा(४) स्थाणुपुरुषयोरूर्ध्वतामात्रसादृश्यालोचनाविशेषेष्वप्रत्यक्षेषूभयविशेषानुस्मरणात् किमयं स्थाणुः पुरुषो वेति संशयोत्पत्तौ शिरःपाण्यादिदर्शनात् पुरुष एवायमित्यवधारणज्ञानं प्रत्यक्षनिर्णयः। विषाणमात्रदर्शनाद् गौर्गवयो वेति संशयोत्पत्तौ सास्नामात्रदर्शनाद्गौरेवायमित्यवधारणज्ञानमनुमाननिर्णय इति।

---

(१) साधनसामान्यस्य—इति नास्ति १पु०।

(२) प्रत्यक्षानुमानाभ्यां—पा० ६ पु०। अनुमानं च—पा० ५ पु०।
एतेन निर्णयस्य प्रत्यक्षानुमानयोरन्तर्भावं प्रदर्शयता तस्य प्रमाणान्तरत्ववादः खण्डितः।

(३) विरोध्युत्पत्त्यपेक्षते—पा० ६। ७ पु०। (४) तत्र—पा० ६ पु०।

लिङ्गदर्शनेच्छानुस्मरणाद्य(१)पेक्षादात्ममनसोः संयोगविशेषात् पट्वभ्यासादरप्रत्ययजनिताच्च संस्काराद् दृष्टश्रुतानुभूतेष्वर्थेषु शेषानुव्यवसाये(२)च्छानुस्मरणद्वेषहेतुरतीतविषया स्मृतिरिति ॥

(३)आम्नायविधातॄणामृषीणामतीतानागतवर्तमानेष्वतीन्द्रियेष्वर्थेषु धर्मादिषु ग्रन्थोपनिबद्धेष्वनुपनिबद्धेषु चात्ममनसोः संयोगाद् धर्मविशेषाच्च यत् प्रातिभं यथार्थनिवेदनं ज्ञानमुत्पद्यते तदार्षमित्याचक्षते । तत् तु प्रस्तारेण देवर्षीणाम् कदाचिदेव लौकिकानां यथा कन्यका ब्रवीति श्वो मे भ्राताऽऽगन्तेति हृदयं मे कथयतीति ॥

सिद्धदर्शनं न ज्ञानान्तरं(४) कस्मात(५) प्रयत्नपूर्वकमञ्जनपादलेपखड्गगुलिकादिसिद्धानां दृश्यद्रष्टॄणां सूक्ष्मव्यवहितविप्रकृष्टेष्वर्थेषु(६) यद्दर्शनं तत्प्रत्यक्षमेव । अथ दिव्यान्तरिक्षभौमानां प्राणिनां ग्रहनक्षत्रसञ्चारादिनिमित्तं(७) धर्माधर्मविपाकदर्शनमि-

---

(१) अ० ३ आ० २, ४४ सूत्रोक्तानि प्रणिधानादीनि आदिपदग्राह्याणि ।

(२) विशेषार्थव्यवसाये–पा० ५ पु० ।

(३) आर्षमाह आम्नायेति । धर्मविशेषः विद्यातपःसमाधिजः प्रकृष्टो धर्मः इति कारणत्वनिर्देशः । प्रस्तारेण बहुशः । उभयकोटिकत्वाभावात् नायं संशय इति ।

(४) प्रत्यक्षानुमानाभ्यां–इत्यधिकम् ६ । ७ पु० ।

(५) कथं यत्–पा० ५ । ६ । ७ पु० ।

(६) कृष्टार्थेषु–पा० ५ पु० ।

(७) प्राणिनां–इति अधिकम् ५ पु० ।

ष्टम् तदप्यनुमानमेव । अथ लिङ्गानपेक्षं धर्मादिषु दर्शनमिष्टं तदपि प्रत्यक्षार्षयोरन्यतरस्मिन्नन्तर्भूतमित्येवं बुद्धिरिति(१) ॥

(२)अनुग्रहलक्षणं सुखम् । स्रगाद्यभिप्रेतविषयसान्निध्ये सतीष्टोपलब्धीन्द्रियार्थसन्निकर्षाद् धर्माद्यपेक्षादात्ममनसोः संयोगाद(३)नुग्रहाभिष्वङ्गनयनादिप्रसादजनकमुत्पद्यते तत् सुखम् । अतीतेषु विषयेषु(४) स्मृतिजम् । अनागतेषु सङ्कल्पजम् । यत्तु विदुषामसत्सु विषयानुस्मरणेच्छासङ्कल्पेष्वाविर्भवति तद्विद्याशमसन्तोषधर्मविशेषनिमित्तमिति ॥

उपघातलक्षणं दुःखम् । विषाद्यनभिप्रेतविषयसान्निध्ये सत्यनिष्टोपलब्धीन्द्रियार्थसन्निकर्षादधर्माद्यपेक्षादात्ममनसोः संयोगा(५)द्यदमर्षोपघातदैन्यनिमित्तमुत्पद्यते तद्दुःखम् । अतीतेषु(६) सर्पव्याघ्रचौरादिषु स्मृतिजम् । अनागतेषु सङ्कल्पजमिति ॥

स्वार्थं परार्थं वाऽप्राप्तप्रार्थनेच्छा । सा चात्ममनसोः संयोगात् सुखाद्यपेक्षात् स्मृत्यपेक्षाद्वोत्पद्यते । प्रयत्नस्मृतिधर्माधर्महेतुः । कामोऽभिलाषः रागः

---

(१) इत्यदोषा बुद्धिरिति–पा० ६ । ७ पु० ।

(२) विद्याऽविद्यादिभेदविस्तृतां बुद्धिं व्याख्याय तत्कार्यत्वादनन्तरं सुखं व्याचष्टे ।

(३) आत्ममनःसंयोगविशेषाद्–पा० ६ पु० ।

(४) अतीतविषयेषु–पा० ६ पु० ।

(५) आत्ममनःसंयोगा–पा० ५ पु० ।

आत्ममनसोः संयोगविशेषात्–पा० ६ पु० ।

(६) विषयेषु–इत्याधिकम् ६ पु० ।

सङ्कल्पः कारुण्यं वैराग्यम् उपधा भाव इत्येवमादय इच्छाभेदाः । मैथुनेच्छा कामः । अभ्यवहारेच्छा(१)-ऽभिलाषः । पुनः पुनर्विषयानुरञ्जनेच्छा रागः । अनासन्नक्रियेच्छा सङ्कल्पः(२) । स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छा कारुण्यम् । दोषदर्शनाद्विषयत्यागेच्छा वैराग्यम् । परवञ्चनेच्छा उपधा । अन्तर्निगूढेच्छा भावः(३) । चिकीर्षाजिहीर्षेत्यादिक्रियाभेदादिच्छाभेदा भवन्ति ॥

प्रज्वलनात्मको(४) द्वेषः । यस्मिन् सति प्रज्वलितमिवात्मानं मन्यते स द्वेषः । स चात्ममनसोः संयोगाद् दुःखापेक्षात् स्मृत्यपेक्षाद्वोत्पद्यते । प्रयत्नस्मृतिधर्माधर्महेतुः । (५)क्रोधो द्रोहः मन्युरक्षमाऽमर्ष इति द्वेषभेदाः ॥

प्रयत्नः संरम्भ उत्साह इति पर्यायाः । स द्विविधो जीवनपूर्वकः इच्छाद्वेषपूर्वकश्च । तत्र जीवनपूर्वकः सुप्तस्य प्राणापान(६)सन्तानप्रेरकः प्रबोधकाले चान्तःकरणस्येन्द्रियान्तरप्राप्तिहेतुः । अस्य

(१) अभ्यवहरणेच्छा–पा० ५ पु० ।

(२) अनापन्नक्रियावश्यकर्तव्यता सङ्कल्प इति मिश्राः ।

(३) अन्तर्निगूढतो भावः–पा० ६ पु० ।

(४) ज्वलनात्मको–पा० ६ पु० ।

(५) अलक्षितविकारश्चिरानुबद्धापकारावसानो द्रोहः । शरीरादिविकारहेतुः क्षणविनाशी द्वेषः क्रोधः । अपकारासमर्थस्यान्तर्निगूढो द्वेषो मन्युः । परगुणद्वेषोऽक्षमा । स्वगुणपरिभवाक्षमो द्वेषोऽमर्षः ।

(६) प्राणापानादि–पा० ६ पु० ।

जीवनपूर्वकस्यात्ममनसोः संयोगाद्धर्मापेक्षादुत्पत्तिः। इतरस्तु हिताहितप्राप्तिपरिहारसमर्थस्य व्यापारस्य हेतुः शरीरविधारकश्च। स चात्ममनसोः संयोगादिच्छापेक्षाद् द्वेषापेक्षाद्वोत्पद्यते ॥

गुरुत्वं जलभूम्योः पतनकर्मकारणम्। अप्रत्यक्षं पतनकर्मानुमेयं संयोगप्रयत्नसंस्कारविरोधि। अस्य चाबादिपरमाणुरूपादिवन्नित्यानित्यत्वनिष्पत्तयः(१)॥

द्रवत्वं स्यन्दनकर्मकारणम् त्रिद्रव्यवृत्ति। तत्तु द्विविधम् सांसिद्धिकं नैमित्तिकं च। सांसिद्धिकमपां विशेषगुणः। नैमित्तिकं पृथिवीतेजसोः सामान्यगुणः। सांसिद्धिकस्य गुरुत्ववन्नित्यानित्यत्वनिष्पत्तयः। सङ्घातदर्शनात्(२) सांसिद्धिकमयुक्तमिति चेन्न। दिव्येन तेजसा संयुक्तानामाप्यानां परमाणूनां परस्परं संयोगो द्रव्यारम्भकः सङ्घाताख्यः तेन परमाणुद्रवत्वप्रतिबन्धात्(३) कार्ये हिमकरकादौ द्रवत्वानुत्पत्तिः। नैमित्तिकं च पृथिवीतेजसोरग्निसंयोगजम्। कथम्। सर्पिर्जतुमधूच्छिष्टादीनां कारणेषु परमाणुष्वग्निसंयोगाद्वेगापेक्षात्(४) कर्मोत्पत्तौ तज्जेभ्यो विभागेभ्यो द्रव्यारम्भकसंयोगविनाशात् कार्यद्रव्यनिवृत्तावग्निसंयोगादौष्ण्यापेक्षात् स्वतन्त्रेषु परमाणुषु द्रवत्वमुत्पद्यते ततस्तेषु भोगिनामदृष्टापेक्षादात्माणुसंयो-

(१) इति-अधिकम् ५ पु०।
(२) सङ्घातत्वान्नैमित्तिकत्वमनुमेयमित्यर्थः।
(३) द्रवत्वस्य प्रतिबन्धत्वात्-पा० ६। ७ पु०।
(४) संयोगापेक्षात्-पा० ६। ७ पु०।

गात् कर्मोत्पत्तौ तज्जेभ्यः संयोगेभ्यो द्व्यणुकादिप्रक्रमेण कार्यद्रव्यमुत्पद्यते तस्मिंश्च रूपाद्युत्पत्तिसमकालं कारणगुणप्रक्रमेण द्रवत्वमुत्पद्यत इति ॥

स्नेहोऽपां विशेषगुणः । सङ्ग्रहमृजादिहेतुः(१)। अस्यापि गुरुत्ववन्नित्यानित्यत्वनिष्पत्तयः ॥

संस्कारस्त्रिविधो वेगो भावना स्थितिस्थापक(२)श्च । तत्र वेगो मूर्तिमत्सु पञ्चसु द्रव्येषु निमित्तविशेषापेक्षात् कर्मणो जायते(३) नियतदिक्क्रियाप्रबन्धहेतुः स्पर्शवद्द्रव्यसंयोगविशेषविरोधी क्वचित्कारणगुणपूर्वक्रमेणोत्पद्यते । भावनासञ्ज्ञकस्त्वात्मगुणो दृष्टश्रुतानुभूतेष्वर्थेषु स्मृतिप्रत्यभिज्ञानहेतुर्भवति ज्ञानमददुःखादिविरोधी । पट्वभ्यासादरप्रत्ययजः(४) । पटुप्रत्ययापेक्षा(५)दात्ममनसोः संयोगा(६)दाश्चर्येऽर्थे पटुः संस्कारातिशयो(७) जायते । यथा दाक्षिणात्यस्योष्ट्रदर्शनादिति । (८)विद्याशिल्पव्यायामादिष्वभ्यस्यमानेषु तस्मिन्नेवार्थे पूर्वपूर्वसंस्कारमपेक्षमाणादुत्तरो-

---

(१) सङ्ग्रहः पिण्डीभावहेतुः संयोगविशेषः । मृजा शरीरशुद्धिः । आदिशब्दात् मृदुत्वं ग्राह्यम् ।

(२) स्थितस्थापकः–पा० १ पु० ।

(३) विशेषात् कर्मण उपजायते–पा० ७ पु० ।

(४) पटुप्रत्ययादभ्यासप्रत्ययादादरप्रत्ययाच्च संस्कारो भवतीति भावः ।

(५) पट्वभ्यासापेक्षा–पा० ६ । ७ पु० ।

(६) संयोगविशेषा–पा० ५ पु० ।

(७) संस्कारो जायते–पा० ५ पु० ।

(८) अभ्यासप्रत्ययजमाह विद्येति ।

न्तरस्मात् प्रत्ययादात्ममनसोः संयोगात् संस्कारातिशयो जायते । (१)प्रयत्नेन मनश्चक्षुषि स्थापयित्वाऽपूर्वमर्थं दिदृक्षमाणस्य विद्युत्सम्पातदर्शनवदादरप्रत्ययः तमपेक्षमाणादात्ममनसोः संयोगात् संस्कारातिशयो जायते । यथा देवह्रदे राजतसौवर्णपद्मदर्शनादिति । स्थितिस्थापकस्तु(२) स्पर्शवद्द्रव्येषु वर्तमानो घनावयवसन्निवेशविशिष्टेषु कालान्तरावस्थायिषु स्वाश्रयमन्यथाकृतं(३) यथावस्थितं स्थापयति । स्थावरजङ्गमविकारेषु धनुःशाखाशृङ्गदन्तास्थिसूत्रवस्त्रादिषु भुग्नसंवर्तितेषु स्थितिस्थापकस्य कार्यं संलक्ष्यते । नित्यानित्यत्वनिष्पत्तयोऽस्यापि गुरुत्ववत्(४) ॥

धर्मः पुरुषगुणः कर्तुः प्रियहितमोक्षहेतुः अतीन्द्रियोऽन्त्यसुखसंविज्ञानविरोधी पुरुषान्तःकरणसंयोगविशुद्धाभिसन्धिजः(५) वर्णाश्रमिणां प्रतिनियतसाधननिमित्तः। तस्य तु साधनानि श्रुतिस्मृतिविहितानि वर्णाश्रमिणां सामान्यविशेषभावेनावस्थितानि द्रव्यगुणकर्माणि।(६)तत्र सामान्यानि धर्मे श्रद्धा अहिंसा भूतहितत्वं सत्यवचनमस्तेयं ब्रह्मचर्यमनुपधा

---

(१) आदरप्रत्ययजन्यं संस्कारमाह प्रयत्नेनेति ।

(२) स्थितस्थापकस्तु-इति क्वचित् ।

(३) अन्यथाभूतं-पा० १ पु० ।

(४) द्रष्टव्या-इत्यधिकम् ५ पु० ।

(५) पुरुषान्तःकरणेति ।आत्ममनःसंयोगज इत्यर्थः आत्मविशेषगुणत्वात् सुखवत् । विशुद्धोऽभिसन्धिः दम्भादिरहितः संकल्पः ।

(६) सर्वेषां वर्णाश्रमिणां सामान्यतया धर्मसाधनान्याह तत्रेति ।

क्रोधवर्जनमभिषेचनं शुचिद्रव्यसेवनं विशिष्टदेवताभक्तिरुपवासोऽप्रमादश्च । ब्राह्मणक्षत्रियवैश्यानामिज्या(१)ध्ययनदानानि(२) । ब्राह्मणस्य विशिष्टानि प्रतिग्रहाध्यापनयाजनानि स्ववर्णविहिताश्च(३) संस्काराः । क्षत्रियस्य सम्यक्प्रजापालनमसाधुनिग्रहो युद्धेष्वनिवर्तनं स्वकीयाश्च संस्काराः । वैश्यस्य क्रयविक्रयकृषिपशुपालनानि स्वकीयाश्च संस्काराः । शूद्रस्य पूर्ववर्णपारतन्त्र्यममन्त्रिकाश्च क्रियाः । आश्रमिणां तु ब्रह्मचारिणो गुरुकुलनिवासिनः स्वशास्त्रविहितानि गुरुशुश्रूषाग्नीन्धनभैक्ष्याचरणानि मधुमांसदिवास्वप्नाञ्जनाभ्यञ्जनादिवर्जनं च । विद्याव्रतस्नातकस्य कृतदारस्य गृहस्थस्य शालीनयायावर(४)वृत्त्युपार्जितैरर्थैर्भूतमनुष्यदेवपितृब्रह्माख्यानां पञ्चानां महायज्ञानां सायम्प्रातरनुष्ठानम् एकाग्निविधानेन पाकयज्ञसंस्थानां(५) च नित्यानां शक्तौ विद्यमानायामग्न्याधेयादीनां च(६) हविर्यज्ञसंस्थानामग्निष्टोमादीनां सोमयज्ञसंस्थानां च । ऋत्वन्तरेषु ब्रह्मचर्यम-

---

(१) विशामिज्या—पा० ५ पु० ।

(२) अत्र यज्ञादिविषयं दानं ग्राह्यं तेन शूद्रदाननिरासः ।

(३) नियताश्च—पा० ५ पु० ।

(४) यावता धान्येन कुंभीपात्रं पूर्यते त्र्यहमेकाहं वा वर्तनं भवति तावन्मात्रस्य परेण स्वयमानीयमानस्य श्रद्धया दीयमानस्य परिग्रहः शालीना वृत्तिः । परप्रतिग्रहं विना प्रत्यहं भिक्षाटनं यायावरवृत्तिः ।

(५) पाकयज्ञविशेषाणामष्टकादीनां नित्यानां कर्मणाम् ।

(६) हविर्यज्ञविशेषाणां दर्शपौर्णमास्यादीष्टीनाम् ।

पत्योत्पादनं च। ब्रह्मचारिणो गृहस्थस्य वा ग्रामान्निर्गतस्य वनवासो(१) वल्कलाजिनकेशश्मश्रुनखरोम(२)धारणं च। वन्यहुतातिथिशेषभोजनानि वानप्रस्थस्य(३)। त्रयाणामन्यतमस्य श्रद्धावतः सर्वभूतेभ्यो नित्यमभयं दत्वा संन्यस्य स्वानि कर्माणि यमनियमेष्वप्रमत्तस्य षट्पदार्थप्रसंख्यानाद्योगप्रसाधनं प्रव्रजितस्येति। दृष्टं प्रयोजनमनुद्दिश्यैतानि साधनानि भावप्रसादं चापेक्ष्यात्ममनसोः संयोगाद्धर्मोत्पत्तिरिति॥

अधर्मोऽप्यात्मगुणः। कर्तुरहितप्रत्यवायहेतुरतीन्द्रियोऽन्त्यदुःखसंविज्ञानविरोधी। तस्य तु साधनानि शास्त्रे प्रतिषिद्धानि(४) धर्मसाधनविपरीतानि हिंसानृतस्तेयादीनि विहिताकरणम्(५) प्रमादश्चैतानि दुष्टाभिसन्धिं चापेक्ष्यात्ममनसोः संयोगा(६)दधर्मस्योत्पत्तिः॥

(७)अविदुषो रागद्वेषवतः प्रवर्तकाद्धर्मात् प्रकृष्टात् स्वल्पाधर्मसहितात् ब्रह्मेन्द्रप्रजापतिपितृमनुष्यलोकेष्वाशयानुरूपैरिष्टशरीरेन्द्रियविषयसुखादिभिर्योगो

---

(१) ग्रामाद्बहिर्निःसृत्य वनेषु वासो–पा० ५। ६ पु०।
(२) नखलोम–पा० ६ पु०।
(३) भोजनानि वनस्थस्य–पा० ५। ६ पु०।
(४) शास्त्रप्रतिषिद्धानि–पा० ७ पु०।
(५) अवश्यकर्तव्याकरणं–पा० ५ पु०।
(६) आत्ममनःसंयोगा–पा० ६। ७ पु०।
(७) अधर्मसाधनमुक्त्वा तत्साध्यमाह अविदुष इति।

भवति । तथा प्रकृष्टादधर्मात् स्वल्पधर्मसहितात् प्रेततिर्यग्योनिस्थानेष्वनिष्टशरीरेन्द्रियविषयदुःखाभियोगो भवति । एवं प्रवृत्तिलक्षणाद्धर्मादधर्मसहिताद्देवमनुष्यतिर्यङ्नारकेषु पुनः पुन संसारबन्धो भवति ॥

ज्ञानपूर्वकात्तु कृतादसङ्कल्पितफला(१)द्विशुद्धे कुले जातस्य दुःखविगमोपाय(२)जिज्ञासोराचार्यमुपसङ्गम्योत्पन्नषट्पदार्थतत्त्वज्ञानस्याज्ञाननिवृत्तौ विरक्तस्य रागद्वेषाद्यभावात् तज्जयो धर्माधर्मयोरनुत्पत्तौ पूर्वसञ्चितयोश्चोपभोगान्निरोधे सन्तोषसुखं शरीरपरिच्छेदं(३) चोत्पाद्य रागादिनिवृत्तिलक्षणः केवलो धर्मः परमार्थदर्शनज(४)सुखं कृत्वा निवर्तते । तदा निरोधात् निर्बीजस्यात्मनः(५) शरीरादिनिवृत्तिः पुनः शरीराद्यनुत्पत्तौ(६) दग्धेन्धनानलवदुपशमो मोक्ष इति ॥

शब्दोऽम्बरगुणः श्रोत्रग्राह्यः क्षणिकः कार्यकारणोभयविरोधी(७) संयोगविभागशब्दजः प्रदेशवृत्तिः

(१) ज्ञानपूर्वकात् तु कर्मणः तत्कृतादसङ्कल्पितफलात्–पा० ५ पु०
(२) विनियोगापाय–पा० ७ पु० ।
(३) शरीरपरिखेदं–पा० १ पु० ।
(४) परमात्मदर्शनज–पा० ५ पु० ।
(५) तदा तस्यात्मनः–पा० १ ।
(६) शरीरादिनिवृत्तौ–पा० ५ पु० ।
(७) आद्यशब्दः स्वकार्येण विरुध्यते अन्त्यः स्वकारणेनान्त्यशब्देन अन्त्यस्य विनाशकारणस्याभावात् मध्यस्तूभयत इति उभयविरोधी ।

समानासमानजातीयकारणः । स द्विविधो वर्णलक्षणो ध्वनिलक्षणश्च(१) । तत्र अकारादिर्वर्णलक्षणः । शङ्खादिनिमित्तो ध्वनिलक्षणश्च(२) । तत्र वर्णलक्षणस्योत्पत्तिरात्ममनसोः संयोगात् स्मृत्यपेक्षाद्वर्णोच्चारणेच्छा तदनन्तरं प्रयत्नस्तमपेक्षमाणादात्मवायुसंयोगाद्वायौ कर्म जायते(३) स चोर्ध्वं गच्छन्(४) कण्ठादीनभिहन्ति ततः स्थानवायुसंयोगापेक्षाद्वर्णाकाशसंयोगाद्वुत्पद्यते । वेणुपर्वविभागाद्(५) वेण्वाकाशविभागाच्च(६) शब्दाच्च संयोगविभागनिष्पन्नाद्वीचीसन्तानवच्छब्दसन्तान इत्येवं सन्तानेन(७) श्रोत्रप्रदेशमागतस्य ग्रहणम्(८)श्रोत्रशब्दयोर्गमनागमनाभावादप्राप्तस्य ग्रहणं नास्ति(९) परिशेषात् सन्तानसिद्धिरिति ॥

इति प्रशस्तपादभाष्ये गुणपदार्थः समाप्तः(१०) ॥

---

(१) अवर्णलक्षणश्च–पा० ५ । पु० ।

(२) अवर्णलक्षणः–पा० ६ पु० ।

(३) जायते–इति नास्ति १ पु० ।

(४) वायुरूर्ध्वं गच्छन् पुनः–पा० ५ पु० ।

(५) विभागापेक्षात्–पा० ५ पु० ।

(६) वेणुपर्वाकाशविभागाच्च–पा० ६ । ७ पु० ।

(७) सन्तानन्यायेन–पा० ६ । ७ पु० ।

(८) नन्वियं कुकल्पना, इत्यत्राह । श्रोत्रेति ।

(९) चानुपलब्धेः–पा० १ पु० ।

(१०) इति प्रशस्तपादाचार्यविरचिते वैशेषिकभाष्ये गुणपदार्थः समाप्तः–पा० ७ पु० ।

## अथ कर्मपदार्थनिरूपणम् ।

(१)उत्क्षेपणादीनां पञ्चानामपि कर्मत्वसम्बन्धः(२)। एकद्रव्यवत्त्वं(३)क्षणिकत्वं(४) मूर्तद्रव्यवृत्तित्वम् अगुणवत्त्वं गुरुत्वद्रवत्वप्रयत्नसंयोगजत्वं स्वकार्यसंयोगविरोधित्वं(५) संयोगविभागनिरपेक्षकारणत्वम् असमवायिकारणत्वं स्वपराश्रयसमवेतकार्यारम्भकत्वं समानजातीयानारम्भकत्वं द्रव्यानारम्भकत्वं च प्रतिनियतजातियोगित्वम् । दिग्विशिष्टकार्यारम्भकत्वं च विशेषः ॥

(६)तत्रोत्क्षेपणं शरीरावयवेषु तत्सम्बद्धेषु च यदूर्ध्वभाग्भिः प्रदेशैः(७) संयोगकारणमधोभाग्भिश्च प्रदेशैः(८) विभागकारणं कर्मोत्पद्यते गुरुत्वप्रयत्नसंयोगेभ्यस्तदुत्क्षेपणम् ॥

---

(१) उत्क्षेपणादीनां परस्परसाधर्म्यमितरपदार्थवैधर्म्यं च प्रतिपादयन्नाह उत्क्षेपणादीति ।

(२) कर्मत्वयोगः—पा० ६ पु० । (३) एकद्रव्यवृत्तित्वम्—क्वचित् । एकदा एकस्मिन्द्रव्ये एकमेव कर्म वर्तते एकं कर्म एकत्रैव द्रव्ये वर्तते इति एकद्रव्यवत्त्वम् । यद्येकस्मिन्द्रव्ये युगपद्विरुद्धोभयकर्मसमवायः स्यात् तदाऽन्योन्यप्रतिबन्धाद्दिग्विशेषसंयोगविभागानुपपत्तौ संयोगविभागयोरनपेक्षं कारणं कर्मेति कर्मलक्षणानुपपत्तिः स्यात् ।

(४) अनेकत्वं—पा० ६ । ७ पु० ।

(५) स्वकार्यसंयोगविनाश्यत्वं न तु विभागनाश्यत्वमुत्तरसंयोगाभावप्रसङ्गात् ।

(६) दिग्विशिष्टकार्यकर्तृत्वं दर्शयति तत्रेति ।

(७) प्रदेशैः—इति नास्ति १ पु० । (८) प्रदेशैः—इति नास्ति १ पु० ।

तद्विपरीत(१)संयोगविभागकारणं कर्मापक्षेपणम्(२) ॥

ऋजुनो द्रव्यस्याग्रावयवानां तद्देशैर्विभागः संयोगश्च मूलप्रदेशैर्येन कर्मणावयवी कुटिलः सञ्जायते तदाकुञ्चनम् ॥

तद्विपर्ययेण संयोगविभागोत्पत्तौ(३) येन कर्मणावयवी ऋजुः सम्पद्यते तत्प्रसारणम् ॥

यदनियतदिक्प्रदेशसंयोगविभागकारणं तद्गमनामिति ॥

एतत्पञ्चविधमपि कर्म शरीरावयवेषु तत्सम्बद्धेषु च सत्प्रत्ययमसत्प्रत्ययं च(४) यदन्यत्तदप्रत्ययमेव तेष्वन्येषु च तद्गमनामिति । (५)कर्मणां जातिपञ्चकत्वमयुक्तम् गमनाविशेषात्(६) । सर्वं हि क्षणिकं कर्म गमनमात्रमुत्पन्नं(७) स्वाश्रयस्योर्ध्वमधस्तिर्यग्वाप्यणुमात्रैः(८) प्रदेशैः संयोगविभागान् करोति सर्वत्र गमन(९)प्रत्ययोऽविशिष्टस्तस्माद्गमनमेव सर्वमिति । (१०)न वर्गशः प्रत्ययानुवृत्तिव्यावृत्तिदर्शनात् इहोत्क्षेपणं परत्रापक्षेपणमित्येवमादि सर्वत्र वर्गशः(११) प्र-

(१) तद्विपर्ययेण–पा० १ पु० । (२) कर्मावक्षेपणम्–पा० ७ पु० ।
(३) अग्रावयवानां मूलप्रदेशविभागादुत्तरदेशसंयोगे सतीत्यर्थः ।
(४) प्रयत्नपूर्वकमप्रयत्नपूर्वकञ्चेत्यर्थः । (५) शङ्कते ।
(६) गमनात् सर्वेषामविशेषात्–पा० ५ पु० ।
(७) सर्वं हि कर्म चलनमात्रमुत्पन्नं–पा० ५ पु० ।
(८) तिर्यग्वा परमाणुविवरमात्रैः–पा० ७ पु० ।
(९) सर्वत्र कर्मकर्तृगमन–पा० १ पु० ।
(१०) समाधत्ते नेति । (११) बहुशः–पा० ७ पु० ।

त्ययानुवृत्तिव्यावृत्ती(१) दृष्टे तद्धेतुः सामान्यविशेषभेदोऽवगम्यते । तेषामुदाद्युपसर्गविशेषात् प्रतिनियतदिग्विशिष्टकार्यारम्भत्वादुपलक्षणभेदोऽपि सिद्धः । (२)एवमपि पञ्चैवेत्यवधारणानुपपत्तिः । निष्क्रमणप्रवेशनादिष्वपि वर्गशः(३) प्रत्ययानुवृत्तिव्यावृत्तिदर्शनात् । यथोत्क्षेपणादिषु सर्वत्र वर्गशः(४) प्रत्ययानुवृत्तिव्यावृत्तिदर्शनाज्जातिभेद इष्यते एवं च निष्क्रमणप्रवेशनादिष्वपि । कार्यभेदात् तेषु प्रत्ययानुवृत्तिव्यावृत्ती इति चेत् न उत्क्षेपणादिष्वपि कार्यभेदादेव प्रत्ययानुवृत्तिव्यावृत्तिप्रसङ्गः । अथ समाने वर्गशः(५) प्रत्ययानुवृत्तिव्यावृत्तिसद्भावे उत्क्षेपणादीनामेव जातिभेदो न निष्क्रमणादीनामित्यत्र विशेषहेतुरस्तीति न(६) जातिसङ्करप्रसङ्गात् निष्क्रमणादीनां जातिभेदात् प्रत्ययानुवृत्तिव्यावृत्तौ जातिसङ्करः प्रसज्यते । कथम् ? द्वयोर्द्रष्ट्रोरेकस्मादपवरकादपवरकान्तरं गच्छतो युगपन्निष्क्रमणप्रवेशनप्रत्ययौ दृष्टौ तथा द्वारप्रदेशे प्रविशति निष्क्रामतीति च । यदा तु प्रतिसीराद्यपनीतं भवति तदा न प्रवेशनप्रत्ययो नापि निष्क्रमणप्रत्ययः किन्तु गमनप्रत्यय एव भवति । तथा नालिकायां वंशपत्रादौ पत-

---

(१) प्रत्ययानुवृत्तिः व्यावृत्तिश्च–पा० ५ पु० ।
(२) पुनः शङ्कते । (३) बहुशः–पा० ७ पु० ।
(४) बहुशः–पा० ६ पु० । (५) बहुशः–पा० ६ पु० ।
(६) न विशेषहेतुरस्तीति चेन्न–पा० ५ पु० । विशेषहेतुर्नास्ति–पा० ६ । ७ पु० ।

ति बहूनां द्रष्टॄणां युगपद्भ्रमणपतनप्रवेशनप्रत्यया दृष्टा इति जातिसङ्करप्रसङ्गः(१)। न चैवमुत्क्षेपणादिषु प्रत्ययसङ्करो दृष्टः तस्मादुत्क्षेपणादीनामेव जातिभेदात् प्रत्ययानुवृत्तिव्यावृत्ती(२) निष्क्रमणादीनां तु कार्यभेदादिति । कथं युगपत्प्रत्ययभेद इति चेत् । अथ मतम् यथा जातिसङ्करो नास्ति एवमनेककर्मसमावेशोऽपि नास्तीत्येकस्मिन् कर्मणि युगपद्द्रष्टॄणां भ्रमणपतनप्रवेशनप्रत्ययाः कथं भवन्तीति । (३)अत्र ब्रूमः न अवयवावयविनोर्दिग्विशिष्टसंयोगविभागानां भेदात् । यो हि द्रष्टा अवयवानां पार्श्वतः पर्यायेण दिक्प्रदेशैः संयोगविभागान् पश्यति तस्य भ्रमणप्रत्ययो भवति यो ह्यवयविन ऊर्ध्वप्रदेशैर्विभाग(४)मधःसंयोगं चावेक्षते तस्य पतनप्रत्ययो भवति । यः पुनर्नालिकान्तर्देशे संयोगं बहिर्देशे च विभागं पश्यति(५) तस्य प्रवेशनप्रत्ययो भवतीति सिद्धः कार्यभेदान्निष्क्रमणादीनां प्रत्ययभेद इति । भवतूत्क्षेपणादीनां जातिभेदात् प्रत्ययभेदः(६) निष्क्रमणादीनां तु कार्यभेदादिति(७) ॥

अथ गमनत्वं किं कर्मत्वपर्यायः(८) आहोस्विद-

(१) जातिसङ्करः-पा० १ पु० ।
(२) प्रत्ययव्याप्तिः-पा० ६ । ७ पु० ।
(३) सिद्धान्तमाह अत्रेति ।
(४) ऊर्ध्वप्रदेशाद्विभाग-पा० ६ । ७ पु० ।
(५) अन्तर्देशसंयोगं बहिर्देशविभागं च पश्यति-पा० १ पु० ।
(६) कार्यभेदः-पा० १ पु० । (७) प्रत्ययभेदादिति-पा० ७ पु० ।
(८) गमनं किं कर्मपर्यायः-पा० १ पु० ।

परं सामान्यमिति । (१)कुतस्ते संशयः । (२)समस्ते-ष्वुत्क्षेपणादिषु(३) कर्मप्रत्ययवद्गमनप्रत्ययाविशेषात् कर्मत्वपर्याय इति गम्यते । यतस्तूत्क्षेपणादिवद्विशेषसञ्ज्ञयाभिहितं तस्मादपरं सामान्यं स्यादिति । (४)न । कर्मत्वपर्यायत्वात् । आत्मत्वपुरुषत्ववत्कर्मत्वपर्याय एव गमनत्वमिति । (५)अथ विशेषसञ्ज्ञया किमर्थं गमनग्रहणं कृतमिति (६)न भ्रमणाद्यवरोधार्थत्वात् । उत्क्षेपणादिशब्दैरनवरुद्धानां भ्रमणपतनस्पन्दनादीनामवरोधार्थं गमनग्रहणं कृतमिति । अन्यथा हि यान्येव चत्वारि विशेषसञ्ज्ञयोक्तानि तान्येव सामान्यविशेषसंज्ञाविषयाणि(७) प्रसज्येरन्निति । अथवा अस्त्वपरं सामान्यं गमनत्वमनियत(८)दिग्देशसंयोगविभागकारणेषु भ्रमणादिष्वेव वर्तते गमनशब्दश्चोत्क्षेपणादिषु भाक्तो द्रष्टव्यः स्वाश्रयसंयोगविभागकर्तृत्वसामान्यादिति ॥

(९)सत्प्रत्ययकर्मविधिः । कथम् ? चिकीर्षितेषु यज्ञाध्ययनदानकृष्यादिषु यदा हस्तमुत्क्षेप्तुमिच्छत्यप-

(१) गमनत्वं कर्मत्वपर्याय उतापरं सामान्यमिति संशये सिद्धान्तिनः प्रश्नः कुतस्ते संशय इति । (२) संशयं विभजते ।

(३) भ्रमणादिषु च—पा० ५ पु० । (४) समाधत्ते नेति ।

(५) अथ विशेषतो पृथग्गमनं किमिति कृतमिति आक्षिपति अथेति ।

(६) उत्तरयति नेति । (७) सामान्यविषयाणि—पा० ५ पु० ।

(८) न नियत—पा० ७ पु० ।

(९) प्रयत्नपूर्वककर्मप्रकारः कथ्यते सत्प्रत्ययेति ।

क्षेप्तुं वा(१) तदा हस्तवत्यात्मप्रदेशे प्रयत्नः सञ्जायते तं प्रयत्नं गुरुत्वं चापेक्षमाणादात्महस्तसंयोगा(२)द्धस्ते कर्म भवति हस्तवत् सर्वशरीरावयवेषु पादादिषु शरीरे चेति। तत्सम्बद्धेष्वपि कथम्? यदा हस्तेन मुसलं(३) गृहीत्वेच्छां करोति उत्क्षिपामि हस्तेन मुसलमिति तदनन्तरं प्रयत्नस्तमपेक्षमाणादात्महस्तसंयोगाद्यस्मिन्नेव काले हस्ते उत्क्षेपणकर्मोत्पद्यते तस्मिन्नेव काले तमेव प्रयत्नमपेक्षमाणाद्धस्तमुसलसंयोगात् मुसलेऽपि कर्मेति। ततो(४) दूरमुत्क्षिप्ते मुसले तदर्थेच्छा निवर्तते पुनरप्यपक्षेपणेच्छोत्पद्यते तदनन्तरं प्रयत्नस्तमपेक्षमाणाद्यथोक्तात् संयोगा(५)द्धस्तमुसलयोर्युगपदपक्षेपणकर्मणी भवतः ततोऽन्त्येन(६) मुसलकर्मणोलूखलमुसलयोरभिघाताख्यः संयोगः क्रियते स संयोगो मुसलगतवेगमपेक्षमाणोऽप्रत्ययं(७) मुसले उत्पतनकर्म करोति। तत्कर्माभिघातापेक्षं मुसले संस्कारमारभते तमपेक्ष्य मुसलहस्तसंयोगोऽप्रत्ययं हस्तेऽप्युत्पतनकर्म करोति। (८)यद्यपि प्राक्तनः संस्कारो

---

(१) अवक्षेप्तुं वा—पा० ५ पु०।

(२) असमवायिकारणात्—इत्यधिकं क्वचित्।

(३) मुसुलं—पा० १ पु०। एवमग्रेऽपि।

(४) तदनन्तरं—पा० ५ पु०।

(५) हस्तात्मसंयोगाद्धस्तमुसलसंयोगाच्चेत्यर्थः।

(६) ततोऽन्त्येन—पा० ५ पु०। (७) अप्रयत्नपूर्वकमित्यर्थः।

(८) प्राक्तनापक्षेपणसंस्कारस्याभिघातेन विनष्टत्वात् कथमपेक्षाकारणाभावात् मुसलेऽप्रत्ययमुत्पतनकर्मोत्पतनसंस्कारमारभत इत्यत आह। यद्यपीति।

विनष्टः तथापि मुसलोलूखलयोः संयोगः पटुकर्मोत्पादकः संयोगविशेषभावात् तस्य संस्कारारम्भे(१) साचिव्यसमर्थो भवति । अथवा प्राक्तन एव पटुः संस्कारोऽभिघाता(२)दविनश्यन्नवस्थित इति । अतः संस्कारवति पुनः संस्कारारम्भो नास्त्यतो यस्मिन् काले संस्कारापेक्षादभिघातादप्रत्ययं मुसले उत्पतनकर्म तस्मिन्नेव काले तमेव संस्कारमपेक्षमाणात् मुसल(३)हस्तसंयोगादप्रत्ययं हस्तेऽप्युत्पतनकर्मेति(४) ॥

पाणिमुक्तेषु गमनविधिः । कथम् ? (५)यदा तोमरं हस्तेन गृहीत्वोत्क्षेप्तुमिच्छोत्पद्यते तदनन्तरं प्रयत्नः तमपेक्षमाणाद्यथोक्तात् संयोगद्वयात्(६)तोमरहस्तयोर्युगपदाकर्षणकर्मणी भवतः । प्रसारिते च हस्ते तदाकर्षणार्थः(७) प्रयत्नो निवर्तते तदनन्तरं तिर्यगूर्ध्वं दूरमासन्नं वा क्षिपामीतीच्छा सञ्जायते तदनन्तरं तदनुरूपः(८) प्रयत्नस्तमपेक्षमाणस्तोमरहस्तसंयोगो

---

(१) कर्तव्ये—इत्यधिकं ५ पु० । (२) अविभागा—पा० ७ पु० ।

(३) मुसलशब्दस्य स्थाने सर्वत्र मुशल इति—पा० १ पु० ।

(४) करोतीत्यधिकम् ६ पु० । अस्मिन्पक्षे हस्तमुसलोत्पतनकर्मणी युगपद्भवत इत्याशयः ।

(५) पाणिमुक्तद्रव्येषु गमनप्रकारः कथमुत्पद्यते इति प्रश्ने आह । यदेति ।

(६) आत्महस्तसंयोगात् हस्ततोमरसंयोगाच्च—इत्यधिकं क्वचिन्मूले क्वचिच्च टीकायाम् । (७) कर्षणार्थः—पा० ५ पु० ।

(८) तिर्यक्क्षेपणेच्छायां तिर्यक्क्षेपणप्रयत्न ऊर्ध्वक्षेपणेच्छायां ऊर्ध्वक्षेपणप्रयत्नः दूरक्षेपणेच्छायां महान् प्रयत्नः आसन्नक्षेपणेच्छायां शिथिलप्रयत्नो जायत इति तदनुरूपशब्दाभिप्रायः ।

नोदनाख्यः तस्मात् तोमरे(१) कर्मोत्पन्नं नोदनापेक्षं तस्मिन् संस्कारमारभते ततः संस्कारनोदनाभ्यां तावत् कर्माणि भवन्ति यावद्धस्ततोमरविभाग इति । ततो विभागान्नोदने निवृत्ते संस्कारादूर्ध्वं तिर्यग् दूरमासन्नं वा प्रयत्नानुरूपाणि(२) कर्माणि भवन्त्यापतनादिति ॥

तथा यन्त्रमुक्तेषु(३) गमनविधिः । कथम् ? यो बलवान् कृतव्यायामो(४) वामेन करेण(५) धनुर्विष्टभ्य दक्षिणेन शरं सन्धाय सशरां ज्यां मुष्टिना गृहीत्वा आकर्षणेच्छां करोति सज्येष्वाकर्षयाम्येतद्धनुरिति । तदनन्तरं प्रयत्नस्तमपेक्षमाणादात्महस्तसंयोगादाकर्षणकर्म हस्ते यदैवोत्पद्यते तदैव तमेव प्रयत्नमपेक्षमाणाद्धस्तज्याशरसंयोगाद् ज्यायां शरे च कर्म प्रयत्नविशिष्टहस्तज्याशरसंयोगमपेक्षमाणाभ्यां ज्याकोटिसंयोगाभ्यां कर्मणी भवतो धनुष्कोट्योरित्येतत् सर्वं युगपत्(६)। एवमाकर्णादाकृष्टे धनुषि नातः परमनेन(७) गन्तव्यमिति यज्ज्ञानं ततस्तदाकर्षणार्थस्य प्रयत्नस्य विनाशस्ततः पुनर्मोक्षणेच्छा सञ्जायते तदनन्तरं प्रयत्नस्तमपेक्षमाणादात्माङ्गुलिसंयोगादङ्गुलिकर्म तस्माज्ज्याङ्गुलिविभागः(८) ततो विभागात्

(१) तस्मान्नोदनाख्याद्यथोक्तात् तोमरे–पा० ५ पु० ।
(२) संस्कारात् तदनुरूपाणि–पा० १ पु० ।
(३) यन्त्रमुक्तेष्वपि–पा० ६ । ७ पु० । (४)कृतायुधाभ्यासः ।
(५) पाणिना–पा० १ पु० । (६) कारणयौगपद्यात् इत्यर्थः ।
(७) परेण–पा० ५ पु० । (८) ज्याङ्गुलिशरविभागः–पा० ५ पु० ।

संयोगविनाशः तस्मिन् विनष्टे प्रतिबन्धकाभावा-द्यदा धनुषि वर्तमानः स्थितिस्थापकः संस्कारो म-ण्डलीभूतं धनुर्यथावस्थितं स्थापयति तदा तमेव सं-स्कारमपेक्षमाणाद्धनुर्ज्यासंयोगाज्ज्यायां शरे च कर्मो-त्पद्यते तत्स्वकारणापेक्षं ज्यायां संस्कारं करोति त-मपेक्षमाण इषुज्यासंयोगो नोदनं तस्मादिषावाद्यं कर्म नोदनापेक्षमिषौ संस्कारमारभते । तस्मात् सं-स्कारान्नोदनसहायात् तावत् कर्माणि भवन्ति याव-दिषुज्याविभागो विभागान्निवृत्ते नोदने कर्माण्युत्तरो-त्तराणीषुसंस्कारादेवापतनादिति । (१)बहूनि कर्माणि क्रमशः । कस्मात् ? संयोगबहुत्वात् एकस्तु संस्कारो-ऽन्तराले कर्मणोऽपेक्षाकारणाभावादिति ॥

एवमात्माधिष्ठितेषु सत्प्रत्ययमसत्प्रत्ययं च कर्मो-क्तम् । अनधिष्ठितेषु बाह्येषु चतुर्षु(२) महाभूतेष्व-प्रत्ययं कर्म गमनमेव नोदनादिभ्यो भवति(३) ॥

तत्र नोदनं गुरुत्वद्रवत्ववेगप्रयत्नान् समस्तव्य-स्तानपेक्षमाणो यः संयोगविशेषो नोदनमविभागहे-तोरेकस्य(४) कर्मणः कारणम् तस्माच्चतुर्ष्वपि महा-भूतेषु कर्म भवति । यथा पङ्काख्यायां पृथिव्याम् ॥

---

(१) ज्याविभक्तयोरेषोरन्तराले क्रमशो बहूनि कर्माणि भवन्ति इति कस्मात्कल्प्यते न त्वेकमेवेति अभिप्रायेणाशङ्कते बहूनीति ।

(२) तेषु—पा० ६ पु० ।

(३) आत्मनाऽसाधारणेन सम्बन्धिनानधिष्ठितेषु बाह्येष्वप्रयत्न-पूर्वकं गमनाख्यमेव कर्म भवति नोत्क्षेपणापक्षेपणादिकमिति भावः ।

(४) अविभागकृत एकस्य—पा० १ पु० ।

वेगापेक्षो यः(१) संयोगविशेषो(२) विभागहेतोरेकस्य(३) कर्मणः कारणं सोऽभिघातः(४)। तस्मादपि चतुर्षु महाभूतेषु कर्म भवति यथा पाषाणादिषु निष्ठुरे वस्तुन्यभिपातितेषु तथा पादादिभिर्नुद्यमानायामभिहन्यमानायां वा पङ्काख्यायां पृथिव्यां(५) यः संयोगो नोदनाभिघातयोरन्यतरापेक्ष उभयपेक्षो वा स संयुक्तसंयोगः तस्मादपि पृथिव्यादिषु कर्म भवति। ये च प्रदेशा न नुद्यन्ते नाप्यभिहन्यन्ते तेष्वपि कर्म जायते॥

(६)पृथिव्युदकयोर्गुरुत्वविधारकसंयोगप्रयत्नवेगाभावे सति गुरुत्वाद्यदधोगमनं तत्पतनम्। यथा मुसल(७)शरीरादिषूक्तम्। तत्राद्यं गुरुत्वाद् द्वितीयादीनि तु गुरुत्वसंस्काराभ्याम्॥

(८)स्रोतोभूतानामपां स्थला(९)न्निम्नाभिसर्पणं यत्तद्द्रवत्वात् स्यन्दनम्। कथम् समन्ताद्रोधःसंयोगेनावयविद्रवत्वं प्रतिबद्धम् अवयवद्रवत्वमप्येकार्थसम-

---

(१) वेगाख्यो यः—पा० ५ पु०।

(२) अभिघात्याभिघातकयोः परस्परविभागो जायते यतः कर्मणः, तस्यैकस्य हेतुः संयोगविशेषोऽभिघात इत्यर्थः।

(३) विभागकृत एकस्य—पा० १ पु०।

(४) सोऽभिघाताख्यः—पा० ५ पु०।

(५) पृथिव्याम्—इति नास्ति १ पु०।

(६) गुरुत्वस्य कर्महेतुत्वमाह पृथिवीति।

(७) मुषल—पा० ५ पु०।

(८) द्रवत्वस्य कारणत्वमाह स्रोतोभूतानामिति। अपां यत्र स्थलान्निम्नाभिसर्पणं जायते तत्स्यन्दनं द्रवत्वाज्जायत इत्यर्थः।

(९) स्थान—पा० ५ पु०।

येतं तेनैव प्रतिबद्धमुत्तरोत्तरावयवद्रवत्वानि संयुक्तसंयोगैः(१) प्रतिबद्धानि । यदा तु मात्रया सेतुभेदः(२) कृतो भवति तदा समन्तात् प्रतिबद्धत्वादवयविद्रवत्वस्य कार्यारम्भो नास्ति सेतु(३)समीपस्थस्यावयवद्रवत्वस्योत्तरोत्तरेषामवयवद्रवत्वानां प्रतिबन्धकाभावाद्वृत्तिलाभः । ततः क्रमशः संयुक्तानामेवाभिसर्पणम् ततः पूर्वद्रव्य(४)विनाशे सति प्रबन्धेनावस्थितैरवयवैर्दीर्घं द्रव्यमारभ्यते तत्र च कारणगुणपूर्वक्रमेण द्रवत्वमुत्पद्यते तत्र च कारणानां संयुक्तानां प्रबन्धेन गमने(५) यदवयविनि कर्मोत्पद्यते तत् स्यन्दनाख्यमिति(६) ॥

(७)संस्कारात् कर्म इष्वादिषूक्तम् । तथा चक्रादिष्ववयवानां पार्श्वतः प्रतिनियतदिग्देशसंयोगविभागोत्पत्तौ यदवयविनः(८) संस्कारादनियतदिग्देशसंयोगविभागनिमित्तं कर्म तद्भ्रमणमिति(९) । एवमादयो गमनविशेषाः ॥

---

(१) उत्तरोत्तराणि त्ववयवद्रवत्वानि संयुक्तसंयोगैः–पा० ५ पु० ।

(२) सेतुभङ्गः–पा० ५ पु० । (३) सेतोः–पा० १ पु० ।

(४) ततः द्रव्यसंयोग–पा० ५ पु० । पूर्वसंयोगविनाशे–पा० १ पु० ।

(५) गमनेन–पा० ६ । ७ पु० ।

(६) द्रवत्वात्तत्स्यन्दनम् । तत्र तस्मिन्द्रवत्वे उत्पन्ने सति कारणीभूतानामवयवानां प्रबन्धेन गमने पङ्क्तीभावेनैकदेशतया गमने सति यदवयविनि द्रवत्वात्कर्म तत्स्यन्दनम् इत्यर्थः ।

(७) अत्र यथापदमध्याहृत्य तथा चक्रादिष्वित्यन्वयो बोध्यः ।

(८) तदवयविनि–पा० ७ पु० ।

(९) तद्भ्रमणाख्यमिति–पा० ५ । ६ पु० ।

प्राणाख्ये तु वायौ कर्म आत्मवायुसंयोगादिच्छाद्वेषपूर्वकप्रयत्नापेक्षाज्जाग्रत इच्छानुविधानदर्शनात् सुप्तस्य तु जीवनपूर्वकप्रयत्नापेक्षात्(१)। (२)आकाशकालदिगात्मनसां सत्यपि द्रव्यभावे(३) निष्क्रियत्वं सामान्यादिवदमूर्तत्वात्। मूर्तिरसर्वगतद्रव्यपरिमाणम् तदनुविधायिनी च क्रिया सा चाकाशादिषु नास्ति तस्मान्न तेषां क्रियासम्बन्धोऽस्तीति॥

सविग्रहे मनसीन्द्रियान्तरसम्बन्धार्थं जाग्रतः कर्म आत्ममनःसंयोगादिच्छाद्वेषपूर्वकप्रयत्नापेक्षात् अन्वभिप्रायमिन्द्रियान्तरेण विषयान्तरोपलब्धिदर्शनात्(४)। सुप्तस्य प्रबोधकाले जीवनपूर्वकप्रयत्नापेक्षात्। अपसर्पणकर्मोपसर्पणकर्म चात्ममनःसंयोगाददृष्टापे-

---

(१) जीवनपूर्वकप्रयत्नापेक्षादिति। सुप्तस्य जीवनपूर्वकप्रयत्नापेक्षादात्मवायुसंयोगात् सुप्तस्य प्राणक्रिया प्रयत्नकार्या प्राणक्रियात्वात् जाग्रतः प्राणक्रियावत्। स च प्रयत्नो नेच्छाद्वेषनिमित्तः सुप्तस्य तदभावात् तस्माज्जीवनपूर्वक एवेति निर्णीयते प्राणधारणस्य तत्पूर्वकत्वात्

(२) क्रियात्वं मूर्तत्वव्याप्तम् मूर्तत्वस्याकाशादिष्वभावात् सुतरां क्रियाभाव इति आशादिषु क्रियोत्पत्तिर्न विचारितेत्याहाकाशादिति।

(३) द्रव्यत्वे—पा० ७ पु०।

(४) अत्रायमनुमानप्रकारः मनःक्रिया इच्छादिविशिष्टप्रयत्नसाध्या जागराद्यवस्थायामभिप्रायानतिक्रमेण चाक्षुषादिसाक्षात्कारात् एवञ्चान्तःकरणसम्बन्धमन्तरा बाह्येन्द्रियस्य विषयग्राहकत्वं नास्ति इति इच्छाद्वेषपूर्वकात्प्रयत्नान्मनसि क्रियोत्पद्यत इति तात्पर्यम्।

स्यात्(१) । कथम् यदा जीवनसहकारिणोर्धर्माधर्मयोरुपभोगात् प्रक्षयोऽन्याभिभवो वा(२) तदा जीवनसहाययोर्वैकल्यात्(३) तत्पूर्वकप्रयत्नवैकल्यात् प्राणनिरोधे(४) सत्यन्याभ्यां लब्धवृत्तिभ्यां धर्माधर्माभ्यामात्ममनःसंयोगसहायाभ्यां मृतशरीराद्विभागकारणमपसर्पणकर्मोत्पद्यते । ततः शरीराद्बहिरपगतं ताभ्यामेव धर्माधर्माभ्यां समुत्पन्नेनातिवाहिकशरीरेण सम्बध्यते तत्संक्रान्तं च स्वर्गं नरकं वा गत्वा आशयानुरूपेण शरीरेण सम्बध्यते(५) तत्संयोगार्थं कर्मोपसर्पणमिति(६) । योगिनां च बहिरुद्रेचितस्य मनसोऽभिप्रेतदेशगमनं प्रत्यागमनं च । तथा सर्गकाले प्रत्यग्रेण शरीरेण सम्बन्धार्थं कर्मादृष्टकारितम् । एवमन्यदपि महाभूतेषु यत्प्रत्यक्षानुमानाभ्यामनुपलभ्यमानकारणमुपकारापकारसमर्थं च भवति तदप्यदृष्टकारितम् । यथा सर्गादावणुकर्म अग्निवाय्वोरूर्ध्वतिर्यग्गमने महाभूतानां प्रक्षोभणम् । अभिषिक्तानां मणीनां(७) तस्करं प्रति गमनम् । अयसोऽयस्कान्ताभिसर्पणं चेति॥

इति प्रशस्तपादभाष्ये कर्मपदार्थः(८) समाप्तः ॥

---

(१) इच्छापेक्षात्-पा० ७ पु० (२) भवति-इत्यधिकं ५ पु० ।

(३) जीवनसहकारिवैकल्यात्-पा० १ पु० । जीवनसहायवैकल्ये-पा० ६ । ७ पु० । (४) प्राणवायोर्निरोधे-पा० ५ पु० ।

(५) संयुज्यते-पा० १ पु० ।

(६) उपसर्पणाख्यम्-पा० १ पु० ।

(७) अधिवासितमणीनां-पा० क्वचित् ।

(८) इति प्रशस्तपादाचार्यविरचिते वैशेषिकभाष्ये कर्मपदार्थः-पा० ७ पु० ।

## अथ सामान्यपदार्थनिरूपणम् ।

सामान्यं द्विविधम् परमपरं च । स्वविषयसर्वगगतमभिन्नात्मकमनेकवृत्ति(१)एकाद्विबहुष्वात्मस्वरूपानुगमप्रत्ययकारि(२)स्वरूपाभेदेनाधारेषु प्रबन्धेन वर्तमानमनुवृत्तिप्रत्यय(३)कारणम् । कथम् प्रतिपिण्डं सामान्यापेक्षं प्रबन्धेन ज्ञानोत्पत्तावभ्यासप्रत्ययजनिताच संस्कारादतीतज्ञानप्रबन्धप्रत्यवेक्षणाद् यदनुगत(४)मस्ति तत्सामान्यमिति । तत्र सत्तासामान्यं परमनुवृत्तिप्रत्ययकारणमेव । यथा परस्परविशिष्टेषु चर्मवस्त्रकम्बलादिष्वेकस्मात्(५)नीलद्रव्या(६)भिसम्बन्धात् नीलं नीलमिति प्रत्ययानुवृत्तिः तथा परस्परविशिष्टेषु द्रव्यगुणकर्मस्वविशिष्टा सत्सदिति प्रत्ययानुवृत्तिः सा चार्थान्तराद्भवितु(७)मर्हतीति यत्तदर्थान्तरं सा सत्तेति सिद्धा। सत्तानुसम्बन्धात् सत्सदिति प्रत्ययानुवृत्तिः तस्मात् सा(८) सामान्यमेव । अपरं द्रव्यत्वगुणत्वकर्मत्वादि अनुवृत्तिव्यावृत्ति(९)हेतुत्वात् सामान्यं विशेषश्च भवति । तत्र द्रव्यत्वं परस्परविशि-

(१) सर्वगतमभेदात्मकवृत्ति–पा० ६ पु० ।
(२) अनुवृत्तिप्रत्ययकारणं–पा० ५ पु० ।
(३) अनुवृत्तिबुद्धिकारणं–पा० ५ पु० ।
(४) यत् सदनुगतमस्ति–पा० १ पु० ।
(५) कम्बलादिष्वन्यस्मात्–पा० ४ पु० ।
(६) नीलद्रव्या–पा० ६ पु० ।
(७) सा चार्थान्तरसम्बन्धाद्भवितु–पा० ५ पु० ।
(८) सत्ता–पा० ५ पु० । (९) अनुवृत्तिव्यावृत्तिप्रत्ययहेतुत्वात्–पा० ५ पु० ।

ष्टेषु पृथिव्यादिष्वनुवृत्तिहेतुत्वात्(१) सामान्यम् गुणकर्मभ्यो व्यावृत्तिहेतुत्वात्(२) विशेषः । तथा गुणत्वं परस्परविशिष्टेषु रूपादिष्वनुवृत्तिहेतुत्वात् सामान्यम् द्रव्यकर्मभ्यो व्यावृत्तिहेतुत्वात्(३) विशेषः । तथा कर्मत्वं परस्परविशिष्टेषूत्क्षेपणादिष्वनुवृत्तिप्रत्ययहेतुत्वात् सामान्यं द्रव्यगुणेभ्यो व्यावृत्तिहेतुत्वाद्विशेषः(४) एवं पृथिवीत्वरूपत्वोत्क्षेपणत्वगोत्वघटत्वपटत्वादीनामपि प्राण्यप्राणिगतानामनुवृत्तिव्यावृत्तिहेतुत्वात्(५) सामान्यविशेषभावः सिद्धः । एतानि तु द्रव्यत्वादीनि प्रभूतविषयत्वात् प्राधान्येन सामान्यानि स्वाश्रयविशेषकत्वाद्भक्त्या विशेषाख्यानीति ॥

लक्षणभेदादेषां द्रव्यगुणकर्मभ्यः पदार्थान्तरत्वं सिद्धम् । अत एव च नित्यत्वम् । द्रव्यादिषु वृत्तिनियमात् प्रत्ययभेदाच्च परस्परतश्चान्यत्वम्(६) । प्रत्येकं स्वाश्रयेषु लक्षणाविशेषाद्विशेषलक्षणाभावाच्चैकत्वम् । यद्यप्यपरिच्छिन्नदेशानि सामान्यानि भवन्ति तथाप्युपलक्षणनियमात् कारणसामग्रीनियमाच्च स्वविषयसर्वगतानि । अन्तराले च संयोगसमवायवृत्त्यभा-

---

(१) अनुवृत्तिप्रत्ययहेतुत्वात्–पा० ५ पु० ।

(२) अनुवृत्तिव्यावृत्तिप्रत्ययहेतुत्वात्–पा० ५ पु० ।

(३) व्यावृत्तिप्रत्ययहेतुत्वात्–पा० ५ पु० ।

(४) व्यावृत्तिप्रत्ययहेतुत्वात्–पा० ५ पु० ।

(५) तथा कर्मत्वं परस्परविशिष्टेषूत्क्षेपणादिष्वनुवृत्तिप्रत्ययहेतुत्वात् सामान्यं द्रव्यगुणेभ्यो व्यावृत्तिहेतुत्वाद्विशेषः–इति नास्ति १ पु० । (६) परस्परश्चान्यत्वं–पा० ५ पु० ।

वादन्यपदेश्यानीति ॥

इति प्रशस्तपादभाष्ये(१) सामान्यपदार्थः समाप्तः ॥

अथ विशेषपदार्थनिरूपणम् ।

अन्तेषु भवा(२) अन्त्याः स्वाश्रयविशेषकत्वा-द्विशेषाः । विनाशारम्भरहितेषु नित्यद्रव्येष्वण्वाका-शकालदिगात्ममनस्सु प्रतिद्रव्यमेकैकशो वर्त्तमानाः अत्यन्तव्यावृत्तिबुद्धिहेतवः(३) । यथास्मदादीनां ग-वादिष्वश्वादिभ्यस्तुल्याकृतिगुणक्रियावयवसंयोगनि-मित्ता प्रत्ययव्यावृत्तिर्दृष्टा गौः शुक्लः शीघ्रगतिः पी-नककुद्मान्(४) महाघण्ट इति । तथास्मद्विशिष्टानां योगिनां नित्येषु तुल्याकृतिगुणक्रियेषु परमाणुषु मु-क्तात्ममनस्सु च अन्यनिमित्तासम्भवाद् येभ्यो निमि-त्तेभ्यः प्रत्याधारं विलक्षणोऽयं विलक्षणोऽय(५)मिति प्रत्ययव्यावृत्तिः देशकालविप्रकर्षे(६) च परमाणौ स एवायमिति प्रत्यभिज्ञानं च भवति तेऽन्त्या(७) वि-शेषाः । यदि(८)पुन(९)रन्त्यविशेषमन्तरेण योगिनां योगजाद्धर्मात् प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानं न स्यात् ततः किं स्यान्नैवं भवति(१०)। यथा च योगजाद्धर्माद्-

(१) इति प्रशस्तपादाचार्यविरचिते वैशेषिकभाष्ये–पा० ५ पु० ।
(२) अन्ते भवाः–पा० ३ पु० । (३) विशेषा–इत्यधिकं ५ पु०॥
(४) पीन–इति नास्ति १ पु० ।
(५) प्रत्याधारमयमस्माद्विलक्षणोऽयं–पा० ५ पु० ।
(६) विप्रकृष्टे–पा० ६ । ७ पु० ।
(७) भवतीति यतस्तेऽन्त्याः–पा० ५ पु० ।
(८) यत्र–पा० १ पु० । (९) योगिनां पुनः–पा० १ पु० ।
(१०) ततः किं नैवं भवति–पा० ५ पु० ।

शुक्लप्रत्ययः सञ्जायते अत्यन्तादृष्टे च(१) प्रत्याभिज्ञानम् । यदि स्यान्मिथ्या भवेत्(२) तथेहाप्यन्त्यविशेषमन्तरेण योगिनां न योगजाद्धर्मात् प्रत्ययव्यावृत्तिः प्रत्याभिज्ञानं वा भवितुमर्हति(३) । (४)अथान्त्यविशेषेष्विव परमाणुषु कस्मान्न स्वतः प्रत्ययव्यावृत्तिः कल्प्यते इति चेन्न(५) तादात्म्यात् । (६)इहातदात्मकेष्वन्यनिमित्तः प्रत्ययो भवति यथा घटादिषु प्रदीपात् न तु प्रदीपे प्रदीपान्तरात् । यथा गवाश्वमांसादीनां स्वत एवाशुचित्वं तद्योगादन्येषाम् तथेहापि तादात्म्यादन्त्यविशेषेषु स्वत एव प्रत्ययव्यावृत्तिः तद्योगात् परमाण्वादिष्विति ॥

इति प्रशस्तपादभाष्ये(७) विशेषपदार्थः समाप्तः ।

## अथ समवायपदार्थनिरूपणम् ।

अयुतसिद्धानामाधार्याधारभूतानां यः सम्बन्ध इहप्रत्ययहेतुः स समवायः । द्रव्यगुणकर्मसामान्यविशेषाणां कार्यकारणभूतानामकार्यकारणभूतानां(८) वायु-

(१) अत्यन्तादृष्टपूर्वे च–पा० ५ पु० ।

(२) मिथ्याप्रत्ययः स्यात्–पा० ५ पु० ।

(३) अधिकरोति–पा० ८ पु० । (४) शङ्कते अथेति ।

(५) तादात्म्यान्नैवमित्याशयेनाह नेति ।

(६) तादात्म्यमेव स्फुटयति इहेति ।

(७) इति प्रशस्तपादाचार्यविरचिते वैशेषिकभाष्ये–पा० ७ पु० ।

(८) कार्यकारणभूतानामवयवावयविनाम् अनित्यद्रव्यतद्गुणानां नित्यद्रव्यतत्समवेतानामनित्यगुणानां कर्मतद्वताम्, अकार्यकारणं भूतानां नित्यद्रव्यतद्गुणानां सामान्यतद्वताम् अन्त्यविशेषतद्वतां समवाय इत्यर्थः ।

तसिद्धानामाधार्याधारभावेनावस्थितानामिहेदमिति-बुद्धिर्यतो भवति यतश्चासर्वगतानाना(१)मधिगतान्यत्वानामविष्वग्भावः(२) स समवायाख्यः सम्बन्धः। कथम् यथेह कुण्डे दधीतिप्रत्ययः सम्बन्धे सति दृष्टस्तथेह तन्तुषु पटः इह वीरणेषु कटः इह द्रव्ये गुणकर्मणी(३) इह द्रव्यगुणकर्मसु सत्ता इह द्रव्ये द्रव्यत्वम् इह गुणे गुणत्वम् इह कर्मणि कर्मत्वम् इह नित्यद्रव्येऽन्त्या विशेषा इतिप्रत्ययदर्शनादस्त्येषां सम्बन्ध इति ज्ञायते ॥

(४)न चासौ संयोगः सम्बन्धिनामयुतसिद्धत्वात् अन्यतरकर्मादिनिमित्तासम्भवात्(५) विभागान्तत्वादर्शनादधिकरणाधिकर्तव्ययोरेव भावादिति ॥

स च द्रव्यादिभ्यः पदार्थान्तरं भाववल्लक्षणभेदात्। यथा भावस्य द्रव्यत्वादीनां स्वाधारेषु आत्मानुरूप(६)प्रत्ययकर्तृत्वात् स्वाश्रयादिभ्यः परस्परतश्चार्थान्तरभावः तथा समवायस्यापि पञ्चसु पदार्थ-

---

(१) यतश्च सर्वगतानां–पा० ६ पु०।

(२) अविश्वग्भावः–पा० क्वचित्।

(३) इह द्रव्ये द्रव्यगुणकर्माणि–पा० ६ पु०।

(४) नन्वयं संयोग एव भविष्यतीत्यत आह न चेति। संयोगो हि युतसिद्धानामेवायन्तु अयुतसिद्धानामित्यर्थः। एवं संयोगस्यान्यतरकर्मादिजन्यत्वाद्विभागनाश्यत्वात् स्वतन्त्रयोरपि भावाच्च तद्विपरीततया नायं संयोग इति भावः।

(५) कर्मादिनिमित्तप्रतीत्यभावात्–पा० ६ पु०। अन्यतरकर्मजत्वादि–पा० ९ पु०।

(६) अर्थानुरूप–पा० ६ पु०।

दिहेतिप्रत्ययदर्शनात् तेभ्यः पदार्थान्तरत्वमिति । न च संयोगवन्नानात्वं भाववल्लिङ्गाविशेषात्(१) विशेषलिङ्गाभावाच्च तस्माद्भाववत्सर्वत्रैकः समवाय इति ॥

ननु(२) यद्येकः समवायो द्रव्यगुणकर्मणां द्रव्यत्वगुणत्वकर्मत्वादिविशेषणैः सह सम्बन्धैकत्वात् पदार्थसङ्कर(३)प्रसङ्ग इति न आधाराधेयनियमात् । यद्यप्येकः समवायः सर्वत्र स्वतन्त्रः तथाप्याधाराधेयनियमोऽस्ति । कथम् द्रव्येष्वेव द्रव्यत्वं गुणेष्वेव गुणत्वं कर्मस्वेव कर्मत्वमिति । एवमादि(४) कस्मादन्वयव्यतिरेकदर्शनात्(५) । इहेतिसमवायनिमित्तस्य ज्ञानस्यान्वयदर्शनात् सर्वत्रैकः समवाय इति गम्यते । द्रव्यत्वादिनिमित्तानां व्यतिरेकदर्शनात् प्रतिनियमो ज्ञायते । (६)यथा कुण्डदध्नोः संयोगैकत्वे भवत्याश्रयाश्रयिभावनियमः । तथा द्रव्यत्वादीनामपि समवायैकत्वेपि व्यङ्ग्यव्यञ्जकशक्तिभेदादाधाराधेयनियम इति ॥

---

(१) यथा सत्सदिति लक्षणस्य सर्वत्राविशेषात् विशेषे भेदे लिङ्गस्य प्रमाणस्याभावाच्च सर्वत्रैको भावस्तथा इहेति-प्रत्ययरूपलक्षणस्य सर्वत्रावैलक्षण्याद्भेदे प्रमाणाभावाच्च सर्वत्रैकस्समवाय इति भावः ।

(२) ननु-इति नास्ति ६ पु० । (३) पदार्थधर्मसङ्कर-पा० ९ पु० ।

(४) शङ्कते एवमादीति । द्रव्येष्वेव द्रव्यत्वमित्यादि कथमिति प्रश्नार्थः ।

(५) द्रव्यत्वनिमित्तस्य प्रत्ययस्य द्रव्येष्वन्वयो गुणकर्मभ्यो व्यतिरेक इत्यादि दृश्यते तस्मादन्वयव्यतिरेकदर्शनादुद्रव्यत्वादीनां नियमो ज्ञायत इत्यर्थः ।

(६) समवायैक्येपि कुतोयं नियमो यद्द्रव्यत्वस्य पृथिव्यादावेव समवायो नान्यत्रेत्यत आह यथेति ।

(१)सम्बन्ध्यनित्यत्वेऽपि न संयोगवदनित्यत्वं भाववदकारणत्वात् । यथा प्रमाणतः कारणानुपलब्धेर्नित्यो भाव इत्युक्तम् तथा समवायोऽपीति । न ह्यस्य किञ्चित् कारणं प्रमाणत उपलभ्यते इति । (२)कया पुनर्वृत्त्या द्रव्यादिषु समवायो वर्तते । न संयोगः सम्भवति तस्य गुणत्वेन द्रव्याश्रितत्वात् । नापि समवायस्तस्यैकत्वात् न चान्या वृत्तिरस्तीति । न तादात्म्यात(३) । यथा द्रव्यगुणकर्मणां सदात्मकस्य भावस्य नान्यः सत्तायोगोऽस्ति । एवमविभागिनो वृत्त्यात्मकस्य समवायस्य नान्या वृत्तिरस्ति तस्मात् स्वात्मवृत्तिः । अत एवातीन्द्रियः सत्तादीनामिव प्रत्यक्षेषु वृत्त्यभावात् स्वात्मगतसंवेदनाभावाच्च । (४)तस्मादिहबुद्ध्यनुमेयः समवाय इति ॥

इति प्रशस्तपादभाष्ये(५) समवायपदार्थः समाप्तः ॥

योगाचारविभूत्या यस्तोषयित्वा महेश्वरम् ।
चक्रे वैशेषिकं शास्त्रं तस्मै कणभुजे नमः ॥ (६)

इति प्रशस्तपादविरचितं द्रव्यादिषट्पदार्थभाष्यं समाप्तम् ॥

---

(१) स्यादेतत् संयोगवद्यमनित्य आहोस्विन्नित्य इति संशये सत्याह सम्बन्ध्यनित्यत्वेपीति ।

(२) शङ्कते कयेति । (३) समाधत्ते न तादात्म्यादिति ।

(४) उपसंहरति तस्मादिति । (५) पदार्थोद्देशे–पा० ६ पु० ।

(६) पद्यमिदं ६ पुस्तक एवास्ति ॥

BENARES SANSKRIT SERIES;
A
COLLECTION OF SANSKRIT WORKS
EDITED BY THE
PANDITS OF THE BENARES SANSKRIT COLLEGE.
*Nos. 15, 50, 155, 156 & 157.*

—:o:—

# वैशेषिकदर्शनम् ।

## श्रीमदुदयनाचार्यविरचितकिरणावलीटीकासंवलित-प्रशस्तपादप्रणीतभाष्यसहितम् ।

# THE APHORISMS OF THE VAIŚESHIKA PHILOSOPHY BY KAṆÂDA,

WITH THE COMMENTARY OF PRAŚASTAPÂDA, AND THE GLOSS OF UDAYANÂCHÂRYA.

Edited by
MAHÂMAHOPÂDHYÂYA
VINDHYEŚVARÎ PRASÂDA DVIVEDÎ,
LIBRARIAN, GOVT. SANSKRIT COLLEGE, BENARES;
and Nyáyopádhyáya Kávyatírtha Dhuṇḍhiráj Śástri.

---

*BENARES*:
PUBLISHED BY BRAJ BHUSHAN DAS & CO.,
C. K. 40/5, Thatheri Bazar, Near the Chauk.
*Printed by Krishna Das Gupta, Proprietor, at the Benares Printing Press and by Jai Krishna Das Gupta at the Vidya Vilas Press, Benares.*

1919.

# वैशेषिकदर्शनस्य

## विज्ञापनस्य शुद्धिपत्रम् ।

| पृ० | पं० | अशुद्धम् | शुद्धम् | पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| १ | १७ | सुपुप्य | सुपुप्स्य | १४ | २ | ब्राह्म | बाह्य |
| ३ | ६ | प्रारिप्सित | प्रारीप्सित | १७ | २१ | वाण | बाण |
| ३ | १२ | वाक्यम | वाक्यम् | १७ | २४ | सन्दिग्ध | सन्दिग्धं |
| ५ | १० | परीतोष | परितोष | २९ | ४ | विन्दुभिः | बिन्दुभिः |
| ७ | २ | स्थीयतां | स्थितं | १४ | २ | सञ्जाता- | सञ्जाता अ- |
| ७ | ७ | इदर्शी | ईदृशीं | | | शुद्ध्यो | शुद्ध्यो |

## वैशेषिकदर्शनसूत्राणां शुद्धिपत्रम् ।

| पृ० | पं० | अशुद्धम् | शुद्धम् | पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| ३ | १८ | द्रवत्व | द्रवत्व | ७ | १० | व्याख्यते | व्याख्याते |
| ९ | २ | भाव च | भावे च | ११ | २६ | दिग | दिग् |
| १३ | ८ | अप्स | अप्सु | | | | |

## सटीकप्रशस्तपादभाष्यस्य शुद्धिपत्रम् ।

| पृ० | पं० | अशुद्धम् | शुद्धम् | पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| १ | १८ | पच्छास्त्र | पतच्छास्त्र | ” | १९ | दारू | दारु |
| २ | ११ | वहुत्वे | बहुत्वे | १० | ७ | यद्यैकैको | यद्येकैको |
| ” | १३ | वहुत्वं | बहुत्वं | ११ | २१ | वत्मधीः | वात्मधीः |
| ” | १३ | वहुवचने | बहुवचने | १४ | २४ | प्रश्ने न | प्रश्नेन |
| ३ | २५ | कल्पते | कल्प्येते | १० | १६ | सत्तसिद्ध | सत्तासिद्ध |
| ४ | ५ | सम्वलित | सम्वलित | ३५ | १८ | वर्तत | वर्तेत |
| ५ | २० | पदर्थाः | पदार्थाः | ३६ | ४ | रिन्द्रय | रिन्द्रिय |
| ६ | ५ | स्थाणवायो | स्थाणवाद्यो | ३९ | १ | नैमित्तिक | नैमित्तिक |
| ७ | ३ | मनन्ताप- | मनन्तामप- | ४२ | २ | राच | रा च |
| | | पवर्ग | वर्गं | ” | १७ | लोके न | लोकेन |
| ” | १६ | अस्यास्त्य- | मस्या अ- | ५४ | २३ | सयोगा- | संयोगा |
| | | वेति | स्त्येवेति | ५० | २० | वगाहमाने- | वगाहने- |
| ८ | ५ | मवर्ग | मपवर्गं | | | नापि | नापि |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६६ | २२ | व्यापकत्वे | व्यापकत्वे- |
| | | नोपाधेः | नोपाधेः |
| ६७ | १९ | पार्थिवे | पार्थिवे |
| ७० | ९ | यद्याप:श- | यद्यापः श- |
| | | रीरं | रीरं |
| " | १८ | तथाप्यपत्वा | तथाप्यत्वा |
| " | २० | ननु | न तु |
| ७४ | १० | तून्मीलन्नेव | तून्मीलन्त्येव |
| " | २१ | तथाचा | तथाचा- |
| ७५ | २० | र्बाह्मा | र्बाह्या |
| ७६ | २० | निराकारि- | निराकरि- |
| | | ष्पती | ष्यती- |
| ७७ | | तथा प्रदर्शि- | तथाऽप्रद- |
| | | नात् | र्शनात् |
| ७८ | १७ | सयोगा | संयोगा |
| ७९ | २२ | वायुत्वव्य- | वायुत्वव्य- |
| | | स्था | वस्था |
| ८० | १६ | द्वेगद् | द्वेगवद् |
| ८५ | ३ | नुपब्धेः | नुपलब्धेः |
| " | १३ | रूपद्रव्य | रूपवद्रव्य |
| ८६ | १४ | सन्धित्वे | सम्बन्धित्वे |
| ८७ | २ | रुर्द्ध | रूर्द्ध |
| ८८ | २२ | कायो | कार्यो |
| ८९ | ७ | विवेषः | विशेषः |
| " | ९ | व्यावहारे | व्यवहारे |
| ९२ | ४ | न्तुतरस्मि | न्तुत्तरस्मि |
| " | ६ | परमणव | परमाणव |
| " | १९ | तिष्टन्ते | तिष्ठन्ते |
| ९४ | १ | भनसि | नभसि |
| ९५ | १० | तनैभूर्भुवा | तैनैर्भूर्भुवा |
| ९८ | १८ | नुपस्थाना | नुपस्थापना |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९९ | २५ | वल | बल |
| १०३ | २२ | मानसत्त्वा | मानसत्वा |
| १०४ | ९ | नुपपति | नुपपत्ति |
| " | १८ | कर्यत्वा | कार्यत्वा |
| १०६ | २१ | शंस्वा | शंक्या |
| १०८ | ७ | व्यघातः | व्याघातः |
| १०९ | १२ | सग्धिग्धा | सन्दिग्धा |
| ११० | १० | आकशं | आकाशं |
| ११४ | २१ | व्योमशिवा | व्योमशिखा |
| " | २२ | सत्त्वात | सत्त्वात् |
| ११६ | १२ | प्रसंङ्गः | प्रसङ्गः |
| १२५ | १९ | रवि | रबि |
| " | २३ | समवायि | समवायि |
| १२६ | १८ | दक्षिण्णत्व | द्राक्षिणत्व |
| " | २४ | समवायि | समवायि |
| " | " | वारण्णाय | वारणाय |
| १३२ | ९ | प्रयत्र | प्रयत्न |
| १३३ | १९ | सङ्घटनं | सङ्घट्टनं |
| १३४ | १८ | गतिमत् | गतिमत्त्वात् |
| १३५ | १४ | विल्व | बिल्व |
| " | २० | विषय | विषय |
| " | २१ | प्रेक्षक | प्रेक्षक |
| १३६ | ९ | धिष्टात्रेति | धिष्ठात्रेति |
| १३८ | १२ | स्पर्शाद्विशेष | स्पर्शवद्विशेष |
| १३९ | ८ | धिकरणोऽऽ | धिकरण्य- |
| | | मीषां | ऽमीषां |
| १४० | १५ | तम्मूलाः | तन्मूलाः |
| १४५ | १० | कच्चा | कच्चा |
| " | २० | वद्यपनिबन्ध | वस्तुपनिबन्ध |
| १५० | ४ | दपपृक | दपवृक |
| १५२ | २० | कुविन्द | कुविन्द |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १५४ | ७ | भेत्स्यती | स्रेक्ष्यती |
| " | १६ | एकैका<br>श्मिन् | एकैक-<br>श्मिन् |
| " | १९ | द्विवेत्यर्थः | द्वैवेत्यर्थः |
| १५६ | | पत्रस्थं टिप्पणं १५७ मूर्त-<br>त्वमित्यत्र द्रष्टव्यम् । | |
| १६० | ८ | भूषण | भूषणः |
| " | १८ | मपेक्षत्वभ्यां | मपेक्षत्वा-<br>भ्यां |
| " | २३ | समुद्धृता-<br>यम् | समुद्धृतो-<br>यम् |
| १६३ | २२ | चरेभ्यो | तरेभ्यो |
| १६५ | ११ | मप्याध्याहा-<br>र्यम् | मप्यध्या-<br>हार्यम् |
| १६६ | १७ | विभागजाव-<br>ति | विभाग-<br>जाविति |
| १६७ | ८ | काणत्वे | कारणत्वे |
| १६९ | १० | वश | वंश |
| " | १२ | स्वश्रये | स्वाश्रये |
| " | १६ | स्वश्राये | स्वाश्रये |
| १७२ | १४ | सुपाधि | मुपाधि |
| १७३ | २ | स्पर्शवद्द्रत्वा-<br>नि | स्पर्शद्रव-<br>त्वानि |
| १७५ | ८ | व्याख्यताः | व्याख्याताः |
| " | २० | कानिचि | कानिञ्चि |
| १७६ | १ | पमाणुषु | परमाणुषु |
| " | १४ | आदिश्देन | आदिशब्देन |
| १७७ | १२ | रूवद् | रूपवद् |
| १७८ | ३ | सन्त्येव | सत्येव |
| " | ९ | समावायि | समवायि |
| १७९ | १४ | र्थक्रिमाह | र्थक्रियामाह |
| १८० | १८ | घहुवचन | बहुवचन |
| १८२ | १५ | सप्यगा | सम्यगा |
| १८५ | २१ | मुषाग्नि | बुषाग्नि |
| १८६ | ११ | जात्पभि | जात्यभि |
| " | १७ | वदुद्भावा | तदुद्भवा |
| १८७ | १८ | स्थितेः | स्थितेः |
| १८८ | ५ | स्फुटनान् | स्फुटनात् |
| " | ६ | वह्वभ्यास | बह्वभ्यास |
| " | १७ | द्व्यणुक | द्व्यणुक |
| १९ | १७ | संयगो | संयोगो |
| " | १९ | विमाग | विभाग |
| १९१ | १५ | रक्ताद्यत्पत्ति | रक्ताद्युत्पत्ति |
| १९३ | २ | साधारण-<br>त्वान् | साधार-<br>णत्वात् |
| " | १२ | त्वानित्वे | त्वानेकत्वे |
| " | १८ | नियमौ | नियमो |
| १९४ | ६ | क्षख्यं | क्षण्यं |
| १९८ | २१ | तस्मात् | तस्मात् |
| १९९ | ८ | तर्योर्यौ | तयोर्यौ |
| " | १६ | विनश्यते | विनश्यत्त |
| २०० | १९ | विनाश्यत्वं | विनाश्यत्वे |
| २०६ | १३ | धातक | घातक |
| २१२ | १ | चोत्पाद्य (१)<br>मह | चोत्पा-<br>द्य(१)मह |
| २२० | १२ | सम्भवय-<br>न्ति | सम्भवन्ति |
| २३७ | १८ | निःक्रियस्ये-<br>वे | निःक्रिय-<br>स्यैवे |
| २३८ | १६ | संयोगो-<br>व्यस्य | संयोगोद्य-<br>स्य |
| २४६ | १५ | कर्ग | कर्म |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २५१ | २३ | त्यपरोर्थः | त्यपेरर्थः |
| २५८ | १० | त द्वनेन | तद्वनेन |
| २७४ | २० | धर्माधर्माभ्यां | धर्माभ्यां |
| २७५ | १३ | स्वर्पामीति | स्वपिमीति |
| २७७ | २० | तद्वत्व | तद्वत्त्व |
| २८३ | १० | न्यानां सुप | न्यानामुप |
| २८४ | १० | विधायाप्रव | विधायप्रव |
| " | ११ | मापन्नवि-गता | मापन्ना-विगता |
| " | " | मानसो | मनसो |
| २८५ | ५ | मान्गत्येव | वान्मवत्येव |
|  | १० | धर्मागो | धर्माणो |
| २९८ | १६ | साधारण | साधारणं |
|  | १८ | स्वभावस्य-बन्धा | स्य भाव-सम्बन्धा |
| २९९ | ७ | निश्चयेनेवा | निश्चयेनैवा |
| ३०० | ३३ | न्यथात्वेन | न्यथात्वे न |
| ३१५ | २० | आ० सू० ३ | आ०१ सू०२ |
| " | २२ | अ० १ | अ० ६ |
| ३१६ | ४ | साकल्ये | साफल्ये |
| ३१६ | २४ | मन्यमय | मन्यतर |
| ३१८ | २३ | (१)ज्ञायते | पाठान्तरं |
|  |  |  | पृ० ३१७ मध्ये द्रष्टव्यम् |
| ३२५ | १ | सुष्ठूक्तं | सुष्ठूक्तं |
| ३२९ | ४ | द्विनायमात्र | द्वितीयमात्र |
| ३३२ | ५ | ज्ञानोपक्षया | ज्ञानापेक्षया |
| ३३९ | १० | विषयत्वं रूप | विषयत्वरूप |
| ३५५ | ४ | संसारबन्धा | संसारबन्धो |
| ३६४ | २२ | तदनुरूपणि | तदनुरूपाणि |
| ३६८ | ८ | न्द्रिन्तयार | न्द्रियान्तर |
| ३६९ | ८ | तत्संाक्रान्तं | तत्संक्रान्तं |



